भाई एकाश्रमस्थ हैं, इनके भरण-पोषण तथा आश्रमस्थ बच्चों के उपनयन-विवाहादि संस्कार के बाद जो कुछ भी अर्जन से बच पायेगा वही धन मेरे उत्तर साधक को मिल पायेगा।' तीन भतीजियों का विभवानुरूप विवाह-गौना तथा अपने तीन पुत्रों का उपनयन विवाहादि सम्पन्न कराकर आश्रमस्थ व्यक्तियों का भोजनाच्छादन एवं चिकित्सा-सुविधा आदि के उपरान्त आप लगभग आठ एकड़ भू-सम्पत्ति, व्यवस्थित आवास तथा अपने पैर पर खड़ा होने की योग्यता उत्तराधिकारी पुत्रों को दाय रूप में दे गये। खेती में प्रोत्साहन हेतु न केवल बैल एवं बीज आदि हेतु द्रव्य देकर आश्रमस्थ भाइयों को उस ओर प्रवृत्त करते रहे अपि तु अपने खेत में इन लोगों के द्वारा उपजाये गये अन्न का आधा हिस्सा उनका बटाईदारी मानकर उसे रुपयों से खरीद लेते थे। इसमें दो भाव आपके निहित रहते थे। एक तो इस रुपये के लोभ से ये लोग अधिक खेतों में स्वयं अन्न उपजावेंगे और दूसरा यह कि इन लोगों को व्यक्तिगत खर्च में इससे सहाय्य मिलेगा।

आप यदा-कदा वार्ता-क्रम में सुनाया करते थे—'या लोकद्वयसाधनी चतुरता सा चातुरी चातुरी'। इस पद्य के आशय को आपने अपने जीवन में व्यवहार में भी लाया था। तपस् और स्वाध्याय के अविरोध से ही आप आजीवन अर्थोपार्जन में लगे रहे। आज आपकी उस तपःसाधना का ही सुफल है कि आपकी सन्तति उन्नतिपथारूढ है। आप अपनी साधना अपने अध्यवसाय एवं कठोर परिश्रम के साथ चारित्रिक दृढ़ता से सम्पूर्ण परिवार को ही ऊपर उठाने के लिए आजीवन तत्पर रहे। इस तरह आपको 'एको गोत्रे स भवति पुमान् यः कुटुम्बं बिभर्ति' का उदाहरण माना जा सकता है। 'अयाचितं मधु' बिना याचना के जो मिले वह अमृत है—इस सूक्ति के अनुसार आप सदा यदृच्छा-लाभ से सन्तुष्ट रहे तथा अधिकतर कहा करते थे कि भाग्य से अधिक मिलता नहीं है। 'हानि-लाभ, जीवन-मरण, यश-अपयश विधि हाथ' गोस्वामी तुलसीदास के इस वचन में आपका अटूट विश्वास था। आपका एक और मन्त्र था जीवन-यापन के प्रसंग में 'वृत्त्यर्थं नातिचेष्टेत'।

जीवन के अन्तिम समय में आप काशीवास की इच्छा रखते थे। संस्थागत जीविका के अभाव में आपके पास भविष्य-निधि के रूप में कुछ भी संचित नहीं था। माउण्ट आबू निवासी जैनधर्मावलम्बी अपने एक प्रिय शिष्य देवाजी से कथाप्रसङ्गवश चर्चा करने पर उन्होंने सन् १९५१ ई० के मध्य आपके नाम से पोस्ट आफिस में खाता खोलवाकर काशीवास हेतु पाँच सहस्र रुपये जमा करवा दिये थे। पश्चात् यह रुपया आकस्मिक रूप से मुकदमे में खर्च हो गया, संचित नहीं रह सका। अन्त समय में रीगा (सीतामढ़ी) निवासी मित्रशिष्य (आपके मित्र बटुरीवासी हरिनाथ मिश्र के शिष्य) सहृदय पण्डित एवं श्रीमान् बाबू रुक्मिणीरमण सिंह की अनुशंसा तथा इन्हीं के द्वारा आपके वैदुष्य का परिचय पाकर अन्ताराष्ट्रीय लब्धप्रतिष्ठ विद्वद्वरेण्य डा० रामकरण शर्मा ने ७३ ई० से ८५ ई० तक भारत सरकार से पहले १५० रु० प्रतिमास पश्चात् २५० रु० मासिक अनुदान दिलाकर आपको कृतार्थ किया था। कुछ दिनों (लगभग ५-६ माहों) तक आपने एकाकी काशीवास किया। पश्चात् गिरते हुए स्वास्थ्य को देखकर तथा एकाकी रहना इस उमर में असंभव समझकर तीर्थराज प्रयाग में कनिष्ठ पुत्र के सेवारत रहने से वहीं सन् ७५ ई० से ८० ई० तक रहकर शास्त्रचर्चा में तथा धर्मानुष्ठान में लगे रहे। गङ्गादशहरा आदि पर्व के अवसर पर गङ्गास्नान हेतु पुत्र और पौत्र के साथ त्रिवेणी तट जाते समय बहुधा आप कहा करते थे कि 'आज मैं तीन पीढ़ी से गङ्गास्नान करूँगा।' पश्चात् बड़े पौत्र के शिक्षार्थ उसके आग्रह पर आप सन् ८१ ई० में गाँव चले आये और यहीं रहकर (फाल्गुन शुक्ल चतुर्दशी, ६.३.८५ को) शिवसायुज्य प्राप्त किया।

१९५५ ई० में आपके सान्निध्य में राजनगर के निकटवर्ती बलहा ग्राम के श्री नित्यानन्द झा जी मुम्बई आये। आरम्भिक समय में आपका वात्सल्य उनको पुष्कल मात्रा में मिला था। पश्चात् अनुग्रहपूर्वक आपने उनको इष्ट-मन्त्र की दीक्षा भी दी तथा निरन्तर व्यावहारिक शिक्षा देते हुए अभिभावक-संरक्षक बने रहे। उनके घर पर भी आप कभी-कभी जाकर उनको कृतार्थ करते थे। उन्होंने आपके आशीर्वाद से तथा पूर्वजन्मार्जित पुण्य से श्री हनुमानजी की सेवा कर पर्याप्त धन अर्जित करने का सौभाग्य पाया। पश्चात् आपके जीवन-काल में भी भक्ति एवं दाक्षिण्य का प्रदर्शन किया और आपके स्वर्गवास की सूचना पाकर मुम्बई से मिथिला आये तथा कई सहस्रों की भोज्य सामग्री आपके श्राद्ध के समय ब्राह्मण-भोजन में लगायी और पुत्रोपम कृत्य कर सन्तुष्ट हुए। आज भी गुरु की सन्ततियों से उनकी घनिष्ठ मैत्री बनी हुई है।

आपके मिथिला में नहीं रहने से न तो यहाँ पाण्डित्य-प्रयुक्त कीर्ति का अपेक्षित प्रसार हुआ और न तो मैथिल शिष्य ही अधिक हुए। ग्रीष्मावकाश में आपके घर आने पर पण्डित बदरीनाथ झा आपके अनुज ( चचेरे भाई ) आपसे *वेदान्तपरिभाषा, सांख्यतत्त्वकौमुदी, तर्कभाषा* आदि पढ़ा करते थे। पण्डित मणिनाथ झा ( पाहीटोल ) अवसर पाकर घर पर व्याकरण के परिष्कार का चिन्तन करते थे। अपने कनिष्ठ पुत्र किशोरनाथ झा को अपने साथ मुम्बई में चार वर्षों तक रखकर आपने न्याय-विद्या की शिक्षा दी। जीवन के अन्तकाल में बड़े पौत्र डा० उदयनाथ झा को भी आपने पढ़ाया।

आपको सन् ७२ ई० में भारती परिषद् प्रयाग ने महरैलवासी वैयाकरण श्रेष्ठ पण्डित कलानाथ झा तथा अन्य विभिन्न प्रान्तीय नौ विद्वानों के साथ 'महामहिमोपाध्याय' की साम्मानिक पदवी देकर अलङ्कृत किया तथा सन् ८४ ई० में चेतना समिति ने सम्मानित कर ताम्रपत्र तथा शाल आदि दिया।

अपने जीवन-काल में आपने पाँच पौत्रों का उपनयन-संस्कार, एक पौत्र एवं दो पौत्रियों का विवाह-द्विरागमन आदि संस्कार कराकर अपने पुत्र के कर्त्तव्यों का भी सम्पादन कर उनका भार हलका किया।

आज आपके परोक्ष में बड़ा पुत्र डा० गङ्गानाथ झा महारानी कल्याणी संस्कृत महाविद्यालय दीप ( मधुबनी ) में साहित्य के प्राध्यापक हैं, कनिष्ठ पुत्र डा० किशोरनाथ झा गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ इलाहाबाद में प्रवाचक पद पर आसीन होकर न्याय, मीमांसा तथा शाक्ततन्त्र के ग्रन्थों का सम्पादन कर प्रतिष्ठित हैं। बड़े पौत्र डा० उदयनाथ झा सदाशिव केन्द्रीय संस्कृत विद्यापीठ पुरी में साहित्य के प्राध्यापक हैं। एक पौत्र श्री प्रियनाथ झा मेकेनिकल ब्रांच से इन्जीनियरिङ्ग में स्नातक उपाधि प्राप्त कर डिफेन्स रिसर्च डेवलपमेण्ट औरगेनाइजेसन ( डी० आर० डी० ओ० ) में साइन्टिस्ट 'डी' पद पर कार्यरत हैं। एक पौत्र श्री अजयनाथ झा लखनऊ में स्थायी आवास की स्वयं व्यवस्था कर विक्रयकर विभाग में सहायक पद पर कार्य कर रहे हैं। चतुर्थ पौत्र श्री ज्ञाननाथ झा गोविन्दवल्लभ पन्त के नाम से विख्यात समाजशास्त्र की अनुसन्धान संस्था झूँसी, इलाहबाद में किसी योजनाबद्ध शोधकार्य ( प्रोजेक्ट वर्क ) से सम्बद्ध है। पञ्चम पौत्र श्रीशेखर झा स्नातक उपाधि प्राप्त कर जीविका के अन्वेषण में विविध प्रतियोगिताओं की तैयारी में संलग्न है। आपके पौत्री-पतियों में एक खण्डवला-कुलभूषण स्वर्गीय पण्डित जीवानन्द ठाकुर ( सर्वसीमा ) के सुपुत्र श्री राजेन्द्र ठाकुर दरभंगा संस्कृत विश्वविद्यालय के पुस्तकालय-विभाग में सेवारत हैं। अपर महाकवि गोविन्ददास के वंशधर सरिसव ग्रामवासी स्व० पण्डित लीलाकर झा के द्वितीय पुत्र डा० भक्तिकर झा संस्कृत में प्रथम श्रेणी में एम० ए० और पी-एच० डी० करके मुम्बई में जीविकापन्न हैं और तृतीय प्रो० उग्रनाथ झा

( धर्मपुर ग्रामवासी ) के प्रथम पुत्र श्रीरेवानाथ झा सिविल इन्जीनियरिङ्ग में स्नातक उपाधि प्राप्त कर एच०एम०जी० प्राइवेट लिमिटेड मुम्बई में सीनियर इन्जीनियर पद कर कार्य कर रहे हैं। आपकी पौत्रियाँ भी स्नातक उपाधि प्राप्त कर अपना-अपना घर-गृहस्थी सम्भाल रही हैं और कनिष्ठ पुत्रवधू मैथिली में ल०ना० मिथिला विश्वविद्यालय से बी० ए० ऑनर्स तथा एम०ए० में प्रथम स्थान प्राप्त कर पी-एच० डी० पदवी भी प्राप्त की है। घर-गृहस्थी सम्भालती हुई कथा-लेखन तथा कविता-निर्माण स्वान्तःसुखाय करती रहती है, जो प्रकाशित हैं। मैथिली साहित्यकारों में इन्होंने अपना अच्छा-खासा स्थान बना लिया है। मैथिली में एक अपना कथा-संग्रह *धार पियासल*, एक कविता संग्रह *आगत क्षणले* तथा सम्पादित स्वातन्त्र्योत्तर मैथिली के प्रतिनिधि कथाओं का संग्रह भी *मैथिलीकथाधारा* नाम से आपकी प्रकाशित है। अनेक शोध-निबन्ध अभिनन्दन-ग्रन्थों तथा अनुसन्धान-पत्रिकाओं में यदा-कदा प्रकाशित होते रहे हैं। आपके अन्य दो पौत्रों की पत्नी भी समाजशास्त्र तथा संस्कृत में एम० ए० की पदवी पाकर अपनी गृहस्थी सम्हाल रही हैं। आपके पौत्र एवं पौत्रियों की १४-१५ सन्ततियाँ आज वर्धमान-वर्तमान हैं।

इन पंक्तियों का लेखक आपसे *न्यायसिद्धान्तमुक्तावली* अवकाश के दिनों में बम्बई में ५३ से ५५ ई० तक पढ़ता रहा है। अतएव आपका नितान्त वात्सल्य भाजन रहा है। **[ इति ]**

# भक्तिपद्यप्रसूनाञ्जलिः

□ **श्रीकृष्णदत्त शर्मा शास्त्री**

श्रीशारदा विघ्नहरो गणेशश्चन्द्रार्धचूडः शमदो महेशः।
गुरुः कृपालुः पितरौ च वन्द्यौ भवन्तु सर्वे मम मङ्गलाय ॥
श्रीशारदापादसरोरुहालिः प्रज्ञाधनो ज्ञानवतां वरेण्यः।
सद्धर्मशास्त्रार्थमहारथी यः श्रीमाधवोऽसौ भवतु प्रसन्नः॥ १॥

विशुद्धचित्ताः शुभकर्मलीनाः सँल्लब्धविद्याविगतप्रमादाः।
सुधीवरा ज्ञानधना गुणज्ञाः सच्छास्त्रविज्ञाः सुयशो लभन्ते॥ २॥

महाजनानां शुभपुण्यभाजां यशोधनानां गुणशालिनां च।
महापवित्रं चरितं विशुद्धमाह्लादयत्यत्र न कस्य चित्तम्॥ ३॥

विद्यावतां ज्ञानवतां सुधीनां शास्त्रार्थरत्नाकरपारगानाम्।
सत्कीर्तिभाजां विमलं पवित्रं यशो ह्यजय्यं भुवि राजतेऽत्र॥ ४॥

विद्वद्वराणां गुणकीर्तनं तु लोकस्य पापानि तथा हिनस्ति।
भानुर्यथोदेत्य महाप्रगाढं प्रबाधते शार्वरमन्धकारम्॥ ५॥

येषां महापुण्यभृतां चरित्रं यशोविशुद्धं च महाप्रशस्यम्।
गृणन्ति लोका विगतप्रमादास्ते **'कर्महा' वंशज** वत्सगोत्राः॥ ६॥

नैयायिका दार्शनिका विशुद्धा
ज्योतिर्विदः पण्डितचक्रमुख्याः।
कवीश्वराः शास्त्रविदां वरेण्या
वन्द्यं कुलं तद् यदिमे प्रजाताः॥ ७॥

प्रचण्डमार्तण्डसमं तपन्तं वंशं विशुद्धं निजकृत्यशुभ्रम्।
'झा' इत्युपाख्यः समलञ्चकार विद्वद्वरः पण्डित**हेमदत्तः**॥ ८॥

श्रीहेमदत्तस्य सुतस्य साध्वी, **भागेश्वरी**नामधरा सुभार्या।
पुत्रं तथाऽसूत यथा हि गौरी सेनानिनं पुत्रमसूत विज्ञम्॥ ९॥

एकोनविंशतिपूर्वे, पञ्चपञ्चाशदुत्तरे।
वर्षे, चैत्रे, शुभे शुक्ले, यदासीत् प्रथमा तिथिः॥ १०॥

तदा श्री **बुद्धिनाथस्य** पुत्रो मातामहगृहे।
जन्मावाप्याभवत्प्रेयान् पित्रोर्मातामहस्य च॥ ११॥

मुमुदाते पिता माता, दृष्ट्वा वंशप्रवर्धकम्।
**कृष्णमाधव**इत्याख्यां पुत्रस्य कृतवान् पिता॥ १२॥

सन्न्यायशास्त्रोदधिपारदृश्वा
साहित्यविद्यानिपुणो मनीषी।
श्री बुद्धिनाथस्य सुतः सुशीलो
बभूव कृष्णः खलु माधवाख्यः॥ १३॥

प्रदेशो भारते देशे, विहार इति संज्ञकः।
तत्रैव दरभंगाख्य आसीद् जनपदो महान्॥ १४॥

तस्मिञ्जनपदे ह्यासीद् ग्रामो **विट्ठो** इति श्रुतः।
विप्रैर्ज्ञानधनैः पुण्यैरुपाध्यायैर्निसेवितः॥ १५॥

**लक्ष्मीनाथो** गुरुर्विज्ञो, बालकं कृष्णमाधवम्।
द्विजत्वं प्रापयामास, ह्युपनीय यथाविधि॥ १६॥

तत्रत्य 'झा' उपाख्योऽसौ, बालकः कृष्णमाधवः।
यथाकालं गतः प्राप्तुं शिक्षाः सर्वा गुरोर्गृहम्॥ १७॥

विद्यागृहं प्राप्य स हंसतीर्थः प्रसादयामास गुरून् सुविज्ञान्।
स्वज्ञानसेवाव्रतभक्तिभावैर्बुद्धिप्रभावेण परिश्रमेण॥ १८॥

न्यायं तथा व्याकरणं च वेदान् पपाठ वेदान्तनिगूढतत्त्वम्।
गुरोः प्रसादात् स तु वंशबुद्धिर्जग्राह विद्याः सकला अभीष्टाः॥ १९॥

सर्वाः परीक्षाः स कुशाग्रबुद्धिः प्रज्ञाबलेनैव समुत्ततार।
सर्वत्र लेभे प्रथमं पदं च यथा नवाङ्को हि सदा नवैव॥ २०॥

वेदान्तविद् व्याकरणे प्रवीणः
सन्न्यायशास्त्रे नितरां नदीष्णः।
अधीत्य शास्त्राणि च दर्शनानि
सारस्वतोऽभूत् गुणिनां गरिष्ठः॥ २१॥

यां यां परीक्षां किल दत्तवान् स श्रेणीं तु तत्र प्रथमामवाप।
'आचार्य'संज्ञां नितरां प्रशस्यामालभ्य लोके प्रथितो बभूव॥ २२॥

अधीतविद्यो विदुषां वरेण्यः
सौम्यः सुशीलो युवको विनम्रः।
श्री **तारिणी**नामवतीं कुलीनां
श्यामां सुकन्यां विदधौ स्वपत्नीम्॥ २३॥

दुर्दैवयोगाद् युवकस्य भार्या, कालस्य दृग्गोचरतामवाप।
प्रियं स्वकं प्राणधनं ह्यकाण्डे हित्वा दिवं सा सहसा प्रपेदे॥ २४॥

अज्ञातपुत्रोद्भवमोदचित्ता, वर्षान्तराले सुरलोकमाप।
तस्यां गतायां विधुरः स कृष्णो वर्षद्वयान्ते ह्यभवत् सदारः॥ २५॥

समागता या गृहिणी द्वितीया सा चापि सौम्या मृदुलस्वभावा।
श्री **तारिणी**नामधरा कुलीना चासीत् सुपुत्री बुधदण्डपाणेः॥ २६॥

साऽसूत पुत्राँश्चतुरो गुणज्ञान्,
सुधीवरान् ज्ञानधनान् सुविज्ञान्।
तेष्वेकपुत्रः **सुखदेव** नामा
स्वबाल्यकाले त्रिदिवं जगाम॥ २७॥

आद्यः सुतः श्री**गुणनाथ**संज्ञः,
पुत्रो द्वितीयः **सुखदेव**झा'ख्यः।
**गङ्गापति**र्नामधरस्तृतीयः
**किशोरनाथ**स्तनयस्तुरीयः॥ २८॥

अधीतशास्त्रास्तु समे विनम्राः सारस्वतास्ते गुणदोषविज्ञाः।
गुणैर्विशिष्टैर्जनकेन तुल्याः त्रयो बभूवुर्जगति प्रसिद्धाः॥ २९॥

स्वमातृतुल्यामभिवन्दनीयां मान्यां नमस्यां नरदेववन्द्याम्।
गीर्वाणवाणीं समुदं समे ते निषेविरे सर्वविधं च देशम्॥ ३०॥

विद्याः समस्ताः समधीत्य सम्यग्
शिक्षां समाप्यात्र स कृष्णसंज्ञः।
स्वजीविकोपार्जनसाधनाय,
अध्यापकत्वं ववृणे पवित्रम्॥ ३१॥

मत्वा तदाध्यापनमेव पुण्यम्, समुद्यतोऽभूज्जनशिक्षणाय।
वाराणसीं प्राप्य पुरीं भवस्य वृत्तिं ह्यवाप्तुं स बभूव यत्नवान्॥ ३२॥

आजीवनं ज्ञानधनः स 'झा'ख्यः
सम्पादयामास च पुण्यकृत्यम्।
अध्यापनाद्वै अभवन्न मत्तः,
तस्थौ सदा कर्मणि दत्तचित्तः॥ ३३॥

श्रीविश्वनाथस्य पुरीं प्रसिद्धां
निषेव्य काशीं गतवाँस्ततोऽसौ।
मुम्बेतिदेवीनगरीं मुदा यां
दिवानिशं रक्षति खड्गहस्ता॥ ३४॥

संस्थास्वनेकास्वपि तत्र 'झा'ख्यो
विद्वद्वरेण्यः सुरभारतीज्ञः।
अध्यापयामास स शिष्यवर्गं
वेदान्त-न्यायादिक-दर्शनानि ॥ ३५॥

सेवानिवृत्तो बहुमानपन्नः समादृतोऽभूद् विदुषां वरेण्यैः।
प्रत्यागतः शङ्करवासभूमिं काशीति नाम्ना भुवने प्रसिद्धाम्॥ ३६॥

वार्धक्यकाले निजजीवनस्य, कनिष्ठपुत्रस्य गृहे प्रयागे।
निषेवितस्तेन तु तीर्थराजः पुण्यप्रदः पूततमः प्रसिद्धः॥ ३७॥

देशस्य सर्वोच्चिपदाधिरूढैः
सारस्वतैर्ज्ञानधनैः प्रबुद्धैः।
सम्भ्रान्तसंस्थाभिरनेकवारम्
अलंकृतोऽभूत् स उपाधिभिश्च॥ ३८॥

'विद्वच्छिरोमणिः' श्रेष्ठः 'पण्डितरत्न'मेव च।
'शास्त्ररत्नाकर'श्चापि 'न्यायरत्नं' तथापि वै॥ ३९॥

'सर्वतन्त्रस्वतन्त्रो'ऽपि 'महोपाध्याय' एव च।
उपाधिभिरनेकैस्तु स एवैको विभूषितः॥ ४०॥

यत्रापि कुत्रापि गतः स वाग्मी
समादृतोऽभूत् स्वजनैः परैश्च।
येनापि केनापि जनेन दृष्टः
श्रुतोऽथवा तस्य जहार चित्तम्॥ ४१॥

सम्मेलनानां विदुषां मनीषी विद्वत्सभानां च स माधवाख्यः।
अध्यक्षपीठं बहुमानपन्नम् अनेकवारं समलञ्चकार॥ ४२॥

शास्त्रार्थसंग्राममहारथी स
तर्कैरकाट्यैर्धिषणाबलेन ।
अनेकवारं बहुशास्त्रविज्ञान्
म्लानाननाँस्तानकरोद् बलाद् वै॥ ४३॥

वैदुष्यपूर्णा ललिता गरिष्ठा लेखा अनेके लिखिता निबन्धाः।
दुरूहकाव्यान्यपि माधवेन, व्याख्यायि मन्ये प्रतिभाबलेन॥४४॥

काव्यग्रन्थास्तथा चान्ये, गद्यग्रन्था महोत्तमाः।
सुरवाणीं समाश्रित्य, रचितास्तेन शोभनाः॥४५॥

टीकिताश्चापि ये ग्रन्थास् ते नासन् सरलाः शुभाः।
बोधगम्याः कृताः सर्वे, तेन सुधीवरेण तु॥४६॥

**महेशझा**ख्यो, **हरिनाथ**मिश्रः
श्री**आशुतोष**श्च **सतीन्द्रनाथः**।
**पद्मप्रसादः** किल चापरेऽपि,
कृष्णस्य ह्यासन् सहपाठिनस्तु॥४७॥

श्री**कृष्णजीवनः** श्रेष्ठगोस्वामी **दीक्षितः** सुधीः।
**माधवो नरसिंह**श्च **आत्मारामो दुबे** तथा॥४८॥

**मुकुन्द**श्चापि **शत्रुघ्नो मतिनाथा**दयोऽपरे।
प्रमुखास्तस्य शिष्या ये, ते विस्तेरुर्गुरोर्यशः॥४९॥

स्वजीवनस्यार्कसमाप्तिकाले
हित्वा प्रयागं स गतः स्वगेहम्।
तत्रैव विज्ञो निवसन् प्रवृद्धः
प्रभुं महेशं मनसा जजाप॥५०॥

बाणवसुनिधिब्रह्मसंयुते ख्रीष्टवत्सरे (१९८५)।
फाल्गुने शुक्लपक्षे तु तिथिरासीच्चतुर्दशी॥५१॥

सप्ताशीतितमे वर्षे, मनस्वी ज्ञानभास्करः।
दिवंगतो विहायात्र शरीरं पाञ्चभौतिकम्॥५२॥

यथा निशान्ते, रजनीमुखे च
सद्धर्मनिष्ठाः प्रणमन्ति भानुम्।
तथैव साहित्यरविं तु 'झा'ख्यं
प्रणौति भक्त्या कविकृष्णदत्तः॥५३॥

**[ इति ]**

## विदिद्युतिरे दिगन्ताः !

□ कृष्णानन्द झा

सन्नीतिभीतिरहितं चरितं पवित्रं विद्याऽनवद्यगुणसंहतिसाधुमित्रम्।
ज्ञानं प्रशस्तकुलसम्भवशुद्धिशालि **हे कृष्णमाधव**! भवत्यभयं न्यभालि॥

सारस्वतामृतमहोदधिनिर्विशेषः, आसीन्मुदोत्तरलितो मिथिलाप्रदेशः।
विद्याविशारद! भवत्यतिनिष्कलङ्के दिष्ट्या समोदमुदितेऽभिनवे शशाङ्के॥

विष्वग्विसारिभवदुज्ज्वलकान्तिकीर्त्तिज्योत्स्नाकरव्यतिकर[1]व्यपनीतखेदाः ।
प्राङ्म्लानमाननमवाङ्मुखमावहन्तः सारस्वताः किल विदिद्युतिरे दिगन्ताः॥

श्रीशङ्करेण गुरुणाऽखिलदर्शनज्ञसत्सार्वभौमविरुदेन विभूषिताऽत्र।
न्यायादिदर्शनविमर्शपथप्रगल्भा ज्योतिष्मती मतिरभूद्भवतोऽतिशस्ता॥

ख्याता बभूव मतिरप्रतिमा च भूयो गूढाशया हि पदशास्त्रपथे तथैव।
राजन्ति येन खलु *तत्त्वप्रकाशिका*द्या हृद्या भवद्विवृतयः कृतयः सुधीषु॥

तर्कादिकर्कशपथप्रथिताऽपि ते धीः साहित्यवर्त्म समलङ्कुरुते समानम्।
गङ्गाधरादिकृतिसद्विवृतिर्विभिन्नाऽऽलङ्कारिकेषु विदितैव हि सुप्रसन्ना॥

इत्थं समस्तनिगमागमधूर्वहा धीर्धीरान् करोत्युपकृतान् भवतोऽधुनापि।
हे कीर्त्तिमण्डित! सुपण्डितपूज्य! सर्वतन्त्रस्वतन्त्र! कविताञ्जलिरेष तुभ्यम्॥

[ इति ]

---

१. सम्बन्धः।

# श्रद्धाञ्जलिः

□ **उमारमण झा**

विविधविद्याविद्योतितान्तःकरणानां प्राचीननव्यन्यायमर्मज्ञानां विचाराचारनिष्ठानां न्यायशास्त्रधुरन्धराणां वैयाकरणमूर्धन्यानां महामहिमोपाध्याय **पं० कृष्णमाधवझा**शर्मणां जन्मशताब्दावसरे श्रद्धाञ्जलिः।

(१)

न्याये दिव्यविचारको बुधवरः सच्छ्रोत्रियो मैथिलो
नानाशास्त्रविचक्षणो मतिमतां श्रेष्ठश्च वन्द्यस्तथा।
विद्यावान् विनयी नितान्तसरलो भक्तिं वहन् माधवे,
पूज्यः श्रीयुत**कृष्णमाधव**गुरुनकिऽधुनाध्यापकः॥

(२)

साहित्येऽतिधुरन्धरो बुधवरस्तन्त्रेषु मन्त्रेषु च
शास्त्रग्रन्थनिबन्धलेखनपटुर्वक्ता विपश्चिद्वरः।
आबाल्याच्छ्रुतिमार्गधर्मचरणान्मान्यः सतामग्रणीः
कालेनाऽसमये हठात्कवलितः सच्छ्रोत्रियो धार्मिकः॥

(३)

धर्माचारादियुक्ते द्विजमहितकुले श्रोत्रिये प्राज्ञपूर्णे
जातः संस्कारयुक्तः सहजबुधगणैर्मण्डितश्चारुदेहः।
स्वाध्याये तीक्ष्णबुद्धिर्गुणगणमहितो लोकमान्यो वरेण्यः
पायादस्मानपायात् प्रथितगुणचयो माधवः कृष्णयुक्तः॥

(४)

शिष्या यस्य शताधिका भुवि सदा गायन्ति कीर्तिं गुरो-
**र्गङ्गानाथ-किशोरनाथ**तनयौ यस्याग्रगण्यावुभौ।
हा पूज्यो धरणीतलाद् बत गतो विज्ञो महापण्डितो
मान्यः श्रीयुतकृष्णमाधवगुरुः स्वर्गेऽधुना गीयते॥

(५)

पूज्याय न्यायविज्ञाय कृष्णमाधवरूपिणे।
समर्प्यतेऽद्य वाक्पुष्प**मुमारमणशर्मणा**॥

**[ इति ]**

# महामहिमोपाध्यायपण्डितकृष्णमाधवझामहानुभावानां संस्मरणद्वयम्

□ १. तारिणीश झा, २. आद्याचरण झा

(१)

प्रातःस्मरणीयानां स्वनामधन्यानां पुण्यात्मनां दुष्कालेऽपि कलिकाले न्यायव्याकरणयोस्तत्त्वावगाहिविद्वच्चराणां महामहिमोपाध्यायानां प० **कृष्णमाधवझा** महाभागानां दर्शनकालिकमूर्तिं स्मारं स्मारं नमामि।

प्रायः पञ्चविंशवर्षाणि पूर्वं प्रयागनिवासाय दारागंजस्थजगन्नाथमन्दिरं समुपागतानां महामहिमोपाध्यायानां दर्शनं डॉ० किशोरनाथझामहोदयस्य सौजन्येन मयाऽलम्भि। तदानीं स्वयंपाकित्वात् पाककर्मणि व्यापृतं श्रद्धेयं विद्वद्वरं दूरादेवाहं प्रणम्यातिष्ठम्। डॉ० किशोरनाथो मम नामग्राहं परिचयमदत्त। तच्छ्रुत्वा महोदारो बुधवरो मामाहूय स्वसविधे एवोपावेशयत्। तदाहं 'भावस्थिराणि जननान्तरसौहृदानि' (५।२) इत्यभिज्ञानशाकुन्तलीयं वाक्यं सत्यमेवामन्ये। कियत्कालं मिथो वार्तालापचक्रं चलितम्। भोजनवेलातिक्रमणं दृष्ट्वाऽहं प्रणतिपुरस्सरं क्षमाप्रार्थनां कृत्वा ततः प्रस्थितः पुनरागमनाय।

ततो गच्छति काले कियद्दिवसानन्तरं श्रीकिशोरनाथः पितुरस्वास्थ्यवशात्तं जगन्नाथमन्दिरान्नीत्वा स्वावासे न्यवासयत्। तत्राहं प्रायः प्रतिसप्ताहं यामि स्म। तद्दिने भर्तृहरेर्नीतिशतकस्य मत्कृता टीका मुद्रिताऽसीत्। सा च श्रीकिशोरनाथस्य गृहेऽविद्यत। महामहिमोपाध्यायस्तत्पुस्तकं सरुचि पठन्नभूत्। तदुपान्तं गते मयि नैयायिकप्रवरस्तत्पुस्तकं प्रशस्य ममोत्साहं प्रावर्धयत्।

यदा-कदा तत्सान्निध्ये शास्त्रचर्चा लोकवार्ता च अभवताम्। एकदा स आचार्यमधुसूदनसरस्वत्याः अद्वैतसिद्धिग्रन्थस्य प्रारम्भिकं निम्नश्लोकम्—

**ईश्वरानुग्रहादेषा पुंसामद्वैतवासना। महाभयकृतत्राणा द्वित्राणां यदि जायते॥**

इति मत्तः श्रुत्वा भृशममाद्यत्। यतो हि स नैयायिकोऽपि सन् अद्वैतवेदान्तानुरागी आसीत्। अनन्तरं दाक्षिणात्यविदुषां शङ्कराचार्याणां च सम्बन्धे स बह्वीं श्रेयस्करीं वार्तां मां श्रावयित्वाऽऽह्लादयाञ्चकार।

पुनः कतिपयदिवसानन्तरं बुधवरोऽस्वस्थः संवृत्तः। तस्मिन्नपि समये श्रीकिशोरनाथः स्वावासं परिवर्तितवान्। तत्राहं सम्मान्यं विद्वांसं द्रष्टुमगच्छम्। किन्तु हा धिक् विधिविडम्बनाम्। विद्वन्मूर्धन्यानां वाचि परिवर्तनं जातम् स्मृतिभ्रंशदोषकारणात्। स्वग्रामं गन्तुं हठं प्रारभत विद्वच्छिरोमणिर्मनीषी। वैवश्येन दुःखी श्रीकिशोरनाथो जनकं स्वजन्मभूमिं प्रापयामास। तत्राप्यस्वस्थता नाभावं प्राप्ता। कतिपयदिवसानन्तरमेव दुर्दान्तकालस्तमितो नीत्वा मिथिलामहीं प्रकाण्डन्यायपण्डितेनानाथां विधाय सुरलोकं तेन सनाथं चकार। यदा मया धीधनस्य महामहिमोपाध्यायस्य निधनमाकर्णितं तदा, स्व० महामहोपाध्याय पं० बालकृष्णमिश्रमहाभागमुखाच्छ्रुत्वा तच्छिष्येण स्वामिना सहजानन्दसरस्वतीमहाशयेन नैजे'कर्मकलाप'नाम्नि पुस्तके लिखितोऽयं निम्नोक्तः श्लोकः हठान्मम स्मृतिपथमायातः—

**प्रेमैव मास्तु यदि चेत्पथिकेन नैव, तेनापि चेद्गुणवता न समं कदापि।**
**तेनापि चेद् भवतु मास्तु कदापि भङ्गो भङ्गोऽपि चेद् भवतु वश्यमवश्यमायुः॥**

एभिः शब्दैः, दिव्यलोकवासिने प० कृष्णमाधवशर्मणे सप्रणति श्रद्धाकुसुमाञ्जलिः समर्प्यते। **[इति]**

## ( २ )

१. समयोऽयं १९३५ ई० तः १९४० ई० मध्यस्य। तदाऽहं मधुबनीसंस्कृतविद्यालयस्य च्छात्र आसम्। तत्र मम प्रातःस्मरणीयानां गुरुचरणानामायासेनानेकाः पण्डितसभाः समायोजिताः। तासु सभासु व्यवस्थासम्बन्धिनी मदीया सेवाऽप्यासीत्।

२. पण्डित-सभासु म० वै० दीनबन्धुझा, पण्डित त्रिलोकनाथमिश्र, पण्डित ईश्वरनाथझा, कविशेखर बदरीनाथझा, पण्डित ऋद्धिनाथझा, पण्डित दयानाथझा, पण्डित दामोदरमिश्र सहिताः राजपण्डित बलदेवमिश्रप्रभृतयः समुपस्थिताः भवन्ति स्म। तत्र पण्डितश्रीकृष्णमाधवझा महाभागाः नैवोपस्थिताः अभूवन्। प्रायस्ते मिथिलाक्षेत्रात् बहिरासन्, इति भवितुमर्हति।

३. पण्डितप्रवरझामहाभागाः मम गुरुवर्याणां पण्डितप्रकाण्ड-व्याकरण-न्याय-वेदान्त-वनकेसरीणां नमोनारायणझाचरणानां समकालीनाः प्रायस्ततोऽपि वरीयांसः आसन् इति स्मर्यते। विद्वन्मूर्धन्य-पण्डित नमोनारायणझाचरणानां शिष्यत्वप्राप्तगौरवोऽयं लेखकः सर्वेषां विद्वत्तल्लजानां प्रियपात्रमासीत्। यतो हि उपर्युक्ताः प्रायः सर्वे विद्वांसः अकालकालकवलितस्य मम पितुः पण्डित ताराचरणझामहोदयस्य सहपाठिनः समवयस्काः एवासन्।

४. एतत्प्रकरणे पण्डितसमूहेभ्यः श्रुतं मया यदिमे पण्डितप्रवराः श्रीकृष्णमाधवझामहाभागाः गम्भीरतमाः वैयाकरणाः नैयायिकाश्च सन्ति। यद्यपि दर्शनसौभाग्येन वञ्चितोऽप्ययं जनः वैदुष्येन परिचित एवासीत्।

५. अध्ययनाध्यापनक्रमे व्याकरणशास्त्रे मम प्रियो विषयः 'स्फोटविचारः'। स्फोटप्रसंगे ममानेके निबन्धाः प्राच्यविद्यासम्मेलनेषु विश्वसंस्कृतसम्मेलने च पण्डितपरिषदि स्वीकृता मुद्रिताः सम्मानिताः पुरस्कृताश्च।

६. अधुना मदग्रे महामहोपाध्याय पण्डित शशिनाथझा महोदयानां 'सरला'टीकायुक्ता तथा पण्डितप्रवर कृष्णमाधवझामहाभागानां 'तत्त्वप्रकाशिका' टीकायुक्ता *परमलघुमञ्जूषा* वर्तते। *परमलघुमञ्जूषाया*मादौ 'स्फोटविचार' एव वर्तते। टीकाद्वययुक्तेऽस्मिन् पुस्तके कश्चित् पाठभेदो दृश्यते। भवतु नाम पाठभेदः। समग्र-स्फोटवादस्तु अग्र-पश्चाद्रूपेण समानतां भजते।

७. एतत् टीका-टिप्पणी मध्ये 'स्फोटवाद' विषये काचित् विशेषता मयाऽवलोक्यते। यत्र महामहो-पाध्यायचरणानां टिप्पण्यां स्फोटविवरणे मूलाधारप्रसङ्गे शास्त्रीयप्रमाणं वर्तते तत्र महावैयाकरण श्रीकृष्णमाधवझा महोदयस्य टीकायामेका टिप्पणी स्फोटविषयिणी राजते। या टिप्पणी मह्यं रोचते। अत्र मया सा टिप्पणी समुद्ध्रियते।

८. अत्रेदं स्पष्टं यदस्यायं न कदाप्याशयो यदुभयोष्टीकाटिप्पण्योर्मध्ये कोऽपि तुलनात्मको मम विचारः। ममाज्ञस्य कृते नेदं सम्भवम् नैव वा समीचीनमपि। केवलं स्वकीयप्रियविषये समुद्धरणमिदम्।

(क) महामहोपाध्यायाः कथयन्ति—'स्फुटति प्रकाशतेऽर्थोऽस्मादिति व्युत्पत्त्या स्फोटस्य ब्रह्मात्मकत्वं न तु तद्भिन्नत्वम्, तत्कल्पने गौरवात्।' अथ च 'चतुर्विधा वागस्ति' इत्यत्र मूलाधारस्य व्याख्यां कुर्वन्तो वदन्ति 'मूलाधारो हि षण्णवत्यङ्गुलिकस्य देहस्य अस्याष्टचत्वारिंशत्तममधस्तादुपरिष्टाच्च परित्यज्य मध्ये स्थितो भागः।' इत्यत्र प्रमाणमप्युद्धृतं महामहोपाध्यायेन। तत्रागम (तन्त्र) शास्त्रीयकुण्डलिनीतत्त्वसंकेतो विभाति।

(ख) अत्रैव पण्डितवर्याः श्रीकृष्णमाधवझा महाभागाः प्रतिपादयन्ति यथा—स्फोटविचारस्य प्राथम्ये किं बीजमिति चेत् शृणु 'वैयाकरणसिद्धान्तेषु ब्रह्मस्वरूपस्फोटप्रमितेरेव 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति श्रुत्या परमपुरुषार्थजनकत्वेन मुख्यत्वं नान्येषां तेषामिति द्योतनाय तथोक्तेः।'

(ग) अत्रैका टिप्पणी ब्रूते—'ननु घटपदात् पटविषयकबोधस्तदर्थनिरूपितशक्तिभेदं विनाऽनुपपन्न इति विभिन्नशक्तिमत्त्वेन स्फोटोऽपि नानाविध एवाङ्गीकार्य इति कथं ब्रह्मस्वरूपत्वमेतस्य। एकं ब्रह्मैवाद्वितीयमिति श्रुत्या द्वितीयरहितत्वसमानाधिकरणैकत्वस्य प्रतिपादनादिति चेत् शृणु–यदा मायाकृतो नरत्वपशुत्वादिभेदेनेश्वरभेदो व्यावहारिकस्तथैव कत्वाद्युपाधिना मायया च भेदेन प्रतीतः सन्नपि तस्य पारमार्थिकभेदासत्त्वेनादोषात्। यथा शुक्तिं रजतत्वेन जानन्नपि न शुक्तित्वं परिहापितुमीष्टे तथैव प्रकृतेऽपि। भागवतमपि 'शब्दे ब्रह्मणि निष्णातः परब्रह्माभिधीयते' इति 'अक्षरं परमं ब्रह्म विद्यादि'ति व्याकरणभाष्यमपि मदुक्तार्थेऽनुकूलमिति दिक्।'

९. एतेषां महनीयचरितानां सुयोग्यपुत्रेषु डॉ० किशोरनाथझा महोदयोऽन्यतमः यः स्वपैतृकीं परम्परां विद्वत्तां च पालयन् ममाशीर्भाजनमस्ति। अयं हि व्याकरण-न्याय-साहित्यशास्त्राणां गम्भीरचिन्ताशीलो लेखकः प्रख्यातग्रन्थानां सुसम्पादकः प्रयागमधिवसन् परिपूतो निरन्तरं शास्त्रसेवां कुरुते इति मत्कृते प्रमोदावहः।

१०. एभिः कियद्भिर्वाक्पुष्पैः श्रीकृष्णमाधवस्वरूपाय श्रीकृष्णमाधवझामहाभागाय सम्मानाञ्जलिं समर्पयति लेखकोऽयम्। [इति]

# पण्डितकृष्णमाधवशर्मणः कृति-समीक्षा संस्मरणञ्च

□ शोभाकान्त जयदेव झा

## सिद्धान्तलक्षणसुबोधिनी-समीक्षा

तर्ककाननविहरणपञ्चानन-नव्यन्यायप्रणयनप्रवीण-गङ्गेशोपाध्यायेन *तत्त्वचिन्तामणिर्*नव्यन्यायग्रन्थो विनिर्मितः। न्यायशास्त्रस्य प्रमाणशास्त्रतया तत्र 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति सूत्रं गौतमीयमाधारीकृत्य प्रत्यक्षानुमानोपमानशब्दखण्डचतुष्टयात्मकत्वेन प्रणीते *तत्त्वचिन्तामणि*ग्रन्थे 'अत्रोच्यते' इत्यादिना व्याप्तेः *सिद्धान्तलक्षणं* विरचितम्। तच्च रघुनाथशिरोमणिना, जगदीशतर्कालङ्कारेण, गदाधरभट्टाचार्येण, मथुरानाथतर्कवागीशेन च सर्वैर्वङ्गीयैर्नव्यनैयायिकैस्तथा पक्षधरमिश्र-यज्ञपत्युपाध्यायप्रभृतिभिर्मैथिलनैयायिकैश्च व्याख्यातं वर्तते। तत्रैव सर्वतन्त्रस्वतन्त्र-नैयायिकवर्य-धर्मदत्तझा महाशयेन विवेचनक्रमे *गूढार्थतत्त्वालोक*नामा ग्रन्थो लिखितो वर्तते। तत्र प्रतिभाप्रवीणनव्यन्यायपारदृश्वना कृष्णमाधवझाशर्मणा *सिद्धान्तलक्षणसुबोधिनी* व्याख्या स्वीया निर्मिता विद्यते। विवेचनायां तार्किकपद्धतौ ग्रन्थलापने तात्पर्यं न भवति, अपि तु पदार्थानां परिस्फोरणे। अतः *सिद्धान्तलक्षणतत्त्वालोको* यं विषयं समासादयते तमेव विषयं समासाद्य पं० श्रीकृष्णमाधवझा महाशयस्य *सिद्धान्तलक्षणसुबोधिनी* कामपि नूतनां युक्तियुक्तां समीचीनां व्याख्यां प्रदर्शयति। तत एतस्य ग्रन्थस्य सौष्ठवम् एवाहं मन्ये। तार्किकपद्धतौ विवेचनाप्रतियोगितासु नानाविधानां विवेचनाकल्पानां समीचीनतैव जायते। तत्र दृष्टान्तरूपेण 'साध्यानुयोगिकभेदकल्प' एव द्रष्टव्यो वर्तते। नैव सिद्धान्तलक्षणतत्त्वालोकस्तं कल्पम् उद्भावयामास।

सिद्धान्तलक्षणसुबोधिनीनाम्न्या व्याख्यया गूढार्थतत्त्वालोकविवेचनक्रमे मतभेदो नैव खण्डनीय इत्यहं मन्ये। अत एतस्याः सिद्धान्तलक्षणसुबोधिनीव्याख्याया विवेचनाशैलीं पदार्थविवेचनपाटवं शब्दयोजनासौष्ठवञ्च विशिष्टतां समावेदयतीति मन्यमानः सिद्धान्तलक्षणसुबोधिनीकर्त्रे पं० कृष्णमाधवझाशर्मणे मित्रप्रवराय सस्नेहं सादरञ्च प्रणतिपुष्पाञ्जलिं समर्पयन् अमन्दमानन्दमनुभवामि।

## अलंकार-विवेचन-समीक्षा

पदवाक्यप्रमाणशास्त्रमर्मज्ञः पं० कृष्णमाधवझाशर्मा *अलङ्कारविद्योतनं* विनिर्माय पण्डितराजजगन्नाथ-दार्शनिकमूर्धन्याप्पयदीक्षितप्रभृतीनाम् अवशिष्टमलङ्कारपरिष्कारकार्यं निर्दुष्टालङ्कारलक्षणं कृत्वा अस्मदादीन् आलङ्कारिकनिभान् दार्शनिकजनांश्च नितान्तं समुपाकार्षीत्। नैयायिकवर्यस्य कृष्णमाधवझाशर्मणः १२४ अलङ्काराणां निर्दुष्टलक्षणनिर्माणशैली शोभना प्रसादगुणगम्फिता च वर्तते। तत एव च अवशिष्टानामपि अलङ्काराणां निर्दुष्टलक्षणानि अनयैव शैल्या निर्मातुं शक्यन्ते इत्यहो धन्यवादार्हा *अलङ्कारविद्योतन*ग्रन्थप्रणेतारो झामहाशयाः। ममाभिवादनं तदन्तिके सन्ततं जायतामिति।

## संस्मरणम्

मोहमय्यां महाराष्ट्रेषु पण्डितवर्याः कृष्णमाधवझामहाशया मम तत्र गमनात् पूर्वमेव वैष्णवाचार्य-गोकुलनाथजीमहाशयानां सन्निधौ समुल्लसन्त आसन्। अहन्तु सप्त वर्षाणि मोहमय्यां १९४७ ख्रीस्तवर्षतः १९५३ ख्रीस्तवर्षपर्यन्तं संस्थितः। एतन्मध्ये पण्डितवर्यमहाशयेन सह मम प्रेमोद्रेक उत्तरोत्तरं वर्धमान एव सञ्जातः। पण्डितवर्यस्य

सदाचारनिष्ठां प्रशस्यां तत्परोक्षेऽपि अहं सर्वत्र ब्रुवे। यथैव पण्डितवर्या हृदयेन निर्मलास्तथैव सदाचारे बद्धपरिकरा आसन्। मयि मोहमयीत आगते मदीयमहाविद्यालये ते बहुवर्षाणि प्रधानाचार्यपदमलङ्कृतवन्तः। निश्छलस्निग्धस्वान्तस्य पण्डितवर्यस्य कृष्णमाधवशर्मणो दिवङ्गतस्य सर्वापि प्रशंसा अपूर्णैव भवितेति विज्ञाय सप्रणामं विरमामि। [इति]

## यत्-किञ्चित्

□ प्रमोदरञ्जनमुखोपाध्यायः

मिथिलायां विद्यातपस्सिद्धिविश्रुतवैभवधामनि सरिसबपाहीतिनामनि ग्रामे विजृम्भमाणालौकिकानुभावसमवाये धरणीसुरकर्म्महान्ववाये महामहोपाध्यायानां हरिहरनीलकण्ठेन्द्रपतिजगन्नाथवेणीदत्तकृष्णदत्तप्रभृतीनां कुले, और्व-च्यवनादिपञ्चप्रवरस्य वत्सगोत्रावतंसस्य सदुपाध्यायगोवर्द्धनापराभिधानस्य पण्डितबुद्धिनाथस्यात्मजो भागेश्वरीदेवीप्रसूतो वैयाकरणपदप्रसाधितचन्द्रमाधवाग्रजः विदुषोः डॉ० गंगानाथझाशर्म्म डॉ० किशोरनाथझाशर्म्ममहाभागयोर्जनयिता कुलपरम्परोपनतसिद्धसारस्वतमन्त्रपुरश्चर्याप्रसादासादितसर्वतन्त्रापरतन्त्रप्रातिभः विद्यावाचस्पतिमाधवाचार्यश्याम-मनोहरादीनां सुधीधौरेयाणामाचार्यवरः महामहोपाध्यायालङ्करणालङ्कृतानां फणिभूषणतर्कवागीश-वामाचरणभट्टाचार्य-दीनबन्धुझा-मार्कण्डेयमिश्राणाम् पण्डितराज-राजेश्वरशास्त्रिमहाभागानां चान्तेवासी मुम्बईस्थितानां बालकृष्ण-संस्कृतविद्यालय-जे० बी० एम० संस्कृतमहाविद्यालय-काशीविश्वेश्वराध्यात्ममहाविद्यालयानां प्रधानाचार्यपदरञ्जितः, गोपीनाथजीमहाराजाभिसभाजितोऽयमाचार्यप्रवरः महामहिमोपाध्यायदार्शनिकसार्वभौमसर्वतन्त्रस्वतन्त्रादिविरुद-विभूषितः पं० कृष्णमाधवझाशर्म्मा विविधान् विबुधैरपि प्रायो दुर्बोधान् सकलसंस्कृतानुशासनविषूचीनानिर्वचनीय-प्रेक्षासाक्षिणः पुरोनिर्देक्ष्यमाणान् प्रबन्धान् ख्रैष्ट्यां विंशतिशताब्द्यां पर्यायेण प्राणैषीत्। तेषु च परमलघुमञ्जूषा *तत्वप्रकाशिका*मलमासविवादे निर्णयात्मको धर्मशास्त्रेण *मलमासविचार*स्तत्त्वचिन्तामणेर्जागदीशीसिद्धान्तलक्षण-व्याख्योपरि रचितस्य गूढार्थतत्वालोकव्याख्यानस्य *सुबोधिन्या*ख्यमन्यतमं व्याख्यानं रसगङ्गाधरखण्डनखण्डखाद्ययो *स्तारिणी*व्याख्याने इत्येतेषां नामानि विविधनिबन्धप्रबन्धानामाकलनेन ज्ञायन्ते, येषु कियन्त एव मुद्रिता मुद्र्यमाणा वा दृग्विषयतां यान्ति। सत्यमेवोक्तं केनापि महाकाव्यवर्णनप्रसंगे—

उद्यल्लावण्यलक्ष्मीवलयितवपुषां स्वर्गवारांगनाना-
माश्लेषे यः प्रमोदः स्फुरति च गरिमा योऽमृते माधुरीणाम्।
सौरम्यं कुङ्कुमे यत्पयसि विमलता याप्यहो तत्समस्तं
मित्रैकत्रेक्षितुं चेदभिलषसि तदा पश्य कृष्णस्य शास्त्रम्॥

अपि चान्येषाम्—

षट्शास्त्रशिक्षाकुशलेन येन व्युत्पत्तिवादे समकारि टीका।
पाण्डित्यसीमा स गुरुर्गुरूणां श्रीकृष्णमाधो बुधवृन्दवन्द्यः॥

तथा चान्तेऽपि केनचित्—

विज्ञानशेवधि-समस्तजगत्प्रसिद्ध-श्रौतप्रपञ्चशतपत्रसहस्ररश्मिः ।
प्रौढप्रतापविभवोद्भवमञ्जुलश्रीः श्रीकृष्णमाधवबुधः सुचिरं चकास्तु॥ [इति]

# एक पुण्यस्मरण

□ **गोस्वामी श्याम मनोहर**

समादरणीय श्री कृष्ण माधव झा 'पण्डितजी' हमारे घर में मेरे जन्म से पूर्व ही आये थे। अतः होश संभालने के साथ-साथ ही मैंने पण्डितजी को भी 'अपने पण्डितजी' के रूप में जाना था।

स्वयं पण्डितजी के मुख से अनेक बार यह सुना था कि कैसे मेरे पिताश्री तब दस वर्ष के थे, जब पण्डितजी, पिताजी के अग्रज गोस्वामी श्रीकृष्ण जीवन जी को न्यायशास्त्र के अध्यापनार्थ आये थे और कैसे मेरे पिताजी किशोरावस्था सुलभ उत्सुकता वश घर में नये पण्डितजी कौन आये हैं— यह देखने उनके कमरे में गये थे।

प्रातः स्मरणीय पण्डितजी के पास, जहाँ तक मुझे याद आता है, सर्वप्रथम हमारे सम्प्रदाय के *तत्त्वार्थदीपनिबन्ध* की कारिकायें मुखाग्र करने जाना हुआ था, तब बहुत करके मैं पाँच या छह वर्ष का रहा होऊँगा। बाद में मेरे किशनगढ़-नासिक आवासकाल में सम्पर्क टूट-सा गया था। पुनः चौदह-पन्द्रह वर्ष की वय में मुम्बई लौट आने पर *सिद्धान्तकौमुदी, रघुवंश, किरातार्जुनीय, मुद्राराक्षस तथा चन्द्रालोक* आदि ग्रन्थों के अध्ययनार्थ प्रवृत्त हुआ।

इन सब ( ग्रन्थों ) को पढ़ाते समय अक्सर पण्डितजी कहते थे 'बाबा! न्याय अवश्य पढ़ो अन्यथा अन्याय ही होगा'। यह वाक्य आज भी कानों में उन्हीं वात्सल्यपूर्ण स्वरों में गूंजता रहता है। यह कथा दूसरी है कि न्यायमुक्तावली, व्याप्तिपञ्चक और व्युत्पत्तिवाद के अलावा पण्डितजी का सन्तोषदायक न्याय का अध्ययन मेरा हो नहीं पाया। मेरी रुचि पूर्वमीमांसा और वेदान्त में कुछ अधिक बलवती हो गई, जिनके अन्तर्गत *चित्सुखी, खण्डनखण्डखाद्य* और *अद्वैतसिद्धि* के मिथ्यात्वनिरुक्ति प्रकरण का अध्ययन मैंने पूज्य पण्डितजी के समीप भी किया। इन ग्रन्थों के अध्यापन के समय भी प्रायः निरपवादरूपेण जब ग्रन्थग्रन्थि की क्लिष्टता प्रतीत होती तो पण्डितजी यही कहते 'बाबा! जब तक न्याय नहीं पढ़ोगे तो वेदान्त के साथ अन्याय करोगे'।

मुझे *खण्डनखण्डखाद्य* पढ़ाते समय पण्डितजी ने *खण्डनखण्डखाद्य* पर एक व्याख्या हिन्दी में लिखी थी, जो पता नहीं अब कहाँ है।

पण्डितजी का स्वाध्यायनिरत स्वभाव, सरलता, निःस्पृहता तथा सादगी अनुभवैकगम्य थी। सायं-प्रातः कूप-जल से स्नान करके स्वयं आर्द्रवस्त्रों में गृहकार्योपयोगी जल भर के लाना, सन्ध्या, तर्पण, शालग्रामार्चन तथा शिवार्चन का उनका नित्य नियम तथा उसमें उनकी भावतन्मयता को निहारने का बचपन से ही पुलकित करने वाला अनुभव मिलता रहा।

वैसे केवल श्रीकृष्ण की ही एकान्त भाव की साधना पर निर्भर रहने वाले हमारे सम्प्रदाय में शिवार्चन का कोई प्रसंग उठ नहीं सकता, फिर भी बाल्यावस्था से ही आदरणीय पण्डितजी को शिवार्चन का अनुष्ठान करते देखने में बड़ा आनन्द मिलता था। उनके आध्यात्मिक मुखभावों का दर्शन करते-करते बहुधा मेरा किशोरचित्त इन विचारों में डूब जाता कि क्या कारण है कि हम जब अपने मन्दिरों में श्रीकृष्ण की सेवा करते हैं, तब ऐसा आध्यात्मिक भाव किसी के मुख पर झलकता नहीं है!!

बहुत बाद में वल्लभ सम्प्रदाय के निबन्ध, भाष्य, सुबोधिनी तथा प्रकरण ग्रन्थों के अध्ययन करने पर अवगत हुआ कि 'भगवद्भावस्य रसात्मकत्वेन गुप्तस्यैव अभिवृद्धिस्वभावकत्वाद् आश्रमधर्मैरेव लोके स्वीयं भगवद्भावम् अनाविष्कुर्वन् भजेत' ( ब्रह्मसूत्रभाष्य ३।४।४९ )। तभी जाकर यह भी समझ में आया कि हमारे यहाँ सार्वजनिक मन्दिर में श्रीकृष्ण की सेवा जनता के समक्ष प्रदर्शनार्थ अनुष्ठित होने के कारण उसमें स्वधर्मानुष्ठान की गरिमा खण्डित हो गई थी। जब कि आदरणीय श्रीकृष्ण माधव झा 'पण्डितजी' का शिवार्चन उनका वृत्त्युपार्जन का अनुष्ठान न होकर स्वधर्मानुष्ठान की गरिमा का वाहक था।

प्रातः स्मरणीय पण्डितजी के प्रेरक व्यक्तित्व का स्मरण मेरे लिए वस्तुतः बड़ा पावक मानस-व्यापार है। **[ इति ]**

## भारतीय मनीषा के प्रतीक : पण्डित कृष्ण माधव झा

□ **नागानन्द**

युग के प्रारम्भ से ही मानव को मानव से बल मिला है। मानव को मानव से बल मिलने की आधारशिला पर ही समाज और राष्ट्र के सुदृढ़ प्रासाद का निर्माण होता है। यह सिद्धान्त भौतिक क्षेत्र में जिस सीमा तक सत्य है, आत्मिक क्षेत्र में भी यह उतने ही खरेपन के साथ और उतनी ही दूर तक ध्रुव है। अपने से पूर्ववर्ती आदर्श मानव से, जो पीछे चलकर महामानव हो जाते हैं, प्रेरणा लेकर लोग आगे बढ़ते हैं, अपना जीवन-पथ संवारते रहते हैं और उनके जीवन या व्यक्तित्व से अपने को प्रभावित करते हैं। प्रेरणा के इन स्रोतों का अपने देश में सदा बाहुल्य रहा है, पश्चिम के अन्य देश भी हमारे इन स्रोतों से संवल पाते रहे हैं। महाविभूतियाँ जब तक इस संसार में रहती हैं अपने महान् व्यक्तित्व के प्रभाव से प्रत्यक्ष तथा अप्रत्यक्ष दोनों ही रूपों में साधारण व्यक्तियों के जीवन को महान और उन्नत बनाती रहती हैं और काल-पुरुष के अकाट्य आदेश से जब उनका पाञ्चभौतिक शरीर इस भूतप्रपञ्च से बहिर्भूत हो जाता है, तब भी उनके पद-चिह्नों का अनुसरण कर उनकी प्रतिदिन की बातों का स्मरण कर जन-साधारण अपने अन्तस् के कलुष और दोष को दूर कर प्रशस्त पथ का अनुगमन करते हैं। महापुरुषों की जीवनियों के अध्ययन से किस प्रकार हमारी भावनाएँ उदात्त और विचारधारा पवित्र बनती है, यह बात किसी भी सहृदय पाठक से छिपी नहीं है।

इतिहास के कुछ पन्ने कालजयी हुआ करते हैं, इन पन्नों का रंग कभी फीका नहीं पड़ता, बल्कि दिनोदिन गाढ़ा होता जाता है। ये मौजूदा परिवेश के लिए कम्पास सुई का काम करते हैं। इन पन्नों पर संगृहीत निर्मित मूल्य लोकहित हेतु सुरक्षित होते हैं। ऐसे ही पृष्ठ हमारी थाती और धरोहर बनती हैं, विरासत होती हैं। ऐसे ही गौरव-गर्भित, सौरभ-सुरभित पृष्ठ हमारे भाल विशाल करते हैं। इतिहास के घने-सूने वन-प्रान्त के ऐसे ही पृष्ठ टार्च लाइट का काम करते हैं। आने वाली भूली-बिसरी पीढ़ी को राह दिखाते हैं, गति भरते हैं। किन्तु जैसे-जैसे इन पृष्ठों को भूलने की भूल करते हैं, वैसे सामाजिक परिवेश बदलने लगते हैं, मान्यताएँ टूटने लगती हैं, प्रतिमान बिखरने लगते हैं एवं मूल्यों का अवमूल्यन होने लगता है।

न्याय-कानन-पंचानन पण्डित **कृष्णमाधव झा** इतिहास के ऐसे ही उज्ज्वल पृष्ठ हैं। ये उन विभूतियों में से हैं, जिनकी आभा को न काल की काई मलिन कर सकती है, न कोई बयार प्रतिभा को बुझा सकती है

और न नाना झंझावात ही धूलि-धूसरित कर सकता है। ये उन गिने-चुने साधकों में से हैं, जिनकी साधनाओं को कोई चंचलता भंग नहीं कर सकती। ये उन विशिष्ट प्रतिभाओं में से हैं, जिनकी विशालता को कोई पैमाना माप नहीं सकता; जिनकी महानता को कोई आँक नहीं सकता। ये उन सस्य-शीतल शान्त सलिलाओं में से हैं, जिनमें गंगा की पवित्रता तो है, पर कोशी की उग्रता या नर्मदा की वक्रता नहीं।

दर्शन को अपनी विचार-भूमि का आधार बनाकर आपने भारतीय प्राच्य विद्या के अध्ययन और अनुसन्धान को इन्द्रधनुषी शोभा और सौन्दर्य प्रदान किया। आपके दार्शनिक अनुचिन्तन के आधार ने आपके समग्र साहित्यिक तथा सांस्कृतिक अनुचिन्तन को प्रभावित किया था। आप जितने गम्भीर विद्वान थे, उतने ही विनम्र व उदार भी। ८७ वर्ष की अवस्था में भी आप में अध्ययन-अनुशीलन की तीव्र आकांक्षा थी। केवल आकांक्षा ही नहीं, अपने संकल्प को मूर्त रूप देने की भी आप में अद्‌भुत क्षमता थी। इस बात का अनुमान आपके अन्तिम दिनों के उस संकल्प से स्पष्ट है कि अभी मैं न्यायदर्शन की दो पुस्तकों की व्याख्या कर रहा हूँ।

आपका जन्म कमला नदी के तट पर बसे बिट्ठो नामक गाँव में एक ऐसे बुद्धिजीवी परिवार में हुआ था, जो अपनी अनेक विशेषताओं के कारण काफी प्रसिद्धि प्राप्त कर चुका था। एक प्रकार से उनका परिवार पुराने और नये विचारों का संगमस्थल था। परिवार के सभी सदस्यों को कठोर नियमों का पालन करना पड़ता था और थोड़ी-सी भी चूक होने पर परिवार अथवा बाहर के किसी भी व्यक्ति को हर तरह की यंत्रणा झेलने के लिए तैयार रहना पड़ता था। भाषा की शुद्धता और उच्चारण पर विशेष रूप से ध्यान दिया जाता था। बालक के बड़े चाचाजी पं० लक्ष्मीनाथ झा उपाख्य छक्कन झा घर की व्यवस्था देख रहे थे और संचालन की दृष्टि से बड़े कठोर और निपुण थे।

पण्डित जी आजीवन प्रचार-प्रसार की झंझटों से कोसों दूर रहे और माँ भारती के मन्दिर में नित नूतन पुष्प चढ़ाते रहे। शब्द एवं भाषा पर उनका असाधारण अधिकार था। शब्दों की आत्मा का उन्हें सूक्ष्म परिज्ञान था। बाहरी ताम-झाम से दूर, भारत के प्राचीन विद्वान पण्डितों की परम्परा में वे अत्यन्त सादगी से रहते थे। उनकी तेजस्वी आँखें, लम्बी नाक, छोटी कटी सफेद मूँछ, लम्बा इकहरा शरीर, खल्वाट चेहरा, उन्नत भाल, प्रशस्त मस्तक, आकृति पर सरिता के गहरे जल-सरीखी शान्ति—यह था उनका बहिरंग व्यक्तित्व; लेकिन उनका अन्तरंग रूप 'हिमावृत ज्वालामुखी' की तरह जिजीविषा से पूरित था। उन पर प्रथम दृष्टि पड़ते ही उनकी प्रकाण्ड विद्वत्ता का अहसास सबों को एकबारगी हो जाता था। वे व्यवहार में बड़े शालीन, स्वाभिमानी एवं सिद्धान्त के पक्के थे। उनके विचार और चिन्तन में सात्विक गुण की खुशबू थी। वे किसी विवाद या पचड़े में कभी नहीं पड़े और किसी प्रश्न का उत्तर बड़े सुचिन्तित ढंग से देते थे। विनम्रता उनकी नस-नस में भरी थी। साहित्यिक सौहार्द से दीप्त उनका व्यक्तित्व कभी ऊपर से यह भान नहीं करा सका कि वे इतने बड़े दार्शनिक और तार्किक हैं। फिर भी उनका दर्शन सामान्य दर्शक को अनुप्राणित करता था। वे किसी के प्रति मत्सर भाव या पूर्वाग्रह नहीं रखते थे। अलवत्ता वे थोड़े जिद्‌दी थे।

पण्डित जी का स्वभाव अत्यन्त सरल, उदार और कोमल था। उनकी बुद्धि प्रखर और चरित्र अत्यन्त निर्मल था। इसलिए वह जो कुछ निर्णय करते थे, बहुत सोच-समझकर और फिर उसका पालन करने के लिए वे हिमालय की तरह अटल बन जाते थे। उनमें दम्भ और दर्प तो नाम मात्र का नहीं था। उनका त्याग अपूर्व और महान था, जब कि अपने आचार-विचार के क्षेत्र में आप अत्यन्त कट्टर थे। कर्म और विचारों में सामञ्जस्य स्थापित

करना जहाँ आपका वैशिष्ट्य था, वहीं धार्मिक आचार का परिपालन और अध्ययन-अध्यापन यही उनका एकमात्र व्यसन और व्यवसाय था। पण्डित जी शास्त्र-चिन्तन के साथ ही सामाजिक सुधार आदि के कार्यों में बहुत रुचि रखते थे। उनका पालन-पोषण जिस परम्परा के अनुकूल हुआ था, उनकी उन पर अमिट छाप थी और इसीलिए वे पुरानी रूढ़ियों का परित्याग करने में सदा संकोची बने रहे, लेकिन तालमेल की पद्धति उनकी प्रबल थी कि कहीं कुछ कठिनाई का आभास भी नहीं मिला। किन्तु इसके साथ ही यह बात ध्यान देने योग्य है कि वे अपनी धुन और लगन के पक्के थे। वे अपना भोजन स्वयं बनाते थे और तब तक बनाते रहे जब तक कि वे बिस्तर न पकड़ लिए। अन्त में वे अपनी पुत्रवधू के हाथ का ही भोजन करते थे और रेलगाड़ी से यात्रा करते समय वे कई-कई दिनों तक कुछ खाते-पीते भी न थे।

वे स्वभाव से सहज कृपालु थे, परन्तु अवसर आने पर अत्यन्त कठोर भी थे। 'वज्रादपि कठोराणि मृदूनि कुसुमादपि' का वे ज्वलन्त उदाहरण थे। अत्यन्त सरल, प्रायः बालकों जैसे विनम्र, विनयी और अत्यन्त मृदुभाषी थे। वे विरोधियों और प्रतिपक्षियों के सम्बन्ध में भी अथवा उनसे बातचीत या बहस-मुबाहसे के सिलसिले में भी कभी किसी प्रकार की उग्र भाषा का प्रयोग नहीं करते थे। सबके साथ उनका व्यवहार सदा मधुर हुआ करता था। पर साथ ही साथ वे अपने विचारों के एकदम दृढ़, सिद्धान्त में पूर्ण अटल और धुन के पक्के थे।

प्रारम्भिक शिक्षा अपने पूज्य पिताश्री ( पं० बुद्धिनाथ उपाख्य गोबर्द्धन झा ) से प्राप्त कर आपने महावैयाकरण पं० दीनबन्धु झा एवं सर्वतन्त्रस्वतन्त्र पं० मार्कण्डेय मिश्र के चरणों में बैठकर व्याकरण-न्याय-वेदान्त का अध्ययन किया। फिर म० म० फणिभूषण तर्कवागीश और म० म० वामाचरण भट्टाचार्य से भी वाराणसी में रहकर गहन अध्ययन किया। आपको पढ़ने में इतनी रुचि थी कि वहीं आप पण्डितराज राजेश्वरजी शास्त्री से भी पढ़ते रहे। आप न्याय-व्याकरण-वेदान्त धर्मशास्त्र-साहित्य आदि के निष्णात विद्वान थे। विद्वत्ता के साथ-साथ अनन्य हरिभक्ति, विनयशीलता, प्रखर बुद्धिमत्ता, लोकोत्तर प्रतिभा, तलस्पर्शी ज्ञान, मूलग्राही चिन्तन, सदाचार एवं प्रौढ़ वक्तृत्व-कला के द्वारा समस्त विद्वत्समाज को आपने मुग्ध कर लिया था।

जब आप काशी में पढ़ ही रह थे तो काव्य-साहित्य-रसिक तथा विद्याव्यसनी होने के कारण आपने काशीस्थ विद्वानों के मध्य में भी अपना सम्मानजनक स्थान बना लिया था। धर्म के प्रति दृढ़ आस्था होने के कारण काशीराज के यहाँ भी आपका पर्याप्त प्रवेश और सम्मान था।

आपकी अध्यापन-शैली उच्च कोटि की थी। संशयों का आमूलचूल निराकरण कर सिद्धान्त को हृदयंगम कराने में आप पूर्ण दक्ष थे। इस कारण आपके पास दूर-दूर के विद्वान भी अध्ययनार्थ किं वा समस्या-समाधानार्थ आते रहते थे।

मालविकाग्निमित्र में महाकवि कालिदास कहते हैं कि—कुछ अध्यापक स्वयं अच्छे विद्वान रहते हुए भी दूसरे को समझाने का सामर्थ्य कम रखते हैं और कुछ शिक्षक स्वयं कम जानते हुए भी दूसरे को समझाने का अच्छा सामर्थ्य रखते हैं। जिस अध्यापक में ये दोनों गुण विद्यमान रहते हैं, अर्थात् जो स्वयं अच्छे विद्वान होते हुए दूसरे को समझाने की विलक्षण प्रतिभा रखते हैं वे सबसे आगे की पंक्ति में रखने योग्य हैं। हमारे चरित नायक एतादृश विभूति थे, जिन्हे आगे की पंक्ति में रख सकते हैं—

**श्लिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता।**
**यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव॥**

आपने नव्यन्यायशास्त्र के *सिद्धान्तलक्षण, शक्तिवाद, व्युत्पत्तिवाद* आदि ग्रन्थों पर विद्वत्तापूर्ण टीका करके न्यायशास्त्र की दुरूहता को सरल बनाने का स्तुत्य प्रयास किया किन्तु कई टीकाएँ इनमें अपूर्ण ही रह गयीं।

जिस प्रकार शक्तिशाली सम्राट अपने अस्त्र-शस्त्र, वीरता और वैभव के द्वारा दिग्विजयी होता है, उसी प्रकार निःस्पृह विद्वान् बुद्धि, विद्वत्ता और वाणी के वैभव-बल से दिग्विजयी माना जाता है। पण्डितजी छात्रावस्था से ही शास्त्रार्थ के बड़े प्रेमी थे; मिथिला, काशी, बड़ौदा, महाराष्ट्र, बंगाल, राजस्थान आदि स्थानों में समय-समय पर आयोजित शास्त्रार्थ-सभाओं में उन्होंने श्रेष्ठ विद्वानों को भी निरुत्तर किया था। १९७३ में भारती परिषद् ने रक्षा मंत्री जगजीवन राम की अध्यक्षता में इन्हें 'महामहिमोपाध्याय' की पदवी दी थी।

कर्म का रहस्य अज्ञात है। नहीं कहा जा सकता, किस समय किसके प्राक्तन-कर्म का कैसा फल मिलेगा। पण्डित जी का जीवन सब प्रकार से सुखी था। विद्वज्जन, साधारणजन और राज-समाज में उनको समान रूप से सुयश प्राप्त था, जीवन-निर्वाहार्थ अर्थ की भी कमी न थी। ब्राह्मणवंश में जन्म पाकर तदनुरूप आचार-व्यवहार और कर्मकाण्ड कर सकने के कारण मन सन्तुष्ट था। फिर भी नैसर्गिक नियमों के अनुकूल कोई सदा सुखी नहीं रहता और न सदा दुःखी ही। पण्डितजी का सुख-शीतल जीवन भी इस नियम का अपवाद नहीं रह सका। उनकी तरुणाई में ही स्त्री का अन्त हो गया, वात्सल्यपूर्ण पिता भी नहीं रहे, ज्येष्ठ पुत्र जगदीश झा ( बी० ए० ) भी पलायन कर गये, द्वितीय पुत्र सुखदेव झा का असामयिक निधन हो गया, फिर बाद में आकर तीन अनुज भी छोड़ गये। इन दुर्घटनारूपी झंझावातों से पण्डितजी का जीवन-तरु जर्जर हो उठा। उन्होंने इन महान दुःखों को धैर्यपूर्वक सहन किया और किसी तरह 'विविक्तसेवी लध्वाशी यतवाक्कायमानसः' होकर देवतार्चन आदि में सारा समय व्यतीत किया।

भारतीय मनीषा के उन प्रतीक विभूति के सम्बन्ध में अन्त में बस इतना ही कहना पर्याप्त होगा कि जो ( विद्वान् ) स्फटिक की आकृति के सदृश अतीव निर्मल ( चित्त या स्वरूप वाला ) है, जिसके हृदय में निशात ( गूढ़, दुरूह ) शास्त्रों का तत्त्व समीचीनतया आरूढ या प्रतिबिम्बित है, जिसकी वाणी एवं युक्तियाँ ( तर्क; लौकिक वैदिक शास्त्रादि से ) अविरुद्ध एवं ( परस्पर ) समन्वित होती हैं तथा जिससे प्रतिद्वन्द्वियों के पराभव ( पराजय ) की उत्पत्ति हो जाता है; इस प्रकार का वह महापुरुष या अद्वितीय पुरुष ही है—

**स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः।**
**अविरुद्धसमन्वितोक्तियुक्तिः प्रतिमल्लास्तमनोदयः स कोऽपि॥**

[ इति ]

# बौआ भाइक ( पण्डित कृष्णमाधवबाबूक ) संस्मरण

□ **सीताराम झा 'वैद्य'**

हम सहोदर ओ वैमात्रय लगाए दश भाइ बहिन छलहुँ। जाहिमे सभसँ जेठ बौआ भाइ छलाह। हुनकासँ छोट **वेणीमाधव बाबू** छोटका भाइ छलाह। हिनकासँ छोटि हमर सहोदर बहिन **यमुना दाइ** छलीह। तनिक छोट **सूर्यमाधव बाबू** बूच भाइ छलाह। हिनकासँ छोट हमर सहोदर भाइ वैद्यकशास्त्रमे निष्णात **विजयनाथ बाबू** प्रसिद्ध जीबू बाबू छलाह, जिनका हम भाइ कहैत छलियन्हि। हिनकासँ छोटि हमर सहोदर बहिनि **रामेश्वरी दाइ** प्रसिद्ध टुनी दाइ छलीह। टुनी दाइसँ छोट व्याकरणक पण्डित **चन्द्रमाधव बाबू** हमरा सभक तुल्लीबाबू, पण्डितजी छलाह। हुनका सँ छोट हम लोकनाथ प्रसिद्ध **सीताराम** छी आ' हमरासँ छोटि हमर वैमात्रेयी बहिन **जानकी दाइ** छलीह आओर हुनकासँ छोटि हमर सोदर बहिनि **सत्यादाइ** छलीह।

एहिमे जेठ बहिन यमुना दाइ तथा प० चन्द्रमाधव बाबूकेँ सन्तान नहि भेलैन्हि। आन सभ भाइ बहिनिकेँ पूर्ण परिवार सेहो पढ़ल गुनल अछि।

यद्यपि हमर बाल्यकालहिमे ई[बौआ भाइ]पढ़बाक संकल्प लए पण्डित मार्कण्डेय मिश्रक संग काशी चल गेलाह। किन्तु अवकाशमे गाम अएला पर सभ संबन्धिकक ओतए एको बेरि अवश्य जाए जिज्ञासा करैत छलाह। समय समय पर यथाशक्ति आर्थिक सहायता सेहो करैत छलथिन्ह। एहन छल बौआ भाइक लौकिकताक परिचय।

गाम पर हुनकासँ भेँट करए अनेक गामक विद्वान्, सम्बन्धी आ आनो लोक अबैत छलाह। ओहिमे पढ़निहारकेँ ओ किछु शास्त्रीय बात पूछि दैत छलथिन्ह वा की पढ़ैत छी आदि सैह। ओहि समयमे ई बात लोकके प्रिय लगैत छलैक। प्रतिभाक गोपन नहि रहैक, ने एकरा लोक अधलाहे बुझैक, सीखब सिखाएब व्यवहारमे छलैक। बहुत लोक हुनका लग शास्त्रीय गूढ़ विषय बुझबौक हेतु अबैत छलाह।

ग्रामीण व्यक्तिक संग कोनो झंझट भेला पर अपना दिससँ खर्च दए सहायता करैत छलथिन्ह, ताहिसँ गामक लोकक प्रति हुनक उदारता आ दयालुता बूझि पड़ैत अछि।

एहन पैघ विद्वान् रहितहुँ खेलहुमे उत्साही रहैत छलाह। सतरञ्ज, गैपाड़ि तथा पचीसी तँ सहजहिँ जे तास सेहो खेलाइत छलाह। हुनक संगी **पूर्णानन्द बाबू** हमरा सभक संगीभाइ छलाह, जिनका संग ई बेसी खेलाइत छलाह। कखनहुँ अपनासँ छोटवयसक हमरहु सभ संग रातिक इजोरियामे ता ' खेलाइत छलाह।

पढ़बामे एहन लगन छलैन्हि जे एकान्तमे रहि पढ़बाक इच्छासँ हम ' घर पर रहैत छलाह। ओहि समय मे हमर घर प्रोफेसर मुक्तिनाथ बाबूक घरक सटले दक्षिण भागमे छल। त्र हम अपन मात्रिक सरिसबमे घर बाहल अछि आ' एतहि रहैत छी।

बौआभाइकेँ एमहर अन्तिम समयमे गाम रहबाक अवसर भेलैह्नि, नहि तँ पढ़बाक समय काशी आ' जीविकार्थ ४४ वर्षसँ ऊपरे बम्बईक बड़ा मन्दिरमे रहलाह। गाम रहने हुनक सन्निधिमे रहबाक अवसर वा सुयोग हमरहु सभकेँ भेल।

सन् १३३२ साल तदनुसार १९२६ ई० क माघ सूदि द्वादशीके हमर पिता गोवर्धन बाबूक देहान्त भेलैह्नि। बौआभाइ ता' काशीमे पढ़िते छलाह। १३३३ सालक माघ शुदि द्वादशीके बौआभाइ काशिएमे छलाह रानीकोठा मे, आ हमहूँ अपन दुःखित बरका मामा **पुण्यनाथ बाबूक** संग काशी जयबाक अवसर पौलहुँ। तेँ ओहि साल काशीक मणिकर्णिकाघाटपर दूनू भाइ संगहि बाबूक एकोद्दिष्ट कयल। संयोगवश १९७७ ई० क माघमे पुनः प्रयागमे कल्पवास दूनू भाइ करैत रही तँ बाबूक एकोद्दिष्ट संगहि गंगाकातमे कयल आ एक मास संग रहलहुँ।

हमरा लिखबाक योग्यता नहि, ताहि पर सँ छियासी वर्षक बुढारी तैयो जे किछु मोनमे भेल से हुनका चरणमे अर्पित कयल। इएह हमर प्रणामाञ्जलि आ' श्रद्धाञ्जलि आ' संस्मरण।

अनुजक प्रति हुनक व्यवहार पर लिखैत छी।

अनुज सबहिमे रामचन्द्र सम प्रेम प्रचारक
परिवारक हित रन्तिदेवसन रहथि विचारक
कारक निशि दिन धर्मक दयाशील सुन्दर वदन
सत्यवचन मितभाषित कृष्णनाम पुण्यक सदन।

[ इति ]

# पिता-पुत्र ( एक संस्मरण )

□ मुक्तिनाथ झा

'अरस्तू'क तर्कशास्त्रक नियमें, उपरोक्त दुनू शब्द 'रिलेटिभ', अर्थात् 'सापेक्ष' थीक—एक दोसरक अर्थक पूरक— एकसँ दोसरक ज्ञान-संकेत होअए। 'शताब्दी'क अवसर पर जखन पिताक स्मरण कएल जाइछ, स्वभावत: हुनक एक एहन पुत्रक स्मरण होअए, जनिक सुमिरन करए बला लोक जँ एखन छथियो, तँ भविष्य मे नहिं रहत,—कारण जे ओ संततिहीने रहि गृहत्यागी भए गेलाह। एहन पुत्र, जेठ पुत्र रहथिन **जगदीश**—हमर 'हीत', जे सन् १९४९ मे गाम छोड़लाक बाद पुन: घूरि नहि अएलाह। ओ हमरासँ दस मास छोट रहथि, तेँ कखनो सोझ अनुमान करी जे, जँ हम जीवित छी, ओहो ने जीवित होथि। मुदा ई के जानय जे ओ कतय छथि— कोना छथि— छथि वा नहि।

माता-पिता के सभ संतान प्रिये होअए, मुदा जेठ संतान प्रियतर— ई सत्य मानव-हृदयक कोनो अविहित नियमक वश सभ माता-पिताक मनोभावनाक प्रसंग चरितार्थ होअए। हमर 'बौआ कका' एकर अपवाद नहिं रहथि। ओ आदिसँ जगदीशक समुचित लालन-पालन शिक्षण-व्यवस्थाक प्रति पूर्ण तत्पर रहथि। जाधरि जगदीश लोक-मध्य रहलाह, पिता हुनक हितार्थ कहियो कोनो त्रुटि वा उपेक्षा नहिं कएल। आ' जखन ओ घर छोड़ि गेलाह, एक विद्वान पिता विषादमे परिणत पुत्र-विछोह-भावनाके अपन अंत:करणमे दबौने 'निषाद' भेल जीवन व्यतीत कएल। जखन, कखनो हुनक समक्ष जगदीशक कोनो चर्चा होइ, तँ हुनक आँखि चंचल भए चमकि उठन्हि— भान होअए यथा अश्रुवेग तरेतर हुनक डिंभा मे पसरि सुखाय जान्हि। ओ स्वयं जगदीशक टिप्पनि पर बहुत-विचार कए वा आनोसँ देखाय, एक दिन दृढ स्वरें कहलन्हि—'अहाँक हीतकें प्रबल दीर्घायुयोग प्राप्त छन्हि–ओ अवश्य कतहु सुखसँ जीवन-यापन कए रहलाह अछि'। जखन-जखन, जगदीशक स्थितिक प्रसंग कोनो सूचना भेटै— स्वजन द्वारा हुनक अन्वेषण होन्हि; बौआ कका स्वयं एक-दूबेर प्रिय पुत्रक अन्वेषणार्थ दूर-दूरक यात्रा कएलन्हि।

हम सभ एक बृहत् परिवारक नेना रही— आदिसँ समस्त बालोचित क्रीड़ाकलापमे संग रही— खेलकूद, दौड़धूप, हेलब-झिझरी खेलाएब—सभमे संग रहल। आ' संगहि एक दलान पर बैसि, झूलि-झूलि कंठ-फाड़ि समस्त 'अमरकोष' रटल— संग पोथी लए सरिसब पाठशाला जाइ, समतूरक बालवर्ग संग बैसि पाठ रटी— घोल करी। किछु दिनुक बाद, बौआकका जगदीशकें अपन संग राखि पढ़बय 'बंबइ' लए गेलखिन, आ' संग छूटि गेल। घुरती साल जखन ओ गाम अएलाह, तँ सभ तरहें प्रगतिपथपर भान भेला। भेंट थोड़-होअए, कारण जे हम अपन मात्रिक गंगौलीमे रहि सरिसव स्कूलमे पढ़य लागल रही। एवं, क्रम-क्रम दूरी बढ़ैत गेल—तथापि जँ सालो भरिपर भेंट होअए, तँ परस्पर 'हीते' रही। बादमे, जखन हुनक विवाह, हमर जेठ माम पं० गोविन्दमिश्रक एकमात्र कन्या, 'सिद्धेश्वरी'सँ भेलन्हि, आओरो निकटतर बंधु भए गेलाह। मुदा, दूनू गोटाकेँ बाहर रहबाक कारणें भेंट अकस्माते होअए।

कुयोगें, हम दुनू गोटे अध्ययन स्थगित कए भटकि गेल रही। एवं, सन् १९४७ मे हम नौकरीक उदेसे, भटकैत बौआकका लग बंबइ गेल रही। ओ कहलन्हि, 'हम अहाँक 'हीत'क हेतु एक काजक गप्प कएने छी—ओहो अएबा लेल छथि ता' अहीं जाय ओतय काज धए लिअ—ओ अओताह तँ हम हुनका लेल दोसर काजक गर धराए लेब'। हमरा सशंकित भेल देखि, ओ पुनः कहलन्हि—'अहाँ एहिमे कोनो प्रमाद जनु करी—बेटा-भातिज एके होइत छैक। हम हुनक आदेश मानि प्राते दोसर दिन निर्देशित कार्यालयमे उपस्थित भए अपन परिचय-संकेत देलियैक। उत्तर भेटल, 'अच्छा, कल आइये'। डेरा पर आवि ककाके सभ सूचना देलिअन्हि। ता' ओही राति जगदीशो ओतय पहुँचि गेलाह। हुनका देखि, मोने मोन प्रसन्नता भेल जे आब हुनका हेतु ताकल काज पर प्रथम हुनके धराएब। मुदा, ई बात तात्काल ककाके नहिं कहलिअन्हि। दोसर दिन, दुनू गोटे ओहि कार्यालय गेलहुँ—हम हुनके आगू कए प्रबन्धकसँ गप्प कएल, मुदा कोनो निश्चित उत्तर-आश्वासन नहिं भेटल—ऐं गों करए लागल। डेरा आबि सभ सूचना ककाकें देलिअन्हि। हुनक आदेश भेल, जे हम सभ नगर घूमि रिक्त-स्थानक अन्वेषण करी—भेटला पर, ओ 'बड़ा-मन्दिर' द्वारा प्रबल पैरवी कराय देताह।

एवं, दोसर दिनसँ बारह दिन धरि हम सभ भोजनोत्तर दस बजे दिन रिक्त-पद-अन्वेषण-पथ बिदा होइ—ट्राम सँ वा पैरहिं, सौंसे नगर गली गली घूमि रिक्त-स्थानक जिज्ञासा करैत साँझ-राति डेरा आबी। कतहु केओ ने गछय जे कोनो पद रिक्त अछि। कतिपय ठाम प्रश्न करए—'क्या आप लोग बी०ए० पास हैं?' हम सब लज्जित-मुख 'नहिं' कहि चुप्पे ओतयसँ घसकि जाइ। जगदीश ओतय बहुतो साल रहल छलाह—दर्शनीय-स्थान सभसँ परिचित रहथि। तें, एहि दिवा-रटनक क्रममे सहज-निकट अनेको दर्शनीय स्थान पर लए गेलाह। एक दिन, अंतिम दिन— हम सभ पैरहिं घूमैत नगरक एक एहन सीमा धरि गेलहुं, जतएसँ समुद्र दृश्य होइ। परिश्रान्त भेल पैरहिं घूमल आबि रहल छलहुँ, कि जगदीश सहसा उक्ति कएल—'हीत, आब मोन होअए जे एतहि समुद्रमे कूदि, मरि जाइ—एहन जीवन कोन अर्थक?' हम हुनक मनोदशा भावि अति चिन्तित भेलहुँ, आ उत्तर देलिअन्हि—'अपने सभ बी०ए० पास कए एतय नहिं अएलहुँ—तेँ ई गति होइछ— सर्वत्र असफलता, तथापि आत्मघातसम महापाप नहिं कए गामे घूरि चलू—बी० ए० पास कए एतय आएब तँ अवश्य काज भेटत—बौआ कका तँ सहायक रहबे करताह। ओ हमर बात मानि गेलाह—आ हम सभ निर्णय दृढ़ कए लेल।

साँझमे डेरा आबि, हम सभ अपन अंतिम निर्णय ककाकें सुनाय देलिअन्हि। ओ सुनि, यथा अंतःकरण सँ प्रसन्न दृश्य भेलाह, तथा गदगद स्वरें बेर-बेर प्रोत्साहन दैत बी० ए० पास कए लेबाक अनिवार्य आवश्यकता बुझाओल। एवं, एकर तेसरे दिन, हम सभ 'बंबइ' सँ ककाक आशीर्वाद लैत, गाम विदा भए गेलहुँ। हम भागलपुर सँ स्थानान्तरण आनि दरभंगा सी० एम० महाविद्यालयमे चतुर्थ वर्षमे नामांकन कराय, १९४८ में बी० ए० पास कए, गामक स्कूलमे सहजहिं प्राप्त शिक्षक-पद पर नियुक्त भए गामे रहए लगलहुँ। मुदा, ओ बंबइसँ गाम आबि, किछु दिन रहि—पुनः कतहु चल गेलाह।

सन् १९४८ मे, ता' हम कार्यस्थ भए गेल रही, ओ सालभरि पर गाम अएलाह। भेंट भेल, तँ हुनक खिन्न-रुग्ण रूप देखि, बेर-बेर आर्त अनुरोध करैत बहुत बुझाओल जे कोनो संगत बाट धरथि—पढ़थि वा पुनः पिता लग बंबइ चल जाथि। हम सत्यतः, हुनक देह-दशा देखि तथा मनःस्थिति भावि अतीव चिंतित रही। अस्पष्ट विचार, तथा तनावपूर्ण अंतर-संघर्षसँ मानसिक स्थिति नैराश्यपूर्ण रहन्हि—बाँसुरी बजवथि तथा अधिक काल जोर-जोर सँ भतृहरि-फिल्म क एके गीत गाबथि—'भिक्षा दे-दे मैया पिंगला, योगी खड़ा तेरे द्वार'। किछु कहिअन्हि-बुझबिअन्हि,

# पाणिनीयधातुपाठविषये केचन विचाराः

□ गोविन्द झा

सन्ति अद्यापि केचन विद्वांसो ये संस्कृतभाषाम् आसृष्टिप्रलयम् अविकारिणीं मन्यन्ते। तान् प्रति नैष मे प्रयासः। ये खलु संस्कृतसहिता सर्वा एव भाषाः सततं क्रमेण परिवर्तमाना विभावयन्ति तेषां पन्थानमनुसृत्य इह पाणिनीयधातुविषये केचन विचाराः प्रस्तूयन्ते। अत्र आधारपुस्तकत्वेन महामहोपाध्यायशिवदत्तशास्त्रिसम्पादिता श्रीवेङ्कटेश्वरप्रेसे १८५१ शकाब्दे मुम्बय्यां मुद्रिता तत्त्वबोधिनीसहिता सिद्धान्तकौमुदी उपादीयत। अतः प्रबन्धेऽस्मिन् धातोरग्रे कोष्ठेषु निवेशिता अङ्काः तत्पुस्तकनिविष्टस्य धातुपाठस्य क्रमाङ्का ज्ञेयाः।

## १. क्रम-विन्यास-परीक्षा

पाणिनीये धातुपाठे धातवः केन क्रमेण विन्यस्ता इत्यस्मिन् विषये न काचन मीमांसा केनापि विदुषा इदानीमवधि कृता क्वापि दृष्टिपथं गता। अतः सर्वथा मूलतः स्वमतिमेव अनुसृत्य विषयोऽयं विवेच्यते।

अत्र धातवः प्रथमतो विकरणानुसारिषु भ्वादिप्रभृतिषु दशसु गणेषु विभक्ताः। तत्र भ्वादिगणे धातुसङ्ख्याभूयस्त्वात् ते धातवः अवसानवर्णानुसारं विभक्ताः सन्ति। तथा हि—

| | | |
|---|---|---|
| १. तवर्गान्ताः | एध ( २ ) प्रभृति | शुन्ध ( ७४ ) पर्यन्तम् |
| २. कवर्गान्ताः | लोकृ ( ७६ ) प्रभृति | शिघि ( १६१ ) पर्यन्तम् |
| ३. चवर्गान्ताः | वर्च ( १६२ ) प्रभृति | व्रज ( २५४ ) पर्यन्तम् |
| ४. टवर्गान्ताः | अट्ट ( २५५ ) प्रभृति | गडि ( २६१ ) पर्यन्तम् |
| ५. पवर्गान्ताः | ष्टेपृ ( ३६५ ) प्रभृति | शुम्भ ( ४३४ ) पर्यन्तम् |
| ६. नासिक्यान्ताः | घिणि ( ४३६ ) प्रभृति | क्रमु ( ४७४ ) पर्यन्तम् |
| ७. अन्तस्थान्ताः | अय ( ४७५ ) प्रभृति | धावु ( ६०२ ) पर्यन्तम् |
| ८. ऊष्मान्ताः | धुक्ष ( ६०४ ) प्रभृति | अर्ह ( ७४१ ) पर्यन्तम् |
| ९. स्वरान्ताः | श्रि ( ९२२ ) प्रभृति | तॄ ( ९९४ ) पर्यन्तम् |

अत्र एकं वैचित्र्यं सद्यो दृष्टिपथे निपतति। इदानीं प्रचलिते वर्णमालाक्रमे तवर्गस्य स्थानं टवर्गात् परं भवति। किन्तु अत्र स सर्वतोऽग्रे स्थापितः। अयं विपर्यासः किञ्चन प्रयोजनमुद्दिश्य कृतो वा, यादृच्छिको वा, कामपि प्राचीनां वर्णक्रम-परम्पराम् अनुसृत्य कृतो वा ? एषु अन्तिमः कल्प एव मे समीचीनः प्रतिभाति। दृश्यन्ते हि कियन्तो विभिन्नरूपा वर्णक्रमाः पाणिनेः पूर्वं प्रचलिताः। पाणिनेः स्वीये वर्णसमाम्नायेऽपि कश्चन विशिष्टो वर्णक्रमो लक्ष्यते। तथा हि प्रथमं स्वराः, ततोऽन्तस्थाः, ततः परं स्पर्शाः ( अधःस्थकोष्ठ उल्लिखितेन क्रमेण ), अन्त्ये च ऊष्माणः।

| स्पर्शाः | तालव्याः | ओष्ठ्याः | कण्ठ्याः | मूर्धन्याः | दन्त्याः |
|---|---|---|---|---|---|
| नासिक्याः | ञ | म | ङ | ण | न |
| घोषा महाप्राणाः | झ | भ | घ | ढ | ध |
| घोषा अल्पप्राणाः | ज | ब | ग | ड़ | द |
| अघोषा महाप्राणाः | ख | फ | छ | ठ | थ |
| अघोषा अल्पप्राणाः | च | ट | त | क | प |

धातुपाठे तु प्रथमं तवर्गमारभ्य स्पर्शाः, ततोऽन्तस्थाः, ऊष्माणः स्वराश्च। स्वराणाम् अन्ते समवस्थानं धातुपाठं विहाय न कस्यामप्यन्यस्यां परम्परायामवलोक्यते। किन्तु अयं विपर्ययः सप्रयोजनः प्रतिभाति। धातुपाठे प्रथमम् उदात्ता धातवः, ततः पश्चाद् अनुदात्ता इति क्रमोऽङ्गीकृतोऽस्ति। तथा हि श्रिञ् सेवायाम् ( ९२२ ) इत्येतत्पर्यन्तं सर्वे धातवः उदात्ताः। स्वरान्तेषु धातुषु भू (१), पूङ् ( ९९१ ), मूङ् ( ९९२ ), डीङ् ( ९९३ ), तॄ ( ९९४ ) इति पञ्चैव धातव उदात्ताः; अपरे सर्व एव ( सङ्कलनया ६९ ) अनुदात्ताः। एषु आद्यो भूधातुः 'भूवादयो धातवः' [ १।३।१ ] इति सूत्रानुरोधेन वर्णक्रमभङ्गदोषमुपेक्ष्यापि आदौ निवेशितः। अन्ते अन्ये सर्वेऽपि अनुदात्ताः स्वरान्ता धातवः स्थापिता इति सर्वथा समीचीनम्।

धातूनां विन्यासेऽत्र न केवलं वर्णक्रम एव आधारीकृतः। सन्ति अन्येऽपि केचन धर्मा आधारभूताः। तथा हि धातवो द्विविधाः उदात्ता अनुदात्ताश्च। आदितः श्रिञ् ( ९२२ ) पर्यन्तम् उदात्ताः, ततःपरं प्रायेण अनुदात्ताः। प्रत्येकं ते तवर्गादिक्रमेण नवधा विभक्ताः। एषु नवसु प्रत्येकं त्रेधा विभागः। तथा हि (१) अनुदात्तेत् आत्मनेभाषः, (२) उदात्तेत् परस्मैभाषः, (३) स्वरितेत् उभयतोभाष इति। अयं हि अवान्तरक्रमविभागः प्रायेण अक्षुण्ण इव लक्ष्यते।

केचन धातवः अन्तर्गणकार्यसिद्धये पूर्ववर्णितं क्रमम् उपेक्ष्य अन्यत्र न्यस्ताः। तथा हि द्युतादयः ( ७४२-७६३ ), घटादयः ( ७६४-८४६ ), ज्वलादयः ( ८५६-८८५ ), वृतादयः ( ७५९-७६३ ) च। केचन अन्तर्गणे अनिबद्धा अपि सदृश-विकारभाक्त्वेन सह न्यस्ताः, गुप्-तिज्-मान्-बधाः ( ९९५-९९८ ), 'गुप्-तिज्-किद्भ्यः सन्' [ ३।१।५ ], 'मान्-बध-दान्-शान्भ्यो दीर्घश्चाभ्यासस्ये'ति। परन्तु एवंविधानां धातूनां निवेशः अङ्गीकृतस्य विन्यासक्रमस्य शृङ्खलायाः समाप्तौ प्रकीर्णवर्गे उचितः। किमर्थं तर्हि इमे धातवः ऊष्मान्त-स्वरान्तवर्गयोर्मध्ये निपातिताः, किमर्थञ्च गुपादयश्चत्वारः स्वरान्तवर्गादुत्तरं स्थापिता इति चिन्त्यं सुधीभिः।

किञ्च स्यमु इत्यारभ्य रमु ( ८७८ ) पर्यन्तम्, कुच ( ८८२ ) इत्यारभ्य गुहू ( ९२१ ) पर्यन्तम्, रभ ( ९९९ ) इत्यारभ्य मिह ( १०१७ ) पर्यन्तम्, दान्शानौ ( १०१९-१०२० ) इत्येते उदात्ता धातवः स्वावसानवर्णानुसारं यथाक्रमं स्थापयितुमुचिताः। तथा हि स्यम्वादय उदात्ता उदोत्तेतः परस्मैभाषा ( ८५१-८७६ ) अणादिभिः उदात्तै उदात्तेद्भिः परस्मैभाषैः ( ४४५-४७४ ) सह नासिक्यान्त-वर्गे पठितुं शक्याः; कुचधातुः ( ८८२ ) उदात्तः उदात्तेत् परस्मैभाषः शुचादिषु उदात्तेषु उदात्तेत्सु परस्मैभाषेषु पाठ्यः। एवमग्रेपि ऊह्यम्। किमर्थस्तर्हि एषामुत्क्रमो निवेशः ? मन्ये समाप्ते क्रमानुसारिणि विन्यासे एते धातवो विलम्बेन आचार्यस्य दृष्टिपथमागताः सौकर्याय अन्ते निवेशिता भवेयुरिति।

एकस्मिन् वर्गे निपतितानां धातूनां पौर्वापर्यं प्रायेण अद्यत्वे प्रचलितं मातृकाक्रममाश्रित्य निर्धारितम्। तथा हि फक्कादयो धातवः ( ११६-१६१ ) क-ख-ग-घान्तक्रमेण विन्यस्ताः सन्ति। किन्तु अस्मिन् अवान्तर-विन्यासे बहवो दुर्व्याख्येया अपवादा अपि दृश्यन्ते। यथा एधादयो धातवः ( २-३७ ) ध-द-त-थ इत्येवं क्रमेण विन्यस्ताः ( न तु त-थ-द-ध क्रमेण ), अतादौ ( ३८-७४ ) त-थ-ध-द-ध इति क्रमो दृश्यते यत्र थान्तादुत्तरं धकारान्तधातुद्वयस्य समावेशः अपपाठ इव लक्ष्यते। शुचादौ ( १२३-१५४ ) छान्तानां जान्तमध्ये पातनम् असमीचीनं प्रतिभाति। एवम् अन्यत्रापि क्वचित्-क्वचित् बहुशो वर्णक्रमभङ्गो दृश्यते। अन्तर्गणपठितेषु वर्गक्रमविन्यासबहिर्भूतेषु च धातुषु वर्णक्रमः सर्वथा परित्यक्त एव; अन्योऽपि न कश्चन क्रमो लक्ष्यते।

समानवर्णान्तेषु धातुष्वपि क्रमनियमो नास्ति। तथापि क्वचित् अर्थसाम्यं क्वचित् ध्वनिसाम्यं, क्वचिच्च अनुबन्धसाम्यं वा क्रमनियामकमिव प्रतिभाति। यथा घुषिरादिषु ( ६५४-७४१ ) षान्तेषु अक्ष-तक्षादयः क्षान्ताः एकत्र सन्ति ध्वनिसाम्यात्; तृक्ष-स्तृक्ष-णक्षेति त्रयो गत्यर्थकत्वेन एकत्रोपात्ताः।

यथा आधुनिके आदिक्रमिके विन्यासे पूर्ववर्णस्य समानत्वे तदुत्तरवर्णस्यापि क्रमोऽवधार्यते तथा अस्मिन् धातुपाठे क्वापि न दृश्यते। मन्ये पूर्ववर्णितेन क्रमेण वर्गोपवर्गानुवर्गशो विभक्तेषु धातुषु प्रति विभागं धातु-संख्या नितान्तमल्पा अवतिष्ठते, अतस्तत्र पुनः पौर्वापर्यनिर्धारणं नावश्यकम् अमन्यत आचार्येण। किञ्च अत्रापि पौर्वापर्याग्रहे अर्थमूलको वर्गो व्याहन्येत। एतेन प्राचीना भारतीया विद्वांसो वर्णक्रमिकविन्यासानभिज्ञा आसन् इति मुहुरुद्घोषयन्तः पाश्चात्यविद्वांसः परास्ताः।

इदमत्रावधेयम्। प्राचीनैर्भारतीयैर्विद्वद्भिः अन्तक्रमिको विन्यासः प्रवर्तितः, अर्वाचीनैः पाश्चात्यैस्तु आदिक्रमिकः। आधुनिके काले पाश्चात्यानां विदुषां भारतीयायां विद्यायां प्रवेशे जाते भारतेऽपि आदिक्रमिको विन्यासस्तैः प्रवर्तितः। कालेन अन्तक्रमिकविन्यासस्य भारतीया प्राचीना परम्परा लुप्तेति। न केवलं पाणिनीये धातुपाठे अन्तक्रमिको विन्यासो जीवति, अमरसिंहकृते नामलिङ्गानुशासने ( नानार्थवर्गे ), मेदिनीकोशे, हेमचन्द्रकृतायां देशीनाममालायाम्, एवमन्यत्रापि क्वचित्-क्वचित् तथा विन्यासो दृश्यते। वर्तमानकालेऽपि महावैयाकरणो दीनबन्धुझा स्वप्रणीतस्य मिथिलाभाषाविद्योतनस्य धातुसूचीम् अन्तक्रमेणैव व्यन्यस्यत्। विन्यास आदिक्रमिको वा भवेद् अन्तक्रमिको वा व्यवहारे नास्ति कश्चन विशेषः। उभयविधोऽपि क्रमः पञ्चषैः शब्दैरध उदाह्रियते—

| **आदिक्रमिको विन्यासः** | **अन्तक्रमिको विन्यासः** |
|---|---|
| उत्तर प्रदेश | भारत |
| काश्मीर | पञ्जाब |
| पञ्जाब | विहार |
| बङ्गाल | काश्मीर |
| भारत | महाराष्ट्र |
| महाराष्ट्र | बङ्गाल |
| विहार | उत्तर प्रदेश |

धातूनां वर्णक्रमिकविन्यासो भ्वादिगण एव आश्रितः, तत्रैव धातुसंख्याया आधिक्येन क्रमविन्यासस्योपयोगित्वात्। अदादिप्रभृतिषु गणेषु उदात्तानुदात्त-परस्मैभाषाऽऽत्मनेभाषमूलकाद् वर्गीकरणादेव प्रतिवर्गं धातुसंख्या पञ्चषपरा संवृत्ता। अतः तत्र पुनः क्रमविन्यासो नादृतः। परन्तु अदिप्रभृतिषु गणेषु दशपरा वर्गाः सम्भाव्यन्ते। तथा हि— ( १ ) अनुदात्ता आत्मनेभाषाः, ( २ ) अनुदात्ताः परस्मैभाषाः, ( ३ ) अनुदात्ताः अनुदात्तेत आत्मनेभाषाः, ( ४ ) अनुदात्ता उदात्तेतः परस्मैभाषाः, ( ५ ) अनुदात्ताः स्वरितेत उभयतोभाषाः। एवमेव पञ्चविधा उदात्ता अपीति सङ्कलनया दश। परन्तु अदिप्रभृतिषु गणेषु एवंविधो वर्गो बहुधा विकीर्णो दृश्यते। यथा उदात्ता उदात्तेतो धातवः चतुर्षु स्थानेषु विकीर्णाः— यु ( १०५८ ), विद् ( १०८९ ), श्वस् ( १०९४ ), षस ( ११०३ )। किमर्थं ईदृशो व्यतिक्रम इति सुधीभिश्चिन्तनीयम्।

चुरादिगणे धातूनां वर्गीकरणं न तथा क्रमानुवर्ति यथा गणान्तरेषु। वर्गीकरणस्य आधारोऽप्यत्र सर्वथा भिन्नः। मुख्यतोऽत्र धातवः साधन-प्रक्रियामनुसृत्य विन्यस्ताः।

## २. धातूनां बहुरूपत्वम्

आलोच्ये धातुपाठे एकैकस्य धातोर्बहुधा नाना उपरूपाणि ( एलोमार्फीनि ) दृश्यन्ते। यथा कुर्द-खुर्द-गुर्द-गुद क्रीडायाम् इत्यत्र एकस्य कुर्द-धातोः चत्वारि उपरूपाणि। एषु प्रायेण एकं सर्वतोऽधिकं प्रयुक्तं रूपं मूलभूतम्, अन्यानि तस्यैव अपभ्रंशभूतानि प्रतीयन्ते। ननु असाधुभ्यो विविच्य साधूनामुपदेशाय प्रवृत्ते व्याकरणशास्त्रे कथं तदङ्गभूते धातुपाठे पठितानां खुर्द-गुर्देत्यादीनामपभ्रंशता ? अत्राहुः—व्याकरणं नाम प्रयुक्तानामेव अन्वाख्यानम्; अप्रयुक्ता व्याकरणसिद्धा अपि शिष्टैर्विगर्हिता अपभ्रंशपदभाजो भवन्तीति। किञ्च अपभ्रंशा अपि शिष्टैः प्रयुक्ताः सन्तः साधुत्वं प्रतिपद्यन्ते। तथा हि नृत् इत्यस्य अपभ्रंशभूतोऽपि नट् धातुः साधुषु गण्यते। नन्वेवं यानि उपरूपाणि खुर्द-गुर्देत्यादीनि शिष्टैः कदापि न प्रयुक्तानि तानि कुतो धातुपाठे निवेशितानि ? त्रिविधा हि शब्दाः— ( १ ) वेदमात्रप्रसिद्धाः, ( २ ) लोके शास्त्रेषु शिष्टैः प्रयुक्ताः, ( ३ ) शिष्टेतरलोकमात्रप्रसिद्धाश्चेति। तेषु पाणिनीयसूत्राणि प्रथमविधान् द्वितीयविधांश्च शब्दान् अन्वाचक्षते, न तृतीयविधान्। धातुपाठस्तु त्रिविधानपि शब्दान् इति।

वैदिके लौकिके च संस्कृत-साहित्ये प्रयुक्तानां धातूनां तदर्थानां च परिनिर्धारणं ह्विट्ने-प्रभृतिभिः प्रतीच्यपण्डितैः महता श्रमेण साकल्येन कृतम्। ते हि संस्कृत-साहित्ये अप्रयुक्तान् धातुपाठगतान् सर्वानिव धातून् कृत्रिमान् प्रक्षिप्तान् वा विगणय्य उपेक्षितवन्तः। वस्तुत ईदृशा धातवोऽपि अवश्यं क्वचित् कदाचिद् वा प्रयुज्यमाना आसन् इत्यत्र नास्ति सन्देहस्यावकाशः। ज्ञापितं चैतत् 'सर्वे देशान्तरे' इति वदता वार्त्तिककारेण। एषु के-के धातवः किंकिंस्वरूपाः कस्मिन्-कस्मिन् काल-विशेषे देश-विशेषे च प्रयुज्यमाना आसन् के च शिष्टप्रयुक्तानां धातूनाम् उपरूपभूताः, के वा मौलिकाः, कथं चैषामुपरूपाणां विकास इत्यादयः प्रश्ना गहनं विवेचनमपेक्षन्ते। एवंविधेन गवेषणेन पाणिनि-कालीनानाम् उपभाषाणां स्वरूपपरिज्ञाने महत् साहाय्यं भविष्यति। जिज्ञासोत्पादनमात्रलक्ष्यकेऽस्मिन् लघुनि प्रबन्धे पूर्वोक्तानां सर्वेषां प्रश्नानां विवेचनं न सम्भवतीति धातुपाठे लक्ष्यमाणा उपरूपजनका वर्णविकारा एवात्र विवेच्यन्ते।

**( क ) व्यञ्जन-लोपः**—ट-त-द-र-ल-व-श-ह इति नवानां व्यञ्जनानां लोपो दृश्यते। तत्र र-लोपस्य संख्या भूयिष्ठा, ल-व-स-ह इति चतुर्णां भूयसी, अन्येषाम् अल्पैव। उदाहरणानि—**टलोपस्य** ष्टगे-षगे ( ७९० ), ष्टम-षम ( ८५५ ); **तलोपस्य** तुहिर्-उहिर् ( ७ ), रिख-त्रिख ( १५५ ); **दलोपस्य** द्राघृ-राघृ ( ११२ ), द्युत्-युत् ( ३२ );

**रलोपस्य** कुर्द-गुद ( २४ ), क्रदि-कदि ( ७० ), स्रेक-सेक ( ८१ ), व्रज-वज ( २५३ ), रुठ-उठ ( ३३७ ), त्रुप-तुप ( ४०५ ), घूर्ण-घुण ( ४३९ ), ह्रेष-हेष ( ६२३ ), क्रदि-कदि ( ७५५ ), श्रण-शण ( ७९९ ), भ्रक्ष-भक्ष ( ९१७ ), श्रै-शै ( ९४४ ), द्रु-दु ( ९७० ), ज्रि-जि ( ९७२ ); **ललोपस्य** ग्लेप-गेप ( ३७० ), जल्प-जप ( ३९८ ), ग्लेव-गेव ( ५०४ ), म्लेव-मेव ( ५०६ ), ग्लेष-गेष ( ६१५ ), श्लाख-शाख ( १२७ ); **वलोपस्य** क्वण-कण ( ४५२ ), ध्वण-धण ( ४५४ ), त्वक्ष-तक्ष ( ५५६ ), ह्वल-वल ( ६६० ), व्युस-युस ( १२४० ), श्वठ-शठ ( १५८९ ), त्वगि-तगि ( १५० ), त्वञ्च-तञ्च ( १९२ ); **शलोपस्य** श्वल्क-वल्क ( १५९४ ), श्च्युत्-च्युत् ( ४१ ); **सलोपस्य** ष्टेप तेप ( ३६५ ), स्मील-मील ( ५२१ ), स्पृ-पृ ( १२८४ ), ष्टिम-तिम ( ११४९ ), स्तृह-तृह ( १३७४ ); **हलोपस्य** ह्रेष-रेष ( ६२३ ), ह्लस-हस ( ७१४ ), हेठ-एठ ( २६८ )।

**( ख ) स्वर-विकाराः**—केचन स्वरविकारा ध्वनिविकासमूलकाः, केचन विकल्पमूलकाः, केचन पुनः कादाचित्का यादृच्छिकाश्च प्रतीयन्ते। तद्यथा कचि-काचि ( १७० ), रवि-रिवि ( ५९८ ), मिश-मश ( ७२५ ), क्षणु-क्षिणु ( १४९० ), त्रख-त्रिख ( १५५ ), षह-षुह ( ११५३ ), मच-मुचि ( १७२ ), रुष-रिष ( १२५५ ), ष्टिम-ष्टीम ( ११५० ), टिक-टीक ( १०४ ), तुड-तूड, हुड-हूड ( ३५४ )।

इ-ए विनिमयः प्राकृते अपभ्रंशे च यत्र-तत्र अवलोक्यते। अयं विनिमयः उपरूपात्मको यादृच्छिकश्च, न तु व्याकरणाश्रितः। उदाहरणानि—तिप-तेप, ष्टिप-ष्टेप ( ३६५ ), क्षिवु-क्षेबु ( ५६८ ), पिसृ-पेसृ ( ७२१ ), मिध-मेध ( ८९४ ), निद-नेद ( ८९७ ), विथ-वेथ ( ३४ )।

ऋकारस्थाने अ-इ-उ विकाराः प्राकृते अपभ्रंशे च भूरि प्रयोगाः ध्वनिविकासजन्याश्च। एषु ऋ अ इति प्राचीनतमः प्रतिभाति तस्य लौकिके संस्कृते भूरि दर्शनात्; यथा भृत्यः भटः, नृत्यति नटति। अपरे विकाराः प्रायेण प्राकृतेष्वेव दृश्यन्ते। उदाहरणानि—जृभ-जभ ( ३८९ ), गृज-गज ( २४९ ), ऋभ-षिभ ( ४३२ ), घृणि-घिणि ( ४३५ ), घृणि-घुणि ( ४३५ ) इत्यादयः।

आ ए इति विकारस्य एकमात्रमुदाहरणं मया दृष्टम्—भ्राज-भ्रेज ( १८० )। इदमत्र विशेषतोऽवधेयं यद् भृज्, भ्रस्ज्, भ्राज्, भेज् इति चत्वारोऽपि धातवो रूपतो भिन्ना अपि वस्तुतोऽभिन्नाः तत्र भ्रस्ज् इति मूलम्। भ्रेज् इत्यत्र एकारस्तु सकारलोपनिमित्तकः ( यथा संस्कृतम् मेधास् मस्धास् आवे मज्दा इति )।

**( ग ) महाप्राणत्वम्**—सर्वेषां स्पृष्टानाम् अल्पप्राणानां महाप्राणप्रतिरूपाणि धातुपाठेऽवलोक्यन्ते। तथा हि केलखेल ( ५४० ), कर्ब-खर्ब ( ५८४ ), कष-खष ( ६८८ ), किट-खिट ( ३०३ ), कुर्द-खुर्द ( २२ ), कुज्-खुज् ( २०० ), अगि-वगि-मगि-अघि-वघि-मघि ( १४६ ), चम्-छम् ( ४७३ ), जम्-झम् ( ४७३ ), जष-झष ( ६९१ ), जर्ज-झर्झ ( ७१९ ), जृष्-झृष् ( ११५६ ), रुट-लुठ ( ७५० ), दिवि-धिवि ( ५९५ ), द्राक्षि-ध्राक्षि ( ६७३ ), द्राङ्धाङ् ( २८९ ), द्रेक-ध्रेक ( ७९ ), द्राघ-ध्राघ ( ११४ ), तुप-तुफ, वुप-वुफ ( ४०५ ), तृप-तृम्फ ( १३३४ ), दृप-दृम्फ ( १३३९ )। संस्कृते ईदृशं महाप्राणत्वं दुर्लभम्। एक एव आचार्यः पौष्करसादिः चयो द्वितीयाः शरि इति प्रत्यपादयत्। एकाचो बशो भष् इति सूत्रं ध्वनिविकारं प्रतिपादयति, न पुनर्धातोः उपरूपम्। संस्कृतमहाप्राणस्य स्थाने पारस्यभाषायाम् अल्पप्राणता प्रायेण दृश्यते। यथा संस्कृतम् भारः, पारसी बार, संस्कृतम् अभूत्, प्रा. अबूद। क्वचित्-क्वचित् संस्कृते अल्पप्राणः पारस्यां महाप्राणतां गच्छति, यथा संस्कृतं वप्र, पा. वफ्र बर्फ; सं० चक्र, पा. चख्र, चरख। इदमत्र

विशेषतोऽवधेयं यद् येषां-येषां धातूनां महाप्राणवन्ति उपरूपाणि धातुपाठे निर्दिष्टानि ते प्रायेण सर्वे वैदिके लौकिकेऽपि च साहित्ये अप्रयुक्ताः एव सन्ति। केषांचन अल्पप्राणवन्ति रूपाणि प्रयुक्तानि लभ्यन्ते, महाप्राणवन्ति सर्वथा अप्रयुक्तानि। एक एव अस्य अपवादो दृश्यते केल-खेल इति, यत्र अल्पप्राणवद् रूपं विहाय महाप्राणवदेव प्रचारमाप। केल-खेलै इत्युभे अपि रूपे क्रीड्धातोर्विकसिते, अतो न वैदिके साहित्ये अनयोः प्रयोग उपलभ्यते इत्यपि अवगन्तव्यम्। अतो मन्ये एवंविधा धातवः तेषामुपरूपाणि च अर्वाचीने काले सीमिते क्षेत्रे मौखिके व्यवहारे प्रचलितानि आसन्, नान्यत्र क्वाऽपीति।

**(घ) घोषत्वम्**—क-च-ट-त-प इति पञ्चापि अघोषवर्णा उपरूपेषु घोषत्वं गच्छन्ति। उदाहरणानि—केप-गेप (३६९), अक-अग (७९४), कै-गै (ऽ४१), तिक-तिग (१२९२), कुठि-गुठि (१६०७), कुर्द-गुर्द (२३), रक-रग (१७६०), अङ्क-अङ्ग (१९५२), चमु-जमु (४७३), चिरि-जिरि (३४), चर्च-जर्ज (७१९), वटि-वडि (१६१०), तेव-देव (५०१), तुर्ब-दुर्ब (५७४), तुहिर-दुहिर (७४०), अत-अद (६२), चते-चदे, तसु-दसु (१२३७), पुस्त-बुस्त (१६१५)। अयं विकारः प्राकृते स्वरयोर्मध्ये परमः प्रचलितः, किन्तु संस्कृते न दृष्टिपथमायाति। अत्र अघोषवन्ति रूपाणि मूलभूतानि, घोषवन्ति च तज्जातानीति वक्तुं न शक्यते। किन्तु सर्वाणि उपरूपाणि वैकल्पिकानि काल-विशेषे क्षेत्र-विशेषे वा नियतानि औपभाषिकानि। शिष्टप्रयोगे कदाचित् क्वचित् अघोषा दृश्यन्ते, कदाचिद् घोषाः; यथा कै-गै इत्यत्र गै इति शिष्टप्रयोगविषयः, कुर्द-गुर्द इत्यत्र तु कुर्द इत्येव। वस्तुत एवं द्विरूपा धातवः प्रायेण सर्वे अप्रयुक्ता एव सन्ति।

कियत्सु धातुषु उपरूपबाहुल्यं परां काष्ठां गतम्। तत्र हि स्पर्शव्यञ्जनानि स्ववर्गीयैः चतुर्भिरपि वर्णैस्त्रिभिर्वा पर्यायेण विनिमयं भजन्ते। यथा—

| | | | |
|---|---|---|---|
| तुर्वी | थुर्वी | दुर्वी | धुर्वी |
| चमु | छमु | जमु | झमु |
| चर्च | ··· | जर्ज | झर्झ |
| वकि | वखि | वगि | वघि |

अनेन व्यापकेन ध्वनि-विनिमयेन प्रतीयते यत् धातु-पाठ-सङ्कलन-काले काचन अपभ्रंश-भाषा चतसृषु उपभाषासु स्पष्टं विभक्ता आसीत्, यासु चतुर्विधानां व्यञ्जनानां मध्ये कश्चन एक एव वर्णोऽभ्युपगतः। दृष्टाश्च एवंविधाः काश्चन उपभाषा अतीतकाले। तथा हि पैशाच्यां घोषस्य स्थाने सर्वत्र अघोषोऽदृश्यत। यथा दामोदरः-तामोतरो, राजा-राच, नगरम्-नकरम् इत्यादि।

**(ङ) रलयोर्विनिमयः**—अयं विकारो वैदिककालमारभ्य इदानीं यावत् नितान्तं प्रचलितः। अयमपि औपभाषिक आसीत् इति प्रतीयते। किन्तु साङ्कर्याधिक्यात् तन्मूलकं विभाजनं न स्पष्टीभवति। अत्र रविशिष्टस्य प्राचीनत्वं लविशिष्टस्य वा इत्यत्र नास्ति विदुषामैकमत्यम्। तथापि वैदिकभाषायां रबाहुल्यम्, संस्कृते ल-बाहुल्यम् इति प्रतिभाति। धातुषु इदानीं संस्कृते कदाचित् र-विशिष्टः प्रयुज्यते कदाचिच्च ल-विशिष्टः। तथा हि रघि-लघि (१०८) इत्यत्र लङ्घतीत्येव प्रयुज्यते, न रङ्घतीति; क्रदि-क्लदि इत्यनयोस्तु क्रन्दतीति प्रयुज्यते, न क्लन्दतीति। उदाहरणानि— ह्राद-ह्लाद (२७), क्रदि-क्लदि (७२), श्रकि-श्लकि (८५), रघि-लघि (१०८), म्रुच-म्लुच (१९९) इत्यादीनि।

### ३. अर्थविचारः

धातुषु अर्थनिर्देशो न पाणिनिना, अपि तु केनचित् परवर्तिना विदुषा कृत इत्यत्र न कस्यापि विदुषो विप्रतिपत्तिः। अतः तं विवादं परित्यज्य यथानिर्दिष्टानाम् अर्थानां मूलं प्रामाण्यं चाधिकृत्य किञ्चिद् विचार्यते।

केचन मूलतः परस्परं भिन्ना भिन्नार्थकाश्च धातवः कालक्रमेण जातेन वर्णविकारेण एकरूपताम् आपन्ना नानार्थकैकधातुरूपेण परिणता अभवन् इति धातुपाठे धातूनामनेकार्थत्वे अन्यतमो हेतुरित्यनुमीयते। एकेनैव उदाहरणेन एतत् स्पष्टीक्रियते। भ्वादिगणे चतुर्थो धातुः 'गाधृ' इति। तस्य त्रयोऽर्था निर्दिष्टाः—प्रतिष्ठा, लिप्सा, ग्रन्थश्चेति। अत्र प्रतिष्ठा नाम दृढत्व-प्राप्तिः यथा जलाशयेषु अवगाहमानस्य पुरुषस्य जाते तलस्पर्शे भवति। अस्मिन्नर्थे गाध् इति इदानीं प्रचलितस्य गाह् ( गाहू विलोड़ने ) इत्यस्य वैदिकं प्राचीनं रूपान्तरम्। द्वितीयोऽर्थो लिप्सा ( लाभेच्छा )। अस्मिन्नर्थे अस्य मूलं गृधु अभिकाङ्क्षायामिति क्र्यादिगणीयो धातुः—गृध् गर्ध गाध। गृहू ग्रहणे इत्ययमपि गृध्-मूलकः। अस्य तृतीयोऽर्थो ग्रन्थ इति निर्दिष्टः। ग्रन्थो नाम सूत्रादिना बन्धनम्। अस्मिन्नर्थेऽस्य मूलं ग्रथि ग्रन्थने क्र्यादिः—ग्रन्थ गत्थ गाथ गाध। एवं त्रयो धातवः क्रमशो जातेन वर्णविकारेण एकरूपताम् आपन्नाः एकं नानार्थकं धातुं जनयामास।

द्वितीयमुदाहरणम् ऋजु गति-स्थान-अर्जन-उपार्जनेषु इति। अत्र प्रथमोऽर्थो गतिः ऋ गतौ इत्यस्मात् प्रसिद्धात् धातोः आगतः। द्वितीयोऽर्जनरूपोऽर्थः प्रसिद्धात् अर्ज् धातोः प्राप्तः। तृतीयः स्थानरूपोऽर्थः कुत आगत इति सम्प्रति दृष्टिपथं नायाति।

अनया सरण्या तत्त्वान्वेषणे कृते अनेकेषां नानार्थकत्वेन निर्दिष्टानां धातूनामेकमूलकत्वं तत्तदर्थविशेषवाचकत्वे मूलं च अवधारयितुं शक्यम्।

अतः परं शोधपरायणा युवानः सोत्साहं किञ्चित् करिष्यन्तीत्याशया विरमामि।

**[ इति ]**

# वेदाः प्रमाणम्

□ कुलानन्द मिश्रः

'वेदाः प्रमाणम्' इत्यादौ यथैकवचनस्य साधुत्वं विचारितं, न तथा लिङ्गस्येति लिङ्गस्य विचार आवश्यकः। यदि तु नियतलिङ्गकातिरिक्तस्थले एव समानलिङ्गकत्वनियमः, 'भवान् मित्रम्' इत्याद्यनुरोधात्, प्रमाणशब्दश्च नियतलिङ्ग इत्युच्यते, तदा 'अप्पूरणीप्रमाण्योरि'ति सूत्रासङ्गतिः। तेन प्रमाणशब्दस्यापि नियतलिङ्गकातिरिक्तत्वम्। अत एव 'प्रमाणायां स्मृतौ' इत्युक्तं कुमारिलभट्टेन। 'स्त्री प्रमाणी यस्य स स्त्रीप्रमाण' इत्युक्तं कौमुद्यादौ। न चैवं 'प्रमाणी' 'प्रमाणे'त्युभयं रूपं कथं स्यादिति वाच्यम्, 'बाह्वादिभ्यश्चे' ति सूत्रात् वैकल्पिकतया तेन ङीषो विधानात्। न च यौगिकः प्रमाणशब्दस्त्रिलिङ्गः, रूढस्तु नपुंसकमात्रलिङ्ग इति वाच्यम्, सर्वस्यैव प्रमाणशब्दस्य यौगिकत्वात्। अत एव 'प्रमाणप्रमेय०' इत्यादिसूत्रेऽपि 'प्रमाकरणं प्रमाणमि'त्येव तद्व्याख्यातारः। एवञ्च सत्यप्येकवचने 'वेदाः प्रमाण' इत्येव स्यात्। तथा चाहुरभियुक्ताः—

**या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः।**
**प्रायस्ता एव कर्त्तव्याः समानार्थे विशेषणे॥ इति।**

'समानार्थे विशेषणे' इति अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजके पदे इत्यर्थः। नियतलिङ्गकस्थले 'भवान् मित्रमि'-त्यादौ लिङ्गव्यत्ययदर्शनात् 'प्राय' इति। बाहुल्येनेति तदर्थः। संख्यावचनमित्यर्थः। प्रातिपदिकार्थसूत्रे 'वचनं संख्ये'ति सिद्धान्तकौमुदीग्रन्थः। तथा च विशेष्यवाचकपदोत्तरं यद् वचनं श्रूयते, अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजके पदे तदेकवचनं कर्त्तव्यमित्यर्थः। तेन 'घटा नील' इति न प्रयोगः। नियतवचनस्थले 'मैथिली तस्य दारा' इत्यादावतिव्याप्तिनिरासाय अत्रापि 'प्राय' इति। विभक्तयोऽपि प्रथमाद्याः सप्तम्यन्ताः, ता एव कर्तव्या या विशेष्येषु दृश्यन्ते नहि भवति 'नीलस्य घट' इति। 'चतुर्थ्यर्थे बहुलं च्छन्दसि' इति, 'षष्ठचर्थे चतुर्थी वक्तव्या' इति, 'यजेश्च करणे' इति सूत्रवार्त्तिकोदाहरणविषये अतिव्याप्तिरित्यर्थः। 'प्राय' इति अत्रापि विशेषणम्। एवञ्च विशेष्यवाचकं पदं यल्लिङ्गकं भवति, तल्लिङ्गकमेव विशेषणवाचकपदमपि अभेदान्वयस्थले प्रयोक्तुमुचितम्। तथा च 'वेदाः प्रमाणः' इत्येव स्यान्न तु 'वेदाः प्रमाणमि'त्याशङ्का।

समाधानं तु करणत्वं द्विविधम्, तत्र वैयाकरणपरिभाषितमेकं, तथा च सूत्रम्—'साधकतमं करणमि'ति। एतत्सूत्रं व्याचक्षाणं वाक्यपदीयम् उच्यते—

**'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।**
**विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्'॥ इति**
**'वस्तुतस्तदनिर्देश्यं न हि वस्तुव्यवस्थितम्।**
**स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः'॥ इति च**

'व्यापारवदसाधारणं कारणं करणमि'ति च द्वितीयम्। तच्च 'यद्व्यापाराव्यवधानेन फलनिष्पत्तिर्विवक्ष्यते तत् करणमि'त्यर्थे योगः, 'व्यापारवदसाधारणं कारणं करणमि'त्यर्थे च रूढिः। न च वैपरीत्यमेव न कुत इति वाच्यम्, व्याकरणस्य योगार्थनिर्वचनपरत्वात्। लोकसिद्धे ह्यर्थे रूढिः। रूढिरिह प्रसिद्धिः। एवञ्च 'स्त्री प्रमाणी यस्ये'त्यत्र यौगिकः प्रमाणशब्दः। एवं प्रमाणायां स्मृतावि'त्यत्रापि। 'वेदाः प्रमाणमि'त्यत्र तु प्रमाणशब्दो रूढः। स च नियतनपुंसक एवेति 'वेदाः प्रमाणमि'त्यस्यैव साधुत्वं, न तु 'वेदाः प्रमाण' इत्यस्य। अत एव—

**'असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।**
**सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः'** ॥ इत्यत्र

अन्तःकरणप्रवृत्तयः प्रमाणमि'ति प्रयोगश्चोपपद्यते। एवमादौ प्रमाणमित्येकवचनेन प्रमाणत्वगतानुमान-त्वावच्छिन्नमेकत्वं विवक्षितम्। तच्च सजातीयद्वितीयरहितत्वम्। सजातीयं प्रमाणत्वं तद्द्वितीयरहितत्वम् एकवचनेन बोध्यते। एवञ्च यत्र यत्रान्तःकरणप्रवृत्तिस्तज्ज्ञानं प्रमेति सिद्धम्। न चान्तःकरणप्रवृत्तिरर्थतश्चेति तज्ज्ञानमपि प्रमा स्यादिति वाच्यम्। सतामन्तःकरणप्रवृत्तय इत्यन्वयः। एवञ्च यत्र यत्र सतामन्तःकरणप्रवृत्तिस्तज्ज्ञानं प्रमेति फलति। सन्तो ह्याप्ताः। अतदर्थे अन्तःकरणप्रवृत्तिमतामाप्तत्वायोगेऽस्त्येव। एवमेव 'वेदाः प्रमाण'मित्यत्रापि। तेन वेदार्थज्ञाने कुत्रापि भ्रमत्वं नास्तीत्यर्थः। 'वेद एव प्रमाणमि'त्यत्र.तु प्रमातरि प्रमाणशब्दप्रयोगः। प्रमातरि प्रमाणशब्दः 'कृत्यल्युटो बहुलमि'ति सूत्रनिष्पन्नः। स च नपुंसक एवेति स्पष्टं लिङ्गानुशासनविज्ञातॄणाम्। तथाहि—

**'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृष्वि'त्यमरः।**
**'प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि।**
**इयत्तायाश्च हेतौ च क्लीबैकत्वे प्रमातरि'** ॥ इति मेदिनीकोषः।

अत्र 'क्लीबैकत्वे प्रमातरी'ति कथनात् 'श्रीमन्तः प्रमाणमि'त्यादयः प्रयोगाः सम्पद्यन्ते। एवमेव 'तन्मे प्रमाणमि'त्यादिन्यायकुसुमाञ्जलिप्रोक्तमपि सङ्गच्छते। अथवा योऽयम्प्रमाणशब्दो वास्तविकस्य प्रमाणशब्दस्य बोधक-स्तस्य सम्बन्धो यद्यपि राजनि दुर्घटः, तथापि असम्बन्धे सम्बन्धाभिधानातिशयोक्तिरिति[1] ॥

१. निबन्धोऽयं लेखकस्य स्वरध्वनौ ध्वनियन्त्रे सुरक्षितोऽस्ति—स्नातकोत्तर व्याकरणविभागे दरभङ्गा संस्कृतविश्वविद्यालये।

# लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति

□ मुरलीधर पाण्डेयः

पुण्यश्लोकानां वन्दनीयचरितानां केषाञ्चन महावैयाकरणानां कानिचित् पदानि कानिचिद् वाक्यानि चैवं लभामहे, यैः तेषां तत्र क आशय इति विज्ञातुं न पारयामहे। यथा—

**( १ ) मनोरथः**—मनसोऽर्थः अभिलाषः प्रयोजनं वा 'मनोऽर्थः' इतिपदम्। अस्यैवापभ्रंशो 'मनोरथः' इतिपदम्। अस्य विग्रहो मनसो रथ इति। मनसो रथस्तु न कश्चन प्रसिद्धोऽस्ति। तथापि लक्षणया अभिलाषार्थे प्रयुज्यते। पूज्यैर्वैयाकरणैरेतदपभ्रंशपदं साधु मत्वा साधयितुं महान् प्रयासो विहितः। मनसः सकारस्य रुत्वे कृते 'हशि चे'ति सूत्रेण उत्वे प्राप्ते 'रोरि' इतिसूत्रेण लोपे प्राप्ते 'विप्रतिषेधे परं कार्यम्' इति सूत्रानुरोधेन लोपस्यैव प्राप्तौ तैरुक्तम्–'पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव मनोरथ इति। मनोरथपदस्यापभ्रंशत्वस्वीकारे एतावान् प्रयासो न भवेत्।

**( २ ) रामात्**—इत्यत्र *वैयाकरणसिद्धान्तकौमुद्यामु*क्तम्-'जश्त्वं वावसाने रामात् रामादिति।' अत्र तत्त्व-बोधिन्यामुक्तम्–'अत्राहुः जश्त्वे कृतेऽवसाने चर्त्वमिति न मन्तव्यम्। किन्तु येन नाप्राप्तिन्यायेन अवसाने चर्त्त्वस्य जश्त्वापवादत्वाच्चर्त्त्वाभावपक्षे जश्त्वमिति बोध्यम्।' किन्तु लिट्प्रयोगसाधने उक्तम्-'जश्त्वचर्त्त्वे अर्थात् ढस्य पूर्वं जश्त्वं ततश्चर्त्त्वम् लिट् लिडिति।' अत्र स्पष्टं पूर्वापरवैपरीत्यम्। अत्र केचनैवं वदन्ति यद् जश्त्वचर्त्त्वे इत्यत्र पदच्छेदः—जश् तु अचर्त्व इति। परन्तु इदम् अकिञ्चित्करमिव प्रतिभाति।

**( ३ ) राजा**—इति प्रयोगसाधने *वै० सि० कौमुद्याम्*—'हल्ङ्याादिलोपात् परत्वात् नान्तलक्षणदीर्घः क्रियते।' किन्तु 'दीर्घाहन्' शब्दे तु नलोपानन्तरं तस्यासिद्धत्वात् नान्तलक्षणदीर्घः क्रियते। अत्रापि पूर्वापरवैपरीत्यम्।

**( ४ ) पुरतः**—***रसगङ्गाधरे* उपमालङ्कारप्रकरणे श्रीमता पण्डितराजेन जगन्नाथेन श्रीमदप्पयदीक्षितस्यैकं श्लोकमुद्धृत्य तत्र प्रयुक्तस्य 'पुरतः' इति पदस्य विषये उक्तं यत् '*पुर्शब्दात् तसिल्प्रत्यये पुर् + तः = पुस्तः* इति भवितुमर्हति न तु *पुरतः* इति। अत एव कालिदासेन रघुवंशे द्वितीयसर्गे अमुं पुरः पश्यसि देवदारुम्** इत्युक्तमित्यादि। अत्र श्रीमता नागेशभट्टेन रसगङ्गाधरस्य टीकायां 'पुरतः' इत्यस्य सिद्ध्यर्थं त्रय उपायाः प्रदर्शिताः–'पुरतः इति निपातनम्। अथवा 'पुर' आदेशं कृत्वा सर्वविभक्तिभ्यस्तसिल्, अथवा पुर् अग्रगमने चौरादिकाद् धातोः ण्यन्ताभावे 'पुर' शब्दं संसाध्य 'पुरत' इति साधनीयम्।' किन्तु पुर् अग्रगमने इति धातुस्तुदादिगणे पठितो न तु चुरादिगणे। वस्तुतस्तु पुरशब्दोऽकारान्तोऽपि दृश्यते यथा–**पुरः पाटलिपुत्रेऽङ्गे गुग्गुलौ तु पुमानयम्** इति रभसः, **स्यात् पुरः पुरतोऽग्रतः** इत्यमरकोषः, **यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः** इति नीतिशतके भर्तृहरिः।

**( ५ ) मीमांसा**—मीमांसेतिपदं मान्धातोर्निष्पद्यते। अत्र त्रयो मान् धातवः–मान् पूजायामिति भ्वादौ, मान् स्तम्भे इति चुरादौ, मान् पूजायामित्यपि चुरादौ। किन्तु मान् पूजायमिति ३०१ संख्याद्वेऽङ्किते चौरादिके धातौ श्रीमता भट्टोजीदीक्षितेनोच्यते–'विचारणे तु भौवादिको नित्यसन्नन्त' इति। एतेन प्रतीयते यद् भ्वादौ 'मान् विचारणे' इत्यपि कश्चन धातुरासीत्। केनापि कारणेन भ्वादावस्य पाठोऽधुना नोपलभ्यते।

**( ६ ) वञ्चयति : वञ्चयते**—'गृधिवञ्चोः प्रलम्भने' ( १।३।६९ ) इति सूत्रानुसारं वञ्चनेऽर्थे 'वञ्चयते' इति भवति, वर्जनेऽर्थे 'वञ्चयति' इति भवति। यथा अहिं वञ्चयति वर्जयतीत्यर्थः। किन्तु 'लियः सम्मानशालिनीकरणयोश्च' ( १।३।७० ) इतिसूत्रे 'बालमुल्लापयते वञ्चयतीत्यर्थः' इति श्रीमता दीक्षितेन वै० सि० कौमुद्यामुच्यते। वस्तुतोऽत्र वञ्चनमर्थः वञ्चयते इत्यात्मपदेन स्यात्।

**( ७ ) भूवादयो धातवः** ( १।३।१ )—अस्य सूत्रस्यार्थः क्रियावाचिनो भ्वादयो धातुसंज्ञकाः स्युः। अस्यार्थस्य निष्पत्तये भूश्च वाश्चेति भूवौ आदिश्च आदिश्चेति आदी, भूवौ आदी येषां ते भूवादयः। अत्र आदिशब्दे श्लेषः एकशेषश्च। एक आदिशब्दः प्रभृत्यर्थकः अपरः सदृशार्थकः। तेन भूप्रभृतयो वा सदृशाः इत्यर्थः। सादृश्यं च क्रियावाचित्वेन। अतः क्रियावाचिनो भ्वादयो धातुसंज्ञकाः स्युरित्यर्थः सम्पद्यते।

किन्त्वत्र भूश्च वाश्चेति इतरेतरयोगद्वन्द्वप्रयासोऽकिञ्चित्कर इव प्रतिभाति। यथा आदिशब्दे एकशेषः श्लेषमूलकस्तथैव भूशब्देऽपि एकशेषः श्लेषमूलको भवितुमर्हति। *भू + आदि* शब्दयोः यणि कृते *भ्वादयः* इति स्यात् *भूवादयः* इत्यपि स्यात्। प्राचीनकाले यणि कृते स्वराणामपि श्रवणमासीत्। यथा *सु + अर्णम् = स्वर्णम् सुवर्णमि*ति च। यथा च *सु + अः = स्वः सुवश्चे*ति। श्रीपिङ्गलाचार्यकृते पिङ्गलसूत्रे 'इयं वा' ( २।२ ) इति सूत्रमपि वर्तते, उदाहरणं च *त्रि + अम्बकम् = त्र्यम्बकम् त्रियम्बकं* च *स्वर्गः सुवर्गश्चे*त्यादि। इयङुवङादेशोऽप्यस्यैवैकं रूपम्। तथैव भगवता पाणिनिना *भ्वादयः भूवादय* इत्युभयपदप्रयोगार्हतायां *भूवादय* इत्येवाङ्गीकृतं भवेत्। यद्यपि पाणिनिनये पिङ्गलच्छन्दः-सूत्रम्'इयं वा' इतिवत् यणि कृते स्वरश्रवणमूलकं किमपि सूत्रं नास्ति, किन्त्वेवंविधमन्यदपि सूत्रं न वर्तते–यथा रेफशब्दसिद्ध्यर्थं 'रादिफ' इत्यौणादिकं सूत्रम्। यथा च *हरिर्गच्छती*ति सिद्ध्यर्थं वाक्यसंस्कारपक्ष आश्रीयते। किन्तु चान्द्रव्याकरणे 'नामिनो र' इति सूत्रमेव विद्यते। अत्र क्रियावाचिवाशब्दाभावे पृथिवीवाचिभूशब्दग्रहणशङ्का नोचिता। यतो हि यथा 'अदिप्रभृतिभ्यः शपः' ( २।४।७२ ) 'दिवादिभ्यः श्यन्' ( ३।१।६९ ) चेत्यादौ अदादिदिवादिगणपठितानामेव ग्रहणं भवति तथैव भ्वादिगणपठितानामेवात्रापि ग्रहणं स्यात्। सर्वत्रैव गणपाठेषु गणपठितानामेव स्वरूपतः शब्दानामेव ग्रहणं भवति न तु तत्तच्छब्दार्थवाच्यन्यशब्दानाम्। एवमेव वाशब्दाभावे भूशब्दार्थवाचिपृथिव्यादिग्रहणं न भविष्यति। यथा *'भृशादिभ्योभुव्यच्वेर्लोपश्च हलः'* ( ३।१।१२ ) इति पा० सूत्रे *भृशादिभ्यः* इति कथनेन भृशादिगणपठिता भृशशीघ्रचपलमन्दादिशब्दा एव गृह्यन्ते न तु भृशु अधःपतने ( १२२५ ) भ्वादिगणपठितो धातुः, भृशि आप्यायने ( १७८८ ) इति चौरादिकश्च गृह्येत। एवमेव *भ्वादि* इत्युक्ते भ्वादिधातुगण एव ग्रहीष्यते।

**( ८ )** एवमेव *वैयाकरणसिद्धान्तकौमुद्यां* कारकप्रकरणं, *लघुसिद्धान्तकौमुद्यां* विभक्त्यर्थप्रकरणं, *परमलघु-मञ्जूषायां* कारकार्थविचारप्रकरणं, *वैयाकरणभूषणसारे* च सुबर्थनिर्णयप्रकरणं अस्ति। अत्रेदं विचारणीयं यद् षष्ठ्याः कारकत्वं नास्तीति स्वीकुर्वतां कारकप्रकरणे षष्ट्यर्थविचारः कथं सम्भवति। 'विभक्तिश्च'( १।४।१०४ ) इति पा० सूत्रेण सुप्तिङोः विभक्तिसंज्ञायां विभक्त्यर्थप्रकरणे तिङर्थविचारोऽपि सम्भवति। एवमेव *परमलघुमञ्जूषाया*मपि। *वैयाकर-भूषणसारोक्तं* सुबर्थनिर्णयप्रकरणमिति नाम रोचते।

अत एवंविधानां शब्दानां वाक्यानां च प्रयोगे तेषां तेषां पूज्यानां परममहावैयाकरणानां चेतःसु किमासीदिति त एव विदाङ्कुर्वन्तु। लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति। **[ इति ]**

# काशिका कौमुदी च

□ वनेश्वर पाठकः

*काशिका कौमुदी* चेति ग्रन्थद्वयं पाणिने*रष्टाध्याय्याः* व्याख्यानग्रन्थरत्नद्वयम्। तत्र पूर्वा वृत्तिग्रन्थेषु प्राचीनतमा, सर्वाधिकमहत्त्वपूर्णा, प्रामाणिकत्वेन सर्वैः समादृता, प्रक्रियाग्रन्थानामप्याधारभूताऽस्ति। अपरा च प्रक्रियाग्रन्थेषु सर्वाधिकलोकप्रिया, अधुना पठन-पाठन-क्रमे सर्वैः समभावेन समाश्रिता पाणिनीयव्याकरणस्य पर्यायभूता च।

पाणिनिना*ऽष्टाध्यायीग्रन्थः* सूत्रशैल्यां लिखितः, तेन 'लक्ष्यलक्षणे व्याकरणम्' इति सिद्धान्तस्यानुसरणं न कृतम्। तेन शब्दानां तेषां रूपाणां च सिद्धेरुपायाः पार्थक्येन न प्रदर्शिताः। केवलं सूत्रेष्वेव स्वं समस्तं व्याकरणं विरचितम्। तथा हि वार्त्तिककारेणोक्तम्—'नहि पाणिनिना शब्दाः प्रोक्ताः किं तर्हि सूत्रम्[१]।' स्वयं वार्त्तिककारेणापि 'शोभना खलु पाणिनेः सूत्रस्य कृति[२]रिति' सूत्रशैल्याः प्रशंसां कुर्वता सूत्रशैल्यामेव वार्त्तिकानि लिखितानि। काशिकाकारेणापि पाणिनेः सूत्रशैल्याः प्रशंसा कृता—'महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य'[३]।' 'विचित्रा हि सूत्रस्य कृतिः पाणिनेः पाणिनिना वा'[४]। वस्तुतः ३९९६[५] सूत्रेषु विशालतमव्याकरणस्य रचना पाणिनेः सूत्रशैल्या अनुपमं निदर्शनम्।

परन्तु पाणिनेः सूक्ष्मेक्षिका संश्लिष्टशैली च तस्य सूत्राणामर्थावगतौ काठिन्यमजनयाताम्। कात्यायनेन पतञ्जलिनापि पाणिनेः केवलसूत्रात्मकस्य (न तु लक्ष्यलक्षणात्मकस्य) शास्त्रस्य प्रवृत्तिं परिज्ञातुं सूत्राणां व्याख्यानस्यावश्यकताऽन्वभावि। परिभाषेन्दुशेखरकारेण नागेशेनाप्यमुमेवाशयं मनसि निधाय प्रोक्तम्—'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्'। अतः पाणिनेः सूत्राणामाशयं स्पष्टीकर्तुं वृत्ति-वार्त्तिक-टीका-व्याख्या-भाष्यादि-व्याख्यानग्रन्थानां रचना सञ्जाता। पतञ्जलिना व्याख्यानग्रन्थानां स्वरूपमपि निरूपितम् 'न केवलं चर्चापदानि व्याख्यानम् वृद्धिः, आत्, ऐच् इति। किं तर्हि? उदाहरणम्, प्रत्युदाहरणम्, वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति[६]।'

सूत्राणां लघुव्याख्यानं (पदच्छेदोदाहरणप्रत्युदाहरणादियुक्तं) वृत्तिः कथ्यते, वृत्तेर्व्याख्यानं च वार्त्तिकम्। सूत्राणां तात्पर्यार्थबोधिका व्याख्या वृत्तिः, वृत्तेर्विस्तृतं विवेचनं वार्त्तिकम्, वार्त्तिकानां विस्तृता व्याख्या भाष्यमिति वृत्ति-वार्त्तिक-भाष्याणां स्वरूपनिरूपकोऽर्थः।

*अष्टाध्याय्या* व्याख्याग्रन्थाः सामान्येन 'वृत्ति' संज्ञयाऽभिधीयन्ते। वृत्तिग्रन्थेषु जयादित्य-वामनकृता *'काशिका'*, काशिकाया व्याख्याद्वयं च, जिनेन्द्रबुद्धिकृता *'काशिकाविवरणपञ्जिका'* (न्यासः), हरदत्तकृता *'पदमञ्जरी'*, अज्ञातनाम्नः कस्यचनाचार्यस्य विमलदेवस्य वा *'भागवृत्तिः'* पुरुषोत्तमदेवस्य *'भाषावृत्तिः'* शरणदेवस्य कृतिः *'दुर्घटवृत्तिः* इत्येता वृत्तयो मुख्याः सन्ति।

*काशिका*—*काशिकावृत्ति*राचार्यजयादित्य-वामनयोः सम्मिलिता रचनाऽस्ति। पाणिने*रष्टाध्याय्या* वृत्तिषु *काशिकै*वैतादृशी वृत्तिर्या पाणिनेः सूत्राणां तेषामर्थानाञ्च यथाक्रमं यथाविधि च परिज्ञाने सर्वथोपयोगिनी। यद्यपि *काशिकावृत्तिः* सर्वतः प्राचीना नास्ति। इतः पूर्वमपि वृत्तयो लिखिता आसन्निति स्वयं काशिकाकारेणापि *काशिकायाः* प्रथमे श्लोके 'क्रियते सारसंग्रहः' इति लिखता स्पष्टीकृतम्। *काशिकाया* व्याख्याकारेण जिनेन्द्रबुद्धिनाऽपि स्वीयायाः *काशिकाविवरणपञ्जिकाया* आरम्भे उक्तम्—

**अन्यतः सारमादाय कृतैषा काशिका यथा**
**वृत्तिस्तस्या यथाशक्ति क्रियते पञ्जिका (पञ्चिका) मया॥**

पतञ्जलि-भर्तृहरि-काशिकाकारप्रभृतयः प्राञ्च आचार्याः साक्षात् पाणिनिमे*वाष्टाध्याय्याः* प्रथमं वृत्तिकारममन्यन्त[७]। परन्तु इदानीं पाणिनेरन्येषां वाचार्याणां वृत्तीनामनुपलम्भात्, सम्प्रत्युपलब्धासु वृत्तिषु *काशिकाया* एव प्राचीनतमत्वात्, *काशिकैव अष्टाध्याय्याः* प्राचीनतमा वृत्तिरिति सर्वसम्मतम्। *काशिकाया* वैशिष्ट्यम्– काशिकाकारेण स्वयमेव ग्रन्थारम्भे स्पष्टीकृतम्। तथा हि—

**वृत्तौ भाष्ये तथा धातुनामपारायणादिषु।**
**विप्रकीर्णस्य तन्त्रस्य क्रियते सारसंग्रहः॥ १॥**
**इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था।**
**व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम॥ २॥**
**व्याकरणस्य शरीरं परिनिष्ठितशास्त्रकार्यमेतावत्।**
**शिष्टः परिकरबन्धः क्रियतेऽस्य ग्रन्थकारेण॥ ३॥**

*काशिकायां* न केवलं सूत्राणां गूढार्थ एव प्रकाशितः अपि तु तत्र गणपाठानां शुद्धं रूपं प्रदर्शितम्, प्राचीनश्लोकात्मकेष्टीनां संग्रहोऽपि कृतः। इत्थम् इष्ट्युपसंख्यानम्, गणपाठस्य शुद्धीकरणं सूत्राणां गूढार्थस्य प्रकाशनं चेति ग्रन्थस्यास्य प्रमुखं वैशिष्ट्यम्।

*काशिकायां*प्राचीनवृत्तीनां व्याख्यानान्यपि विद्यन्ते, येषां साहाय्येन सूत्राणां तदर्थानां च विषये प्राचीनानां मतान्यपि स्पष्टतो ज्ञातानि भवन्ति। महाभाष्यकारेणापि कुणिप्रभृतीनां प्राचीनवृत्तिकाराणां मतानि समाश्रितानि। किन्तु *काशिकायां* काश्चनैतादृश्योऽपि वृत्तयो मतानि च सन्ति *यत्र महाभाष्यतो* मूलतो वैभिन्न्यं दृश्यते। एतादृशेषु स्थलेषु काशिकाकारेण प्राचामाचार्याणां वृत्तयोऽनुसृताः। तेषां मतानि च परिगृहीतानि।

*अष्टाध्याय्या* व्याख्यानेषु उल्लिखितानां टीकाग्रन्थानां भाष्यग्रन्थानां वृत्तिग्रन्थानां चावलोकनेनेदं स्पष्टं व्रजति यद् वृत्तिग्रन्थानां रचनाकालं यावदष्टाध्यायीसूत्राणां पठन-पाठनपरम्परा सूत्रक्रमानुसारिणी आसीत्। सूत्रक्रमानुसारमेवोदाहरण-प्रत्युदाहरण-सूत्रानुवृत्तिद्वारेण सूत्रार्थावगतिः क्रियते-कार्यते स्म। *काशिका* तस्या एव परम्परायाः सर्वोत्कृष्टा रचना। अयं वृत्तिग्रन्थः पाणिनेरष्टाध्याय्या व्याख्यायामुल्लिखितेषु वृत्तिग्रन्थेषु सर्वाधिको विख्यातः, प्रामाणिकतया समादृतः, पाणिनेः सूत्राणां यथाक्रमं यथाविधि परिज्ञानाय पठन-पाठन-पद्धतौ सर्वैः परिगृहीतश्च। पाणिनीयपरम्परायां लिखितानां प्रायः सर्वेषां परवर्तिग्रन्थानामुपजीव्यो ग्रन्थः *काशिकैव*।

*कौमुदी*— भट्टोजिदीक्षितकृता वैयाकरणसिद्धान्तकौमुदी सर्वोत्कृष्टः प्रक्रियाग्रन्थः। सूत्रक्रमानुसारं पठन-पाठन-पद्धतौ शब्दसाधुत्वसिद्धौ प्रयोगसिद्धौ चानावश्यकं काठिन्यमनुभूतं बुद्धिमद्भिर्जिज्ञासुभिः। *अष्टाध्यायी*क्रमे एकशब्दस्य सिद्धौ विभिन्नेष्वध्यायेषु स्थितानां सूत्राणामनुवृत्तिर्वस्तुतो दुरूहा। सूत्रपद्धतौ महत्त्वपूर्णा त्रुटिरियमस्ति यदष्टाध्यायी-क्रमेऽध्येतॄणां रूपसिद्धि (शब्दरूप-धातुरूप) ज्ञानमतीव दुष्करमस्ति। अतः स्वरूपस्य लाघवस्य च दृष्ट्या प्रक्रिया-पद्धतिः सर्वैः समाश्रिता। फलतोऽष्टाध्याय्याः पठन-पाठन-परम्परा परिलुप्तैव सञ्जाता, आचार्यश्च प्रक्रियाग्रन्थरचनायां प्रावर्तन्त।

प्रक्रियाग्रन्थेषु अष्टाध्यायीक्रमं परित्यज्य प्रयोगसिद्धिमात्रमनुध्याय संज्ञा-परिभाषा-सन्धि-सुबन्त-स्त्रीप्रत्यय-कारक-समास-तद्धित-तिङन्त-कृदन्तानाम् अन्ते च स्वरवैदिकप्रक्रियायाः संघटना कृता। सिद्धान्तकौमुदीकारेण मुख्यतया *'महाभाष्यम्'* रामचन्द्राचार्यस्य *'प्रक्रियाकौमुदी'* चेति ग्रन्थद्वयं स्वग्रन्थस्याधारत्वेन गृहीतम्। सूत्राणामुदाहरणा-नाञ्चोपन्यासे *कौमुद्या* इदमेव ग्रन्थद्वयमाधारभूतम्, न तु *काशिकावृत्तिः*। काशिकाकारेण *भाष्य*मुक्तानां *भाष्य*विरुद्धा-नाञ्च मतानां यत्र-तत्र समावेशः कृतः। पाणिनेर्मूलसूत्राणां रूपपरिवर्तनमपि तेन यत्र-तत्र कृतम्। भूयसां वार्त्तिकानां पाठोऽपि तेन सूत्रेषु समावेशितोऽस्ति। पदमञ्जरीकारेणापीदं तत्तत्स्थानेषु सङ्केतितम्। एतद्विपरीतं कौमुदीकारः सर्वात्मना *भाष्य*मतानुयायी विद्यते। मुनित्रयस्य मतान्यनुसृत्य तद्विरोधिमतानि तिरस्कृत्य च वैयाकरणानां सिद्धान्तानां सरलसुगमया पद्धत्या प्रकाशनमस्य ग्रन्थस्य उद्देश्यमस्ति। तथा चोक्तं ग्रन्थकारेण—

**मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च।**
**वैयाकरणसिद्धान्तकौमुदीयं विरच्यते॥** इति।

भट्टोजिदीक्षितः परमतखण्डनरसिक आसीत्। अत्रैकमुदाहरणं हरदत्तमतखण्डनपरं प्रस्तूयते। उपर्युक्ते मङ्गलश्लोके 'तदुक्तीः परिभाव्य च' इत्यस्य व्याख्यायामस्माभिः 'तेषां हरदत्तादीनामुक्तयः तदुक्तयः ताः तदुक्तीः, परिभाव्य-तिरस्कृत्येत्यर्थः' इत्यादि गुरुमुखात् श्रुतम्, प्रत्यक्षीकृतं च तत् 'सर्वादिगणस्थस्योभशब्दस्य पाठस्य प्रसङ्गे'। तथा हि काशिकाकारेण उक्तम्—'उभशब्दस्य सर्वनामत्वे प्रयोजनं 'सर्वनाम्नस्तृतीया च' इति[८]। उभशब्दस्य नित्यद्वि-वचनत्वात् सर्वनामसंज्ञायाश्च एकवचन-बहुवचनयोरेव प्रयोजनीयत्वात्, तस्य सर्वनामत्वस्यापरं प्रयोजनं किमपि नास्ति। न्यासकारेण पदमञ्जरीकारेणापि च उभशब्दस्य सर्वनामसंज्ञायाः प्रयोजनमिदमेव प्रत्यपादि। उक्तं हि ताभ्याम्—'नहि तस्मादकचि' कप्रत्यये वा विहिते रूपभेदो वा भवति'। अर्थादनयोर्मते कप्रत्ययेनापि 'उभकौ' इति सिद्ध्यति। परन्तु कौमुदीकारस्यात्र मतभेदः। तेनात्रोक्तम्—'उभशब्दो द्वित्वविशिष्टस्य वाचकः। अत एव नित्यं द्विवचनान्तः। तस्येह पाठस्तु 'उभकौ' इत्यकजर्थः। न च कप्रत्ययेनेष्टसिद्धिः, द्विवचनपरत्वाभावेन 'उभयतः', 'उभयत्र' इत्यादाविवायच्-प्रसङ्गात्। तदुक्तम् 'उभयोऽन्यत्र' इति।

अयमाशयः, 'अव्ययसर्वनाम्नामकच्प्राक्टेः' (२।३।७१) इति सूत्रेणाकच्प्रत्ययः टेः पूर्वं भवतीति 'उभकौ' इत्यस्य द्विवचनपरत्वं न विहन्यते। कप्रत्ययस्तु न तथा[९]।

यद्यपि कौमुदीकारेण 'उभय'-शब्दमधिकृत्य 'उभय-शब्दस्य द्विवचनं नास्तीति कैयटः, अस्तीति हरदत्तः' इति निर्देश कृतः, किन्तु न हरदत्तेन नापि न्यासकारेण 'उभय'-शब्दस्य विषये किमपि उक्तम्। सूत्राणामुदाहरणप्रयोगेऽपि काशिकातः कौमुद्यामनेकत्र पार्थक्यं दृश्यते। तथा हि—'इको यणचि' (६।१।७७) इत्यस्योदाहरणद्वयं दध्यत्र, मध्वत्र, इत्युपन्यस्तमस्ति। धर्मकीर्तेः *रूपावतारे*ऽपीदमेवोदाहरणम्। *प्रक्रियाकौमुद्यां* सुद्ध्युपास्यः, मध्वरिरित्युदाहरणद्वयम्।

कौमुदीकारेणात्र *प्रक्रियाकौमुदी* अनुसृता। *रूपावतारे* अजन्तपुंल्लिङ्गे आरम्भे वृक्षशब्दस्य रूपं प्रदर्शितम्। *प्रक्रियाकौमुद्यां कौमुद्यां*चात्र रामशब्दस्य प्रयोगः। अन्यत्रापि कौमुदीकारेण *प्रक्रियाकौमुद्या* एवोदाहरणानि गृहीतानि। प्रक्रियाकौमुदीकारो रामचन्द्राचार्यो वैष्णवमतानुयायी आसीत्। फलतस्तस्योदाहरणेषु वैष्णवमतस्य प्रभावो दृश्यते। कौमुदीकारोऽपि सम्भवतो वैष्णवमतमाश्रितः सन्नुदाहरणप्रयोगे प्रक्रियाकौमुदीकारमेव विशेषतोऽनुगच्छति। काशिका-कारेण 'उभयप्राप्तौ कर्मणि' (२।३।६६) इत्यत्र 'विचित्रा हि सूत्रस्य कृतिः पाणिनेः पाणिनिना वा' इत्युदाहृतम्। मुनित्रयं प्रति श्रद्धावतापि वैष्णवमतानुयायिना कौमुदीकारेण 'विचित्रा जगतः कृतिर्हरेर्हरिणा वा' इत्युदाहृतम्। *काशिका* 'अथ शब्दानुशासनम्' इत्यत आरभते। *कौमुदी* माहेश्वरसूत्रतः प्रारभते। काशिकाकारः 'अथ शब्दानु-शासनम्' प्रत्याहारसूत्रं चेत्युभयं पाणिनिकृतं मन्यते। परन्तु *अष्टाध्यायी* 'वृद्धिरादैच्' (१।१।१) इति सूत्रत आरभत इति सूत्रेऽस्मिन् 'माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते' इति *महाभाष्यो*क्त्या कैयटप्रभृतीनां ग्रन्थकाराणां मतम्। कौमुदीकारेण 'अथ शब्दानुशासनम्' इत्यस्य चर्चैव न कृता। तेन प्रत्याहार-सूत्राण्यप्यपाणिनीयानि स्वीकृतानि। तन्मते प्रत्याहारसूत्राणि माहेश्वरकृतानि। यथोक्तं तेन—'इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि'।

*कौमुदी* यद्यपि प्रक्रियाग्रन्थः, तथाप्यसौ *महाभाष्यस्य* भावनां सर्वात्मनाऽनुसरति। *महाभाष्य*भावनानुकूलत्वादेव *कौमुद्या* व्यापकः प्रचारो जातः, *महाभाष्य*मवगन्तुमस्या उपयोगः सर्वैरङ्गीकृतश्च। '*कौमुदी* यस्य कण्ठस्था वृथा *भाष्ये* परिश्रमः। *कौमुदी* यद्यकण्ठस्था वृथा *भाष्ये* परिश्रमः' इति विद्वत्समाजे प्रचलिता सूक्तिरपि अमुमेवाशयं पुष्णाति।

*कौमुद्या*मुत्तरकृदन्तसमाप्त्यनन्तरं स्वकीयग्रन्थस्य वैशिष्ट्यं स्पष्टीकुर्वता श्रीदीक्षितेन प्रोक्तम्—

**इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम्।**
**विस्तरस्तु यथाशास्त्रं दर्शितः** *शब्दकौस्तुभे*॥

एतेन सूच्यते यत् लौकिकशब्दानां सिद्धिरेव ग्रन्थकारस्य मुख्यमुद्देश्यमासीत्, अपि च *सिद्धान्तकौमुद्या* मूलरूपमुत्तरकृदन्तं यावदेव। स्वरवैदिकप्रक्रियायाः कल्पना तेन पश्चात् कृता, तस्याः सन्निवेशोऽपि तेन पश्चात् कृत इति सम्भाव्यते।

सिद्धान्तकौमुद्याः पूर्वं लिखितस्तस्य *शब्दकौस्तुभ*नामा ग्रन्थोऽपि तस्य *भाष्या*नुगामितां सूचयति। स्वयं तेन प्रोक्तम्—'फणिभाषितभाष्याब्धेः *शब्दकौस्तुभ* उद्धृतः इत्यादि।

दीक्षितेन *कौमुद्याः* स्वोपज्ञां *प्रौढमनोरमां* टीकां निर्माय तस्याः सम्पूर्णा प्रक्रिया भाष्यानुगामिनी कृता। परमतखण्डनरसिकेन तेन *प्रौढमनोरमायां काशिका-न्यास-पदमञ्जरी*-प्रभृतीनां मतान्यनेकत्र खण्डितानि। स्वस्याः खण्डनरसिकतायाः परिचयस्तेन स्वयमेव प्रदत्तोऽस्ति—'तस्मात् कैयटप्रभृत्यर्वाचीनपर्यन्तं सर्वेषां ग्रन्था इह शिथिला एवेति स्थितम्'[10]।

*प्रौढमनोरमाया* अपि खण्डन-मण्डन-प्रक्रिया चिरकालं यावत् प्रचलिता। अन्ते श्रीदीक्षितस्य पौत्रेण हरिदीक्षितेन *मनोरमायाः बृहच्छब्दरत्नम्, लघुशब्दरत्नमिति* टीकाद्वयं निर्माय *मनोरमायाः कौमुद्या*श्चाध्ययनमतीव मनोरमं व्यधायि। फलत इयमुक्तिरपि प्रचलिताऽभूत्—

**स*शब्दरत्ना* कृतदीर्घयत्ना यावन्न मामेति *मनोरमेयम्*।**
**तावत् समस्ताऽपि च *कौमुदीयं* नानन्दयत्येव मनो मदीयम्॥**

**निष्कर्षः**— पाणिनीयपरम्परायां लिखितानां व्याख्यानग्रन्थानां मध्ये *काशिका कौमुदी* चेति ग्रन्थद्वयं महनीयं विद्यते। तत्र पूर्वा वृत्तिग्रन्थः, अपरा च प्रक्रियाग्रन्थः। उभावेव ग्रन्थौ यथोत्तरं मुनीनां प्रामाण्यं मन्यमानौ महाभाष्यानुगामिनौ स्तः। *काशिकायां* यद् यत्र-तत्र *महाभाष्याद्* वैपरीत्यं दृश्यते, तत् तत्र प्राचीनवृत्तीनां प्रभावः *काशिकायाः* प्राचीनवृत्तिग्रन्थत्वात्। *कौमुद्याम*पि प्राचीनप्रक्रियाग्रन्थानां प्रभावः परिलक्ष्यते। *महाभाष्य*मपि प्राचीनवृत्तिग्रन्थानां मतानि नोपेक्षते।

यद्यपि *कौमुद्याः* समधिकलोकप्रियत्वात् *काशिकायाः* पठन-पाठनपद्धतिः परिलुप्ततामगात् तथापि पाणिनेः सूत्राणां गूढार्थानामवगतौ *काशिकायाः* महत्त्वमवधेयमेव। अन्यथा पाणिनिना यानि गूढार्थानि सूत्राणि निर्मितानि तेषामर्थावगतिः *काशिकां* विना दुष्करा स्यात्।

इत्थं *काशिका कौमुदी* चेति द्वावपि ग्रन्थौ पाणिनीयपरम्परायाः संरक्षकौ सम्बर्द्धकौ च। उभावेव हि शब्दसाधुत्वविषयाया व्याकरणस्मृतेरध्ययनाध्यापनयोर्विकासक्रमस्येतिहासं द्योतयतः।

## सन्दर्भ-संकेतः

१. पस्पशाह्निकम्, वा० १३
२. महाभाष्यम्, उभयप्राप्तौ कर्मणि ( २।३।६६ )
३. 'उदक् च विपाशः' ( ४।२।७४ ) सूत्रस्य वृत्तिः।
४. 'उभयप्राप्तौ कर्मणि' ( २।३।६६ ) सूत्रस्य वृत्तिः।
५. त्रीणिसूत्रसहस्राणि तथा नवशतानि च।
षण्णवतिञ्च सूत्राणां पाणिनिः कृतवान् स्वयम्॥
श्रीशचन्द्र चक्रवर्ती न्यासप्रस्तावना, पृ० ४
६. महाभाष्यम्, १।१।१
७. अस्मिन् सन्दर्भे 'आकडारादेका संज्ञा' ( १।४।१ ) इति सूत्रस्थं भाष्यम्, 'इग्यणः सम्प्रसारणम्' ( १।४।४५ ) इत्यत्र भर्तृहरिकृता महाभाष्यदीपिका, अत्रैव काशिका, 'तद्धरतिः' ( ५।१।५० ), तदस्य ब्रह्मचर्यम् ( ५।१।६४ ) इत्यत्रापि च काशिका द्रष्टव्या।
८. 'सर्वादीनि सर्वनामानि' ( १।१।२७ ) इति सूत्रस्य काशिकावृत्तिः।
९. काकचोर्वैशिष्ट्यं त्विदं न्यासकारोऽप्यवगच्छति। यथोक्तं तेन—'अकचस्तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात् 'जशःशी' ( ७।१।१७ ) भवति, के तु सति न स्यात्'। अव्ययसर्व० ( ५।१।७१ ) इति सूत्रस्य वृत्तिः। इदमेव वैशिष्ट्यमनुध्यायता कौमुदीकारेण कप्रत्यये कृते 'उभकौ' इत्यत्र रूपभेदो निर्दिष्टः।
१०. प्रौढमनोरमा, उत्तरभागः, पृ० ७४२

**[ इति ]**

# शब्दशास्त्रीय-धातु-मीमांसा

□ राम गुलाम मिश्रः

**इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते[1]॥**

अथ येन शब्दाह्वयेन ज्योतिषाऽऽसंसारं दीप्यते, तज्ज्योतिषोऽपि ज्योतिः धातुरेवेति सुविदितमेव तत्र भवतां समेषां प्रेक्षावताम्। 'सर्वे धातुजाः शब्दाः' इति प्रसिद्धिरपि नैव तिरोहितं तत्त्वविदाम्। वैयाकरणमूर्धन्यः श्रीमन्नागेशभट्टोऽपि धात्वर्थनिरूपण-प्रसङ्गे 'अथ सकलशब्दमूलभूतधात्वर्थो निरूप्यते'[2] इत्यभिधाय सकलशब्दानां धातुजत्वमेवाङ्गीचकार। तत्र भवान् निरुक्तकारो यास्कः शब्दनिर्वचनोपक्रमे 'सर्वाणि नामानि आख्यातजानि'[3] इति शाकटायनाचार्याभिमतं मतं सादरं जग्राह। महाभाष्यकारो भगवान् पतञ्जलिरपि 'उणादयो बहुलम्'[4] इति सूत्रे 'नाम च धातुजमाह निरुक्ते' इति वार्त्तिकमुपस्थापयन् तत्र भाष्ये 'नाम खल्वपि धातुजमेवाह नैरुक्ताः' इत्याह। अत्र एवकारेणापि सर्वेषां शब्दानां धातुजत्वं नितरां सिद्ध्यति। अत्रत्यकैयटव्याख्यानेन शाकटायनाचार्यप्रभृतयः शतशः आचार्य्या अमुमेव ( शब्दानां धातुजत्वम् ) पक्षमुररीकृत्य शास्त्राणि प्रोचुरिति।

तदयं सकलशब्दमूलभूतो धातुः शाकटायन-पाणिनिप्रभृत्याचार्यवर्य्यकल्पितोऽर्वाचीनः शब्दः उत वाऽस्मिन्नेवार्थ आरूढस्ततः पूर्वमपि व्यवहार्य्य आसीत्? अत्राथर्वणश्रुतिः प्रमाणम्—'को धातुः? किं प्रातिपदिकम्?…'[5] अनेन श्रुत्यभिधानेनैव प्राचीनार्वाचीनत्वजिज्ञासोपरता।

अथायं धातुशब्दो धारणार्थक 'धा' धातोः 'सि तनि गमि मसि सच्यवि धाञ् क्रुशिभ्यस्तुन्'[6] इत्यौणादिकेन सूत्रेण 'तुन्' ( तु ) प्रत्यये कृते सति सिद्ध्यति। तदाह निरुक्तकारोऽपि 'धातुः दधातेरिति'[7]। अस्य शब्दशास्त्रदृष्ट्या व्युत्पत्तिरेवम्—दधाति धारयति क्रियारूपमर्थं भ्वादिगणपाठमर्य्यादाञ्चेति धातुः। अथवा दधाति सर्वञ्च नाम धातुजमाह इति सिद्धान्तात् प्रतिपादनद्वारा प्रातिपदिकानि पुष्णाति इति धातुः।

यद्यप्येवं रीत्या धातुशब्दस्य निर्वचनं कर्त्तुं शक्यते तथापि शास्त्रविशेषेषु तत्तत्संकेतितेष्वर्थेषु संज्ञाकरणप्रवृत्तेः विशेषाग्रहत्वात् शब्दशास्त्रेऽपि 'स्वं रूपं शब्दस्याशब्दसंज्ञा'[8] इत्याचार्यपाणिनिनिर्देशाद् अयमपि धातुशब्दः शब्दशास्त्रीयवृद्धिगुणप्रभृतिपारिभाषिकसञ्ज्ञाकोटिमेवाटीकत इति। तदाह धातुसञ्ज्ञासूत्रमाचार्यपाणिनिः—'भूवादयो धातवः'[9]। एतत्सूत्रेण क्रियावाचिनां भ्वादीनां धातुसञ्ज्ञा भवतीति सारार्थः।

एतत् सूत्रमनुसन्धायैव आचार्या धातुलक्षणमेवं ब्रुवते—'क्रियावाचकत्वे सति भ्वादिगणपठितत्वे सति पाणिनीयसङ्केत सम्बन्धेन धातुपदवत्वमेव धातुत्वम्' इति।

महामहिमोपाध्यायपण्डितप्रवरपण्डित-श्रीकृष्णमाधव-झाशर्म-प्रणीतायां परमलघुमञ्जूषाया *स्तत्त्वप्रकाशिका*-ख्यटीकायां धात्वर्थप्रकरणस्थमूलपङ्क्तेः 'धात्वर्थः क्रिया' इत्यस्याः टिप्पण्यां धातुलक्षणमेवमस्ति—'व्यापारसन्तानः क्रिया, तद्वाचकत्वे सति गणपठितत्वम् धातुत्वम्' इति।[१०]

अष्टाध्याय्यास्तृतीयाध्याये भगवान् पाणिनिः धातुसञ्ज्ञाविधायकमेकमन्यदपि सूत्रं प्रोवाच—'सनाद्यन्ता धातवः' इति।[११] अनेन सूत्रेण सनादिप्रत्ययविशेषसद्भावात् तत्तत्प्रत्ययान्तानां कतिपयेषां कृत्रिमाणामपि धातुसञ्ज्ञा भवतीति।

इत्थं धातोर्द्वैविध्यम्:—(क) मूलधातुः (भ्वादिगणपठितः), (ख) प्रत्ययान्तः कृत्रिमो वा धातुः (भ्वादिगणापठितः सनादिप्रत्ययविशेषसद्भावभावितो धातुः)। आदिमस्य धातोः 'भूवादयो धातवः' इति सूत्रेण, अन्तिमस्य च धातोः 'सनाद्यन्ता धातवः' इति सूत्रेण धातुसञ्ज्ञा भवतीति।

आचार्यपाणिन्यभिमतं धातुलक्षणमाश्रित्य अन्येऽपि बहव आचार्याः प्रोक्तवन्तः; तेषु एतत् परम्परा-पोषकप्रधानाचार्यानुसंहितमततिः कालक्रमानुसारेण उपस्थाप्यते।

**(१) कात्यायनः**—आचार्यकात्यायनः शब्दशास्त्रस्य आचार्येषु मान्यपदवीं प्राप्नोतीति सुविदितमेव। विशेषतः शब्दशास्त्रीयसन्देहनिराकरणप्रसङ्गे 'यथोत्तरं मुनीनाम्प्रामाण्यम्' इति वैयाकरणोद्घोषेणापि, मुनिषु पाणिनि-कात्यायन-पतञ्जलीनामेव ग्रहणात् तेष्वेकतमस्य कात्यायनस्याचार्यस्य प्रमाणभूताचार्यत्वं नितरां स्थिरीभवति। एतन्मते 'अस्ति-भवति-विद्यतीनां धातुत्वम्' इति।[१२]

यद्यप्येतदाचार्यप्रणीतः कश्चन स्वतन्त्रो ग्रन्थोऽधुना नोपलभ्यते तथापि भगवान् पतञ्जलिः महाभाष्य-ग्रन्थेऽस्याचार्यवर्य्यस्य वार्तिकरूपाणि वचनानि सादरं सस्मार। तत्र महाभाष्ये 'भूवादयो धातवः' इति सूत्रस्य व्याख्यानक्रमे एतद् वार्तिकं स्मृतमस्ति।

**(२) पतञ्जलिः**—'भूवादयो धातवः'[१३] इति सूत्रस्थमहाभाष्ये भगवता पतञ्जलिना प्रथमं 'क्रियावचनो धातुः', तदनु 'भाववचनो धातुः' इति धातुलक्षणस्य पक्षद्वयमुत्थापितम्। तद् यथा—'क्रियावचनो धातुः, का पुनः क्रिया? ईहा। का पुनरीहा? चेष्टा। का पुनश्चेष्टा? व्यापारः···। कथं पुनर्ज्ञायते क्रियावचनाः पचादयः? यदेतेषां करोतिना सामानाधिकरण्यम्। किं करोति? पचति। किं करिष्यति? पक्ष्यति। किमकार्षीद्? अपाक्षीदिति।'

'कः पुनर्भावः? एतज्जिज्ञासायां भावशब्दस्य भाव-कर्त्तृ-कर्मसाधनास्त्रयः पक्षा उत्थापिताः सन्ति—

(क) भावसाधनपक्षः—'भवतेः स्वपदार्थो भवनं भावः'।

(ख) कर्त्तृसाधनपक्षः—'भवतीति वा भावः'।

(ग) कर्मसाधनपक्षः—'अथवा भाव्यते यः स भावः'।

एतावता महाभाष्यकारो भवनम्, भावकं, कालान्तरसाध्यम् एतत्-त्रितयमपि भावशब्दव्याप्यमिति प्रतिपादयति। एतत्त्रितयमपि क्रियाघटितत्वमेवेति भाष्याशयः।

वस्तुतो भावस्य सत्तायाः षट् प्रकारा भवन्ति। सत्तैव अनेकक्रियात्मिका साधनसम्बन्धाद् अवसीयमानसाध्यरूपा जन्मादिरूपतयाऽवभासते। तदेवोच्यते—'षड्भावविकाराः सन्तीति स्माह वार्ष्यायणिः—जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति'।[१४]

**( ३ ) भर्तृहरिः**—आचार्यभर्तृहरिमतानुसारेण भावक्रिययोरस्ति पार्थक्यम्। तद्यथा—

**कालानुपाति यद्रूपं तदस्तीति प्रतीयते।**
**परितस्तु परिच्छिन्नं भाव इत्येव कथ्यते॥**[१५]

अपि च— **भाव एव हि धात्वर्थ इत्यविच्छिन्न आगमः॥**[१६]

इतोऽग्रेऽपि— **जायमानान्न जन्मान्यद् विनाशेनाप्यपदार्थता।**
**अतो भावविकारेषु सत्तैका व्यवतिष्ठते॥**[१७]

**( ४ ) हेलाराजः**—*वाक्यपदीयस्य* ३.८.१२ कारिकाया व्याख्यानं कुर्वताऽनेनोक्तम्—'तदेवमाख्यातानियतकालास्तिक्रिया प्रतीयते। सैव च सत्ता नामपदात् सिद्धतया प्रतीयते भाव इति। अपूर्वापरो हि भावः, शब्दशक्त्यनुरोधात् तिङन्तेनासादितपूर्वापरोऽभिधीयते पचतीति। कृता तु सिद्धरूपः पाक इति।' एनयोः हरि-हेलाराजयोः मतेन धातुलक्षणमेवम्—'सत्त्ववचनो धातुः' इति।

**( ५ ) कैयटः**—भाववचनो धातुरिति भाष्यवार्तिकप्रदीपे कैयट आह—'वस्तुतो भावशब्दः क्रियामात्रवाची।··· तेन पचादीनामपि धातुसञ्ज्ञा सिद्ध्यति, अस्ति-भवति-विद्यतीनामपि भावरूपार्थाभिधायित्वात्'।[१८]

**( ६ ) नागेशभट्टः**—धात्वर्थप्रकरणेऽयमाह 'धात्वर्थः क्रिया'।[१९] महाभाष्योद्योते—'क्रियाशब्दः सपरिस्पन्दसाधनसाध्यार्थे रूढो, भावशब्दश्च सपरिस्पन्दापरिस्पन्दसाधनसाध्य इति॥'[२०]

वस्तुतो भावक्रियाशब्दयोरीषत् पार्थक्येऽपि भगवता पतञ्जलिना 'क्रियावचनो धातुः' अथ च 'भाववचनो धातुः' इति पक्षद्वयमुपस्थाप्य धातुलक्षणे सत्त्वस्यैव सत्ताऽङ्गीकृता। महाभाष्यतत्त्वावारपारीणो हरिः हेलाराजश्चापि 'सत्त्ववचनो धातुः' इति धातुलक्षणमभिधाय तदेव मतमङ्गीचकार। आचार्यकैयटः तन्निष्कर्षरूपेण 'भावशब्दः क्रियामात्रवाची' इति प्राहेति।

अथ पाणिनीयपरम्पराभिन्ना अपि कतिपये आचार्याः शब्दशास्त्राणि प्रोचुः। तेषां कतिपयानां धातुलक्षणसाधकं सूत्रमुपस्थाप्यते–( १ ) शाकटायनव्याकरणकृत्—'क्रियार्थो धातुः'[२१]; ( २ ) कातन्त्रव्याकरणकृत्—'क्रियाभावी धातुः'[२२]; ( ३ ) सिद्धहेमचन्द्रशब्दानुशासने—'क्रियार्थो धातुः'[२३]। अत्र स्वोपज्ञटीकायां—'कृतिः क्रिया, प्रवृत्तिः व्यापार इति यावत्। पूर्वापरीभूता साध्यमानरूपा, सा अर्थः अभिधेयं यस्य, स शब्दः धातुसंज्ञो भवति; एधते भवतीत्यादयः। आयादिप्रत्ययान्तानामपि क्रियार्थत्वाद् धातुत्वम्; गोपायते पापच्यते इत्यादयः।'

अग्रे चात्र अन्वय-व्यतिरेकाभ्यां धातोः क्रियार्थविगमो भवतीति प्राह। तथाहि तद्वचनम्—'अन्वय-व्यतिरेकाभ्याञ्च धातोः क्रियार्थविगमः। तथाहि पचतीत्यादौ धातुप्रत्ययसमुदाये संसृष्टिक्रियाकालकारकाद्यनेकार्थाभिधायिनि प्रयुज्यमाने धातोरेव क्रियार्थत्वमवगम्यते अन्वयव्यतिरेकाभ्याम्, नेतरेषाम्। पचतीति प्रयोगे द्वयं श्रूयते—पच् इति प्रकृतिः, अतिः इति च प्रत्ययः, अर्थोऽपि कश्चिद् गम्यते विक्लित्तिः, कर्त्तृत्वम्, एकत्वम्। पठतीति उक्ते कश्चित् शब्दो हीयते, कश्चिद् उपजायते, कश्चिद् अन्वयी। पच्शब्दो हीयते, पठ्शब्द उपजायते, अतिशब्दः अन्वयी। अर्थोऽपि कश्चिद् हीयते, कश्चिद् उपजायते, कश्चिद् अन्वयी। विक्लित्तिः हीयते, पठिः उपजायते, कर्त्तृत्वम् एकत्वम् अन्वयी।

तेन मन्यामहे, यः शब्दो हीयते तस्यासावर्थः योऽर्थो हीयते। यश्च शब्द उपजायते तस्यासावर्थः योऽर्थ उपजायते। यश्च शब्दः अन्वयी, तस्यासावर्थः योऽन्वयीति।'[२४]

### धातुविषये पाश्चात्त्यमतम्

सुप्रसिद्धः पाश्चात्त्यो विचारकः येस्पर्शनः धातुशब्दस्थाने 'घटना' शब्दम् ( Phinomenon words ) अङ्गीकरोति। पुनश्च घटनाशब्दस्य विभक्तिं त्रिषु वर्गेषु सम्पादयति— ( क ) क्रियावचनम् ( Action denoting ); ( ख ) प्रक्रम-वचनम् ( Process denoting ); ( ग ) स्थितिवचनं / सत्तावचनं वा ( Condition denoting )।

अत्र भारतीय विचारणातिरिक्तं न किञ्चिद् अन्यद् वैशिष्ट्यम्। केवलं भाववचनस्य स्थाने प्रक्रमवचनमिति सञ्ज्ञान्तरम् इति।

### अथ संक्षेपेण धात्वर्थविचारः

अथ धातुविचारप्रसङ्गे तदर्थविचारोऽपि नूनं प्रासङ्गिकः। अतस्तदर्थः संक्षेपतो विचार्य्यते—भाव एव हि धात्वर्थः इत्यस्माकं शब्दशास्त्रिणामस्त्युद्घोषः। एतद्भावाभिप्रायः फलव्यापारावधिकप्राय एव। अतो धातोः 'फलव्यापरौ' अर्थः फलति। तदाह *भूषणसारे*—'फलव्यापारयोर्धातुः'।[२५] अत्र भारतीयविचारकविचारसरणिमनुसृत्य पञ्च मतानि भवन्ति। तत्तन्मतानुसारेण एवम्—

१. प्राचीननैयायिकाः—'क्रियामात्रं ( केवलं व्यापारमात्रं ) धात्वर्थः। फलन्तु कर्मप्रत्ययेन द्योत्यते।'[२६]

२. नव्यनैयायिकाः—'फलव्यापारौ धात्वर्थः।'[२७]

३. मीमांसकाः—'फलं धात्वर्थः, व्यापारः प्रत्ययार्थः।'[२८]

४. प्राचीनवैयाकरणाः—'फलव्यापारयोः धातोः पृथक् शक्तिः।'[२९]

५. नवीनवैयाकरणाः—'फलावच्छिन्ने व्यापारे, व्यापारावच्छिन्ने च फले धातूनां शक्तिः। कर्त्तृकर्मार्थक-तत्तत्प्रत्ययसमभिहारश्च तत्तद्बोधे नियामकः।'[३०] इति शम्।[३१]

### सन्दर्भ-संकेतः

१. काव्यादर्शः, १.४
२. परमलघुमञ्जूषा।
३. निरुक्तम्, १.१२
४. महाभाष्यम्, ३.३.१
५. गोपथब्राह्मणम्, १.२.४
६. उणादिसूत्रम्, १.६.९
७. निरुक्तम्, १.६
८. पा० सूत्रम्, १.१.६८
९. पा० सूत्रम्, १.३.१
१०. प्रकाशनम्, हितचिन्तक प्रेस्, काशी, I सं, 1941 ई०।
११. पा० सूत्रम्, ३.१.३२
१२. भाष्यवार्तिकम्, ८१२
१३. पा० सूत्रम्, १.३.१
१४. महाभाष्यम्, १.३.१
१५. वाक्यपदीयम्, ३.८.१२
१६. वाक्यपदीयम्, ३.८.२५
१७. वाक्यपदीयम्, ३.८.२८
१८. महाभाष्यप्रदीपः ( भाष्यवार्तिक-सं० ८१७ )
१९. परमलघुमञ्जूषा।
२०. भाष्यवार्तिक-सं०, ८१७

२१. सूत्र सं०, १.१.२२
२२. सूत्र सं०, ३.१.९
२३. सूत्र सं०, ३.१
२४. तुलनीयम् महाभाष्यम् ( वार्तिक सं०, ८१५ )
२५. धात्वर्थप्रकरणम्, का. १
२६. न्यायकोशे उद्धृतम्, पृ० ३९१
२७. परमलघुमञ्जूषा, धात्वर्थ प्र०।
२८. कारकतत्त्वानुशीलने ( भाट्टचिन्तामणिवचनोद्धरणम् ), पृ० ४२
२९. परमलघुमञ्जूषा, धात्वर्थ प्र०।
३०. तत्रैव।
३१. विस्तरेण धात्वर्थविचारः भूषणमञ्जूषादिग्रन्थेषु अनुसन्धेयः।

[ इति ]

## परमलघुमञ्जूषाया व्याख्यासु तत्त्वप्रकाशिकाया वैशिष्ट्यम्

□ कृष्णानन्द झा

पाणिनीयं व्याकरणं यैरनेकैरनन्यसाधारणैर्गुणैः कमपि महिमानं बिभर्त्ति, तत्र व्यास-व्याडि-वररुचि-पतञ्जलि-भर्तृहरिप्रभृतिभिरुपस्थापितो व्याख्यातश्चार्थसिद्धान्तो विशिष्टं स्थानं भजते। शब्दार्थभेदेन पाणिनिव्याकरणे सिद्धान्तद्वयं प्रसिद्धं, तत्र कल्पितप्रकृतिप्रत्ययविभागमूलकशब्दसिद्धान्तापेक्षया शाब्दबोधोपयोगितया चार्थसिद्धान्तस्य मुख्यता-मङ्गीकुर्वन्ति शाब्दिकाः। तत्रापि धात्वर्थ-लकारार्थ-सुबर्थ-नामार्थ-निपातार्थ-समासशक्ति-शक्तिविचारादिभिर्योऽर्थः प्रकाश्यते, तदाधारो वृत्त्याश्रयः स्फोटो वाक्यस्फोटो वा सिद्धान्तानां निष्कृष्टं स्वरूपमिति शब्दतत्त्वविदो वदन्ति। यथोक्तं भट्टोजिदीक्षितेन—

'वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः' इति। व्याख्यातञ्चैतद् *भूषणे* कौण्डभट्टेन—

'सिद्धान्तनिष्कर्षमाह— वाक्यस्फोटइति। यद्यपि वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदवाक्यस्फोटौ, वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः सिद्धान्तसिद्धा इति वाक्यग्रहणमनर्थकं दुरर्थकञ्च, तथापि वाक्यस्फोटातिरिक्तानामन्येषामप्यवास्तवत्वबोधनाय तदुपादानम्। एतदेव ध्वनयन्नाह— अतिनिष्कर्ष इति। इति मतस्थितिर्वैयाकरणानां महाभाष्यकारादीनाम्'[1] इति।

सोऽयं स्फोटसिद्धान्तो बहुधा व्याख्यातो वैयाकरणशिरोमणिभिः। सकलशास्त्रस्वाध्यायपरिशीलनप्राप्तप्रौढ[2]-पाण्डित्येन भट्टश्रीनागेशेन तु पूर्ववर्त्तिनामाचार्याणामशेषेण सिद्धान्तान् सङ्गृह्य परिष्कृत्य च *वैयाकरणसिद्धान्तमञ्जूषा* नाम ग्रन्थरत्नं निरमायि। तदिदं ग्रन्थरत्नं नागेशेनैव सङ्क्षेपरुचीन् जिज्ञासूनभिलक्ष्य क्रमशो *वैयाकरणसिद्धान्तलघुमञ्जूषा-परमलघुमञ्जूषा*भिधानाभ्यां पुनर्द्विधा संस्कृतम्। अत्र त्रिधा विहितेषु संस्करणेषु उपक्रम एव स्फोटसिद्धान्तस्य प्राधान्यं प्रकाश्य तदङ्गतया प्रसङ्गादर्थसिद्धान्ता निरूपिता इति *वाक्यपदीयभूषणा*दिभ्योऽस्य प्रथमं वैशिष्ट्यम्। तृतीयं संस्करणं *परमलघुमञ्जूषा*भिधानं सङ्क्षेपेण सकलशाब्दिकार्थसिद्धान्तप्रकाशकं, परवर्त्तितया विप्रतिपन्नविद्वज्जनसिद्धान्तखण्डनपूर्वकं पाणिनीयसिद्धान्तमण्डनपरञ्चाध्ययनाध्यापनादिषु विशिष्टमादरं भजते।

तमिमं सातिशयप्रचारं ग्रन्थमालक्ष्य शाब्दिकप्रवरैरस्यानेका व्याख्या[३] व्यरचिषत। तासु शाब्दिकशिरोमणि-सर्वतन्त्रस्वतन्त्र-**झोपाख्यकृष्णमाधवशर्म्म**[४]निर्मिताया *'स्तत्त्वप्रकाशिका'*[५]ख्याया व्याख्यायाः किमप्यसाधारणं वैशिष्ट्यं सम्यक्परिशीलितैतत्तत्त्वविदुषां पुरः स्फुरतीति तद् युक्तिभिरुपस्थाप्यते।

यथार्थाभिधानेयं व्याख्या तत्त्वप्रकाशनेन बहुधा सङ्क्षेपरुचीन् मन्दमतीन् यथाह्लादयति, तथैव प्रौढानपि विशदविवेचनेषु साभिलाषानुल्लासयति। तदेतद् वैशिष्ट्यं पश्यता मया पञ्चधा तावदस्या वैशिष्ट्यमुदाहरणपुरस्सरमु-पन्यस्यन्ते—

१. **मूलग्रन्थाशयप्रकाशनपटुत्वम्**। एतद्धि 'तत्र वाक्यस्फोटो मुख्य'[५]' इति आमुखग्रन्थविवरणावसरे स्पष्टीभवति। तथा हि—'तत्रेति। स्फोटानां मध्य इत्यर्थः। मुख्य इति। मुखमिव प्रधानमिति भावः। वाक्यस्फोटस्य मुख्यत्वे हेतुमाह—लोकेऽर्थबोधकत्वात्तेनैवार्थसमाप्तेश्चेति। अयं भावः-परमवृद्धेन घटमानयेत्युक्ते घटानयने प्रवर्तते मध्यमवृद्ध इति तज्ज्ञानं विना प्रवृत्तेरन्यथानुपपत्त्या तत्समवेतबोधः कल्प्यते। बोधजनकत्वमुपस्थितत्वेन वाक्यस्यैव। तथा च सम्बन्धं विना कारणत्वमनुपपन्नमतिप्रसक्तञ्चेति पदपदार्थयोः सम्बन्धः कल्प्यते, स एव शक्तिरूपः। तथा च तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्ननिरूपितशक्तिज्ञानं कारणम्। लक्षणादेरप्रसिद्धशक्तिरूपत्वेना-त्रैवान्तर्भावः। अतो न पृथक् कार्यकारणभावः। वाक्यस्फोटभिन्नस्फोटानां गौणत्वमग्रिमकल्पितशब्देनावास्तविकञ्च। शास्त्रप्रक्रियामात्रोपयोगित्वमिति ज्ञेयम्। ननु तत्र वर्णेत्यादौ वाक्यस्फोटस्यैव प्रथमोपादानं युक्तं, लोके मुख्यस्य तथैव दर्शनादिति चेन्न, असत्ये वर्त्मनि स्थित्वा ततः सत्यं समादिशेत्, शाखारुन्धतीन्यायेन वा समाधेयत्वात्। किञ्च लोके उपकारकभृत्यस्येव वाक्यस्फोटोपकारकत्वेन वर्णस्य प्रथमोपादानमिति दिगि'त्यादि।

२. **मूलग्रन्थपरिष्कारपाण्डित्यम्**। एतच्च तत्र प्रतिवाक्यं सङ्केत[६] इत्यादिग्रन्थविवरणदर्शनेन स्फुटीभवति। तथा हि—'तत्र प्रतिवाक्यमिति। अयं भावः—व्यवहारादिना यत्किञ्चिद्वाक्ये शक्तिग्रहेऽपि वाक्यान्तरे शक्तिग्रहाद्यदर्शनात्तदसंभव इति वाक्ये पदं, पदे च प्रकृतिप्रत्ययौ कल्पयित्वा तत्र तत्र च तत्तदर्थनिरूपितशक्तिं गृहीत्वा सर्वत्र वाक्यार्थबोधः संभवति। ननु लोकेऽर्थबोधजनकत्वेन वाक्यस्फोटमुख्यत्वमवच्छेदकावच्छेदेन सामानाधिकरण्येन वा ? न द्वितीयः, वाक्यं मुख्यम-मुख्यञ्चेत्यापत्तेः। न प्रथमः, देशकालपुरुषभेदेन वाक्यभेदात् सर्वत्र शक्त्यग्रहे अगृहीतशक्तिकवाक्यस्य बोधाजनकत्वात्। न च तस्य कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तित्वविशिष्टान्यथासिद्धिशून्यत्वरूपफलोपधायकत्वाभावेऽपि अन्यथासिद्धिशून्यत्वविशिष्टकार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तितावच्छेदकत्वरूपस्वरूपयोग्यत्वानपायादिति वाच्यम्। वाक्यस्फोटस्य नित्यत्वे नास्वरूपयोग्यत्वात्। न चात्र किं मानम्। कारणनित्यत्वे कदाचित् फलोत्पत्तेरिति चेन्न। तद्वाक्योच्चारणकर्त्तुरीश्वरस्य व शाब्दबोधेन तस्यापि फलोपधायकत्वाक्षतेः। अन्यथा चक्रस्थदण्डादेरपि सर्वघटाजनक-त्वेनाफलोपधायकत्वापत्तेरित्यादि'।

३. **मूलग्रन्थघटकपदविशेषाणां प्रसङ्गवशान्नव्यन्यायपद्धत्याऽनुगमः**। अयन्तावत् संयोगादिभिर्नानार्थेषु शक्तिनियमनप्रसङ्गे[७] द्रष्टुं शक्यते। तथा हि—'सन्देहश्च एकस्मिन् धर्मिणि विरुद्धकोटिद्वयावगाहिज्ञानमित्यर्थः। अस्यानु-गमश्च। धर्मविशिष्टविशेष्यतानिरूपकज्ञानत्वं संशयत्वम्। वैशिष्ट्यञ्च स्वावच्छिन्नप्रकारतानिरूपितत्व—स्वासमानाधि-करणधर्मावच्छिन्नप्रकारतानिरूपितत्वाभ्याम्। न चैकत्र द्वयमिति रीत्या विरुद्धधर्मप्रकारकज्ञानेऽतिव्याप्तिः। न चैतादृशज्ञानासंभवः। आहार्यसंभवादिति वाच्यम्। आहार्यभेदस्य निवेशात्। अथवा धर्मविशिष्टविशेष्यताकज्ञानत्वं संशयत्वम्। वैशिष्ट्यञ्च स्वावच्छिन्नप्रकारतानिरूपितत्व—स्वविशिष्टधर्मावच्छिन्नप्रकारतानिरूपितत्वाभ्याम्। अत्र

वैशिष्ट्यञ्च स्वासामानाधिकरण्य—स्वावच्छिन्नप्रकारत्वावच्छिन्नप्रकारतावच्छेदकत्वाभ्याम्। संशयीयप्रकारत्वयोरेव परस्परावच्छेद्यावच्छेदकभावान्न पूर्वोक्तदोष इति'।

४. **मूलग्रन्थे आवश्यकपदार्थविवेचनेन न्यूनतापरिहारः**। एष हि 'सा च वृत्तिस्त्रिधा[८]' इत्यादिवाक्येन वृत्तिभेदकथनावसरे स्फुटं प्रतीयते। तथा हि—

'तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं कारणमित्यत्र वृत्तिः केत्यत आह-सा चेत्यादि। धाप्रत्ययार्थः प्रकारः। स च सामान्यभेदको विशेषः। वृत्तित्वं सामान्यम्। शक्तित्वादिर्विशेषस्तथा च विशेषत्रयवती वृत्तिरित्यर्थः। ननु वृत्तेः सामान्यलक्षणं विना विभागोऽयुक्तः, सामान्यज्ञानस्य विशेषजिज्ञासां प्रति कारणत्वादिति चेन्न। सामान्यलक्षणं विनैव विभागेन शक्तिलक्षणाव्यञ्जनान्यतमत्वं वृत्तित्वमिति ग्रन्थकृताभिप्रेतत्वात्। लक्षणत एव सामान्यज्ञानं नापेक्षन्ते विद्वांसः किन्तु येन केनापि रूपेण। तथोक्तिश्च ग्रन्थलाघवमूलिकेति दिगिति'।

५. **मूलग्रन्थकारस्य स्वोक्तिविरोधादिपरिहारः**। अयं हि 'निपातानामर्थवत्त्वमपि द्योत्यार्थमादायैव। शक्तिलक्षणाद्योतकतान्यतमसम्बन्धेन बोधकत्वस्यैवार्थवत्त्वात्[९]' इति मूलं व्याचक्षाणेन तत्त्वप्रकाशिकाकृता नागेशेन पूर्वं खण्डिताया लक्षणायाः पुनरुपादानस्य ब्राह्मणवसिष्ठन्यायेन समाधानं विदधता विशदीकृतः। तथा हि—

'ननु निपातानां द्योतकत्वे वृत्तिमत्त्वाभावादप्रातिपदिकत्वं, न चाप्रातिपदिकत्वे का क्षतिः, पदत्वानापत्तेरत आह—निपातानामिति। लक्षणयेति। ब्राह्मणवसिष्ठन्यायेन लक्षणोपादानम्। अन्यथा तस्याः शक्त्यनतिरेकेण पृथगुपादानस्य वैयर्थ्यापत्तेः। न चैवं व्यञ्जनोपादानमुचितम्। व्यञ्जकस्थले वाच्यार्थलक्ष्यार्थान्यतरयोर्भास्यत्वेन शक्तिलक्षणाभ्यां तत्तदर्थस्य बोधजनकत्वमादायैव स्वाद्युत्पत्तेः लाक्षणिकत्वे तु शक्त्या न निर्वाहः। मुख्यार्थबाधेन तदजनकत्वात्। न चास्य स्वरूपयोग्यत्वमक्षतम्। दत्तोत्तरत्वात्। निपातेऽव्याप्त्यापत्तेः। रामघटकरेफस्य वह्निनिरूपितशक्त्यार्थवत्त्वापत्तेश्च। न च गङ्गायां घोष इत्यत्र बोधाभावे कथं लक्षणा, शक्त्या पदार्थोपस्थित्यैवेष्टसिद्धेरिति दिक्। न च कृत्तद्धितेत्यत्र चकारेण निपातस्य प्रातिपदिकत्वसिद्धेऽत्र द्योतकत्वेति व्यर्थम्। तस्यानर्थकसंग्राहकत्वादि'त्यादि।

एवमन्यान्यपि वैशिष्ट्यानि व्याख्यायामस्यामनुसन्धातृभिर्द्रष्टुं शक्यन्ते। एतावता तत्त्वप्रकाशिकायास्तेषु तेषु स्थलेषु गभीराशयप्रकाशनपरत्वमभिलक्ष्य व्याख्याकृदनुजेन पण्डितेन **झोपाख्यचन्द्रमाधवशर्मणा** विवृत्याख्यया टिप्पण्या विभूषितेयं विदुषां मनोरञ्जनमादधातीत्यलं विज्ञेष्वधिकेन।

## सन्दर्भ-संकेतः

१. वैयाकरण भूषणसारः, स्फोटनिरूपणम्।
२. सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वरूपशब्दरत्नकृत्प्रोक्तप्रौढत्वं श्रीनागेशे सुतरामेव विराजमानमासीदिति स्वयमुक्तं तेन शेखरादौ—'पातञ्जले महाभाष्ये कृतभूरिपरिश्रम' इत्यादि।
३. तत्त्वप्रकाशिका—विवृति-ज्योत्स्ना-रत्नदीपिकार्थदीपिकावंशीप्रभृतयोऽनेका विवृतयो ग्रन्थस्यास्य विदिताः सन्ति।
४. व्याख्याकर्तृपरिचयादिरभिन्दनग्रन्थे बहुधा प्रकाशित एवेति विशेषेणात्र तदुपन्यासो न विधीयते।
५. परमलघुमञ्जूषा तत्त्वप्रकाशिका व्याख्या– पृ० ४-५
६. सैव पृ० ६-४
७. सैव पृ० ३२-३३
८. सैव पृ० १३-१४
९. सैव पृ० ११७-११८

[इति]

# पूर्वपूर्ववर्णसंस्कारसहितान्त्यवर्णविज्ञानस्य वाक्यार्थबोधकत्वविचारः

□ **कमलनयन शर्मा**

अनवयवमेव वाक्यं वाक्यार्थस्य वाचकमिति मतं केषाञ्चित्। तत्र वर्तते वैमत्यमस्माकम्। अतस्तन्मतं—

**पदावधारणोपायान् बहूनिच्छन्ति सूरयः।**
**क्रमन्यूनातिरिक्तत्वस्वरवाक्यस्मृतिश्रुतीः ॥**

हृत्यादिभिर्वार्त्तिकग्रन्थैर्निराकरोति। तत्र च पार्थसारथिः—क्रमान्यत्वे न्यूनत्वे वा विकलस्य वाचकत्वाभावादर्थाव-गतेरनुपपत्तिः परस्यापि सम्मतैवेत्यादि। ये वर्णाः यथा समुच्चारिता भवन्ति, ते तथैवावबोधका अपि। न तज्जन्यः कश्चिदतिरिक्तः पदार्थः वाचकः। तथा चोक्तं वार्त्तिककारेण—

**यावन्तो यादृशा ये च यदर्थप्रतिपादने।**
**वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥**

अर्थात् व्यवहारगम्यं हि वाचकत्वं नास्मदिन्छाधीनम्, अतो यथादर्शनं तदभ्युपगमान्न काचिदपि प्रसक्तिरिति। तादृशमेव सामर्थ्यमुपपादयितुमाह—

**तेषान्तु गुणभूतानामर्थप्रत्यायनं प्रति।**
**साहित्यमेककर्त्तादि क्रमश्चापि विवक्षितः॥ इति**

तथा चात्र न्यायरत्नाकरः—'गुणभूता ह्यर्थप्रत्यायने वर्णाः, तेनैषां साहित्यमेककर्त्तृत्वमादिशब्दोपात्तं चान्यूनाधिकत्वं क्रमविशेष इति सर्वं विशेषणं विवक्षितम्।' तथा चात्रैव बाह्यदर्शनमपि प्रमाणत्वेनोपस्थापयति—

**परेषामनुपाख्येयमभ्यासादेव जायते।**
**मणिरूपादिषु ज्ञानं तद्विदामानुमानिकम्॥ इति**

अनेन प्रकारेणानेकैः प्रमाणैरनेकाभिश्च युक्तिभिरनवयवमेव वाक्यं वाक्यार्थवाचकमिति पक्षं निराचकार। तदनन्तर-मेवोदेत्येका जिज्ञासा—मा भूदनवयववाक्यस्य वाक्यार्थवाचकता, तथापि पारमार्थिकपूर्वपूर्ववर्णपदपदार्थानुभवज-नितसंस्कारसहितान्त्यवर्णविज्ञानं कथन्न वाक्यार्थस्य वाचकमिति। अयन्तु पक्षः समीचीनः प्रतिभाति। तत्रोच्यते—नायमपि पक्षः समीचीनतामर्हति। तथाहि—

**नान्त्यवर्णश्रुतिः स्मृत्यानीता वाक्यार्थबोधिनी।**
**न स्मृतिस्तदपेक्षत्वाद् यौगपद्यं न चानयोरिति॥**

अयं भावः—तत्र यद्यन्त्यवर्णविज्ञानमात्रं वाक्यार्थबोधकं भवेत् तदान्येषां पूर्वोच्चारितानां वर्णानां वैयर्थ्यं स्यात्। तन्निवारणार्थञ्च स खल्वन्त्यो वर्णः पूर्वपूर्ववर्णपदपदार्थविज्ञानजनितसंस्कारसहितश्रवणेन्द्रियसमधिगतजन्मग्रहणस्मरणरूप-सदसद्वर्णनिर्भासप्रत्ययवर्त्ती पदवाक्यार्थधीहेतुरित्यवश्यं वक्तव्यम्। तथा चान्येषां वर्णानां न भवेद्वैयर्थ्यम्। अत्र च पूर्वेषां

वर्णानां स्मृत्यात्मकम्, अन्त्यस्य च वर्णस्यानुभवात्मकमिति सिद्धवद्विज्ञानमाश्रित्य जायते व्यवहार इति बोध्यम्। तदपि न क्षोदक्षम। तथाहि—स खल्वन्त्यो वर्णः चरमपदपदार्थस्मृतिविशिष्टो वाक्यार्थं बोधयति तद्रहितो वेति द्वेधा विकल्पः प्रसरति। तत्र नाद्यः पक्षः स्वार्थसाधनायालम्। तथाहि—स च चरमपदपदार्थसम्बन्धस्मृतिसहितो यदि वाक्यार्थस्य बोधकस्तर्हि तत्स्मृतिहेतुभूतोऽभावाख्यसंस्कारोद्बोधसमये स्वजन्यसंस्कारकारणकेन विनाशेन स्वीकृतश्रुतिरन्त्यो वर्णः। अतएवाश्रूयमाणः कथं वाक्यार्थं बोधयेदिति। अतो न पूर्वेषां वर्णानां श्रुतिमवलम्ब्यानुभवस्य साचिव्यं संघटते। तदभावाच्च कथं बोधकत्वमिति। तस्मान्न प्रथमः पक्षः ग्राह्य इति।

नापि द्वितीयः पक्षः। पूर्वपूर्ववर्णस्मृतिसाचिव्यरहितान्त्यवर्णस्य वाचकत्वे तदनुभववैयर्थ्यम्। अन्त्यस्य वर्णस्य वाचकत्वे सुसिद्धे व्यवहारोपपत्त्या नानुभवमावश्यकमिति।

अपि च गृहीतासङ्गतेरपि प्रथमश्राविणो 'भिन्धि प्रासेन भिदुर'मिति वाक्यात्तदर्थप्रत्ययप्रसङ्गात्। तस्मान्नायं पक्षो विद्वन्मनोरञ्जक इति। न चान्त्यवर्णबोधितसंस्कारा स्मृतिरनुभवेन सहैवोत्पाद्यतामिति वाच्यम्। ज्ञानानामयौगपद्यात्। न हि युगपदेवानेकानि ज्ञानानि समुत्पद्यन्ते। कारणस्य च प्रत्ययपर्यायेऽसामर्थ्यात्। अन्यथा प्रथमानुभवेन संस्कारोत्पादाद् द्वितीयादिज्ञानानां स्मृतित्वेन धारावाहिकप्रत्यक्षानुपपत्तेश्च। सहैव यावत्कर्त्तव्यं करोतीत्याकारकस्य सामर्थ्यस्याक्षेपायोगात्। न च तावन्तं कालं तिष्ठति प्रथमोत्पन्नधीजनितसंस्कारभेदो यतः पुनरपि चरमविषयविज्ञानं गमयेत्।

अयमभिप्रायः—यावति काले स्मृत्युत्पत्तिस्तदनन्तरक्षणे भूयश्चरमवर्णविषयं ग्रहणमुत्पादयितव्यम्। तावन्तं कालं प्रथमोत्पन्ना चरमपदविषया या श्रोत्रधीः, तस्याः विनष्टश्रोत्रसंस्कारो भेदोऽस्ति। यतः पुनरपि चरमपदविज्ञानं जनयेदतः स्मृत्यनुभवयोः साचिव्यासम्भवान्नायं पक्षः संख्यावतां संख्यामारोहति। तथा चाहुर्वार्त्तिककाराः—

**क्षणिकं साधनं चास्य बुद्धिरप्यनुवर्त्तते।**
**मेघान्धकारशर्वर्यां विद्युज्जनितदृष्टिवत्॥ इति**

वर्णाभिव्यञ्जकाः ध्वनयः श्रोत्रं प्राप्यैवान्यतः प्रयाताः। विद्युज्जनिता घटादिबुद्धिवन्न चिरकालमनुवर्त्तते। कुत इति चेत्, क्षणिकत्वादिति ब्रूमः। न चाननुभूयमानस्य सत्तामात्रेण बोधकत्वं स्वीकर्त्तव्यम्। तस्मान्न पारमार्थिकपूर्वपूर्ववर्णपदपदार्थानुभवजनितसंस्कारसहितान्त्यवर्णविज्ञानं वाक्यार्थस्य वाचकमिति मतमपि विचारचातुरीचर्चितचेतसां मनो मोदयति।

एवमेव प्रत्येकवर्णपदपदार्थानुभवभावितभावनानिचयजन्यलब्धजन्मस्मृतिदर्पणारूढा वर्णमालैव वाक्यार्थस्य वाचिकेति मतमपि न विदुषां चेतांसि चमत्करोति। अयमभिप्रायः—वाक्यार्थावधारणं हि वृद्धप्रयोगाधीनमिति सार्वजनीनम्। न हि पदमात्रं व्यवहाराङ्गं प्रयुञ्जते वृद्धाः, अपि तु वाक्यमेव व्यवहाराङ्गमिति। तस्य चानवयवस्य निषिद्धत्वात्प्रत्येकवर्णपदपदार्थानुभवभावितनियमजन्यलब्धजन्मस्मृतिदर्पणारूढा वर्णमालैव वाक्यार्थस्य वाचिकेति। सा च नैमित्तिकं वाक्यार्थबोधं जनयति। वाक्यघटकस्मर्यमाणसकलवर्णमालाया एवान्यथानुपपत्त्या वाक्यार्थबोधे हेतुत्वम्। पदज्ञानपदार्थोपस्थित्योस्तु तत्र सहकारितामात्रमिति। तदपि न समीचीनम्। यदि वर्णमालैव स्मृतिस्था वाक्यार्थबोधिका स्यात्तर्हि 'अर्भक! गामानय, अर्भक! गां बधान, शिशो! गामानय, शिशो! गां बधान, बाल! गामानय, बाल! गां बधान, डिम्भ! गामानय, डिम्भ! गां बधान' इत्यष्टानां वाक्यानामष्टौ शक्तयः कल्पनीयाः स्युः। पदवाचिनां मते तु सप्तेति लाघवम्। एवमेव तत्रैव शुक्लादिपदप्रक्षेपादिनानेकाः शक्तयः स्युरिति नायमपि पक्षः विदुषां बुद्धिपथमारोहति। तस्मान्नैते पक्षाः सुसमीचीना इति शम्। **[इति]**

# शब्दस्य द्रव्यत्व-विचारः

☐ गङ्गानाथ झा 'बुझनुकः'

'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवती'ति वचनं नोन्मत्तप्रलपितम्, प्रामाणिके पतञ्जलिभाष्ये मम्मटकृतकाव्यप्रकाशादौ तस्य दृश्यमानत्वात्। ननु नहि कस्यचिद्विपरीतलेखो युक्तिबलाद् वस्तुसिद्धौ बाधक इति निगदितवान् गदाधरभट्टाचार्यो व्युत्पत्तिवादस्य प्रथमाकारके स्तोकं पाक इति विचारे। तथा हि शब्दः कामं दोग्धीत्यत्र न प्रत्यक्षं प्रमाणं पश्यामि, नाप्यनुमानं तस्य प्रत्यक्षपूर्वकत्वात्, व्याप्तिज्ञानस्य च करणत्वात् व्याप्ति-निश्चयश्च व्यभिचारादर्शनाधीनः सहचारदर्शनाधीनश्च दृश्यते, 'अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टञ्चे'ति न्यायसूत्रमपि प्रमाणयति। न च यथा प्रामाणिकग्रन्थेषु मङ्गलदर्शनेन मङ्गलकर्त्तव्यताकश्रुतिः 'समाप्तिकामो मङ्गलमाचरेदिति स्वरूपा कल्प्यते तथा प्रामाणिके पातञ्जलभाष्ये काव्यप्रकाशे च तस्य दर्शनेन वेदमूलकत्वं तत्र कल्पनीय-मिति वाच्यम्। युक्तिं विना सर्वेषां सन्तोषाजनकत्वेन तस्य सर्वादरणीयत्वाभावादिति चेत्सत्यम्। अशिष्टाः पुनरुक्तादि-दोषैर्वेदानामप्रामाण्यमापाततः स्वीकुर्वन्ति न तु शिष्टाः। एते तन्मतमवहेलयन्ति च कथयन्ति च वेदाः प्रमाणम् ईश्वर-कर्तृकत्वात् किं वा तन्निश्वसितत्वात्। नित्यप्रमाश्रयत्वं चेश्वरत्वम्, प्रमात्वं च तद्वति तत्प्रकारकज्ञानत्वम्, तद्वन्निष्ठ-विशेष्यतानिरूपित-तन्निष्ठप्रकारताकज्ञानत्वमिति यावत्। किं वा स्वव्यधिकरणप्रकारावच्छिन्ना या या विशेष्यता तद-निरूपकत्वम्। स्वं विशेष्यता। तथा च स्वव्यधिकरणप्रकारनिष्ठप्रकारत्वानिरूपितस्वनिरूपकत्वं प्रमात्वं फलितम्। शिष्टैः शिष्टा अनुरोद्धव्या भवन्ति, न तु तद्भिन्नाः। शिष्टत्वं वेदप्रामाण्याभ्युपगन्तृत्वम्, फलसाधनतांशे भ्रमरहितत्वं वा।

तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं भ्रमत्वम्। किञ्च गद्यपद्यात्मकैः शब्दैः स्तुतिं कुर्वाणाः महान्तः कवयः ईश्वराद् देवेभ्यो वा राज्ञो वा धनादिकं लभन्ते। मयूरः शब्दात्मकसूर्यस्तुत्या आरोग्यं प्राप्सीत्। धावकश्च राज्ञः श्रीहर्षाद् धनं प्राप्सीत्। सुस्वरयुक्तया शब्दात्मकगीत्या अधुनापि गायकाः धनं प्राप्नुवन्ति। तथा च कथं शब्दाः कामं न दुहन्तीति स्वीकरोमि।

अस्तु शब्दः काम-दोग्धा, स च शब्दः गुणो वा द्रव्यं वेति सन्देहवतां शब्दविषयकं सम्यग्ज्ञानं न भवितुमर्हति। तथा च विप्रतिपत्तिः, गुणत्वं शब्दत्व-समानाधिकरणाभावप्रतियोगि न वा, गुणत्वं शब्दवृत्ति न वेति। प्रथमविप्रतिपत्तौ निषेधकोटिर्नैयायिकानाम्, विधिकोटिर्जैनानाम्। द्वितीयविप्रतिपत्तौ विधिकोटिर्नैयायिकानाम्, निषेधकोटिश्च जैनानाम्।

तत्र जैनमतावलम्बिनः—न च शब्दो गुणः प्रतिषिध्यमानद्रव्यकर्मत्वे सति सत्ता सम्बन्धित्वात्, रूपवदित्यनुमानेन तस्य गुणत्वं सिध्यतीति वाच्यम्। सत्तायाः तत्सम्बन्धसमवायस्य चाभावेन विशेष्यासिद्धेः। तथात्र विशेषसिद्धो हेतुः कथं शब्दे गुणत्वं साधयिष्यति। तस्य स्वयमसिद्धः कथं परान् साधयतीति न्यायावसरग्रस्तत्वात्। किं च शब्दस्य द्रव्यत्वेन विशेषणसिद्धेश्च। तथा हि यद्धि क्रियावत् तद् द्रव्यं यथा शरादिः। तस्य निष्क्रियत्वे अप्राप्यकारित्वापत्तिः। तच्च

नेष्टं तस्याग्रहणापत्तेः। न च श्रोत्रस्य सम्बन्धकल्पने नोक्तदोषः। आकाशरूपश्रोत्रस्य निष्क्रियत्वेन तत्र गमनासम्भवात्। श्रोत्रं शब्ददेशं गच्छतीति प्रतीत्यभावात्। न च शब्दः श्रोत्रं गच्छतीति वाच्यम्। तथा सति शब्दस्य क्रियाश्रयत्वेन शरादेरिव द्रव्यत्वापत्तेः। तच्च ममेष्टम्। न च वीचीतरङ्गन्यायेन श्रोत्रदेशसमुत्पन्नं शब्दं श्रोत्रं गृह्णातीति वाच्यम्। तथा सति तुल्ययुक्त्या शरस्यापि तथात्वापत्तेः। न चेष्टापत्तिः, अनुभवविरोधात्। न च शरादौ सोऽयं शर इति प्रत्यभिज्ञया तस्यैकत्वमिति वाच्यम्। तथा सति देवदत्तोच्चरितं शब्दं शृणोमीति प्रत्यभिज्ञया शब्दस्यापि तथात्वापत्त्या त्वदीयवीचीतरङ्गन्यायेन श्रोत्रदेशोत्पन्नशब्दस्य विलयापत्तेः। भवत्सिद्धान्तभङ्गापत्तेश्च। किंचाल्पः शब्दः, महान् शब्द इति प्रत्यक्षत्वेन अल्पत्वमहत्त्वाश्रयत्वेन तस्य द्रव्यत्वं सिद्ध्यति। गुणाश्रयत्वं द्रव्यत्वं भवानपि स्वीकरोति। अल्पत्वं महत्त्वं च गुणः। किञ्च पांश्वादय इव वायुनाभिहन्यमानतया संयोगाश्रयत्वात्। शब्दो द्रव्यम् संयोगो गुणस्तदाश्रयतया शब्दो द्रव्यम्। द्रव्ययोरेव संयोगो भवति। वायुना शब्दस्य संयोगोऽभिघातगम्यः। शब्दे अभिघातोऽपि देवदत्तं प्रत्यागच्छतः शब्दस्य प्रतिकूलेन वायुना प्रतिवर्तनात्सिद्धः। शब्दस्य प्रतिवर्तनमपि अन्यदिगवस्थितेन श्रवणात् सिद्धम्। किञ्च एकः शब्दः, द्वौ शब्दौ, इत्यादि प्रतीत्यापि शब्दस्य द्रव्यत्वम्। एकत्वादि-व्यवहारश्च द्रव्यदृष्टः, एको घटो, द्वौ घटौ इति। एकत्वादिकञ्च गुणः, गुणाश्रयो द्रव्यम्। न च शब्दः क्षणिकः अस्मदादिप्रत्यक्षत्वे सति विभुद्रव्यविशेषगुणत्वात् ज्ञानादिवत्। विशेषगुणाश्च *बुद्ध्यादिषट्कं स्पर्शान्ताः, स्नेहः सांसिद्धिको द्रवः। अदृष्टभावना शब्दा अमी वैशेषिका गुणाः।* बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः, रूपरसगन्धस्पर्शाः, स्नेहः सांसिद्धिको द्रवः धर्माधर्मौ, भावनाशब्दाः अमी सर्वे विशेषगुणा बोध्या इति वाच्यम्। प्रत्यभिज्ञायाः प्रत्यक्षबाधितत्वात्। यदि शब्दः क्षणिकः स्यात्, तदा सोऽयं गकार इति नोपपद्येत, शब्दस्य प्रत्यक्षत्वं च सकलजनसंवेद्यम्। प्रत्यभिज्ञा च प्रत्यक्षेण बाधिता। धमदिर्विभुद्रव्यविशेषगुणत्वेऽपि अक्षणिकत्वेन व्यभिचारश्च। नहि व्यभिचारी हेतुः साध्यं साधयितुं क्षमः। तत्र व्याप्त्यभावेन व्याप्तिज्ञानरूपकारणाभावोऽस्ति। नहि कारणं विना कार्यमुत्पद्यते। अन्यथा कार्यस्याकस्मिकत्वापत्तेः। व्यभिचारश्च साध्याभाववद् वृत्तित्वम्, साध्यतावच्छेदकं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकम्। न च व्यभिचारज्ञाने साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानं, साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिस्तज्ज्ञानं च बाधते। अस्मदादिप्रत्यक्षत्वस्य विपक्षेण ( अक्षणिकेन ) अविरोधात्। विपक्षविरुद्धं हि विशेषणं विपक्षात् हेतुं निवर्तयति, यथा अहेतुकत्वं नित्याद् विपक्षात् कादाचित्कत्वं निवर्तयति। न चास्मदादिप्रत्यक्षत्वम् अक्षणिकत्वविरुद्धम् अक्षणिकेष्वपि सामान्यादिषु भावात्। ततो यथाऽस्मदादिप्रत्यक्षेऽपि केचित्क्षणिकाः प्रदीपादयः, अन्येऽक्षणिकाः सामान्यादयः तथाऽस्मदादिप्रत्यक्षा अपि विभुद्रव्यविशेषगुणाः केचित्क्षणिकाः ज्ञानादयः, अपरे चाक्षणिकाः धर्माधर्मादयः क्षणिका भविष्यन्तीति सन्दिग्धः विपक्षव्यावृत्तिकत्वादनैकान्तिकस्तव हेतुः। क्षणिकत्वञ्चात्र तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपं बोध्यम्। योग्यविभुविशेषगुणानां स्वोत्तरगुणनाश्यत्वनियमः। सत्तासम्बन्धित्वमपि यदि स्वरूपसत्तासम्बन्धित्वरूपं तदा सामान्यादिभिर्व्यभिचारः, तस्य गुणत्वाभावात्। यदि तद्भिन्नसत्तासम्बन्धित्वरूपमुच्यते, तदा तादृशसत्ताया अभावेन शब्दस्यापि तत्सम्बन्धत्वासिद्धिः। तस्माच्छब्दस्य न गुणत्वं, किन्तु द्रव्यत्वमेव स्थिरतां प्राप्नोतीति॥ **[ इति ]**

# शब्दशास्त्रीयसंहिताविमर्शः

□ परमानन्द झा

**नत्वा शैलसुतेशानौ सन्निकर्षं परं श्रितौ।**
**करुणावरुणागारान् गुरून् कल्पतरूंस्तथा॥**
**भाष्यवृत्त्यादिकान् ग्रन्थान् कौमुद्यादींश्च यत्नतः।**
**सम्यगालोच्य विदधे विमर्शमधिसंहितम्॥**

### १. प्रस्थानभेदेन संहिताया वैविध्यं, तत्र विवेचनीयायास्तस्याः शाब्दिकी व्युत्पत्तिश्च

संस्कृतवाङ्मये शास्त्रभेदेन तेषु तेषु नैकेष्वर्थेषु संहिताशब्दः प्रयुक्तो दृश्यते। मन्त्रब्राह्मणभेदेन द्वेधा विभक्तस्य[1] वेदस्य मन्त्रभागः संहितेत्युच्यते[2]। यथा शुक्लयजुर्वेदसंहिता, कृष्णयजुर्वेदसंहितेत्यादि। एवं तत्तद्वेदमन्त्राणामर्थानुसन्धानपुरस्सरम् ऋषिभी रचिता धर्माधर्मव्यवस्थापिका मन्वादिस्मृतयोऽपि धर्मसंहितापदव्यवहार्या[3] दृश्यन्ते। स्कन्धेषु त्रिषु विभक्तस्य ज्यौतिषशास्त्रस्य जगच्छुभाशुभवृष्टि-भूकम्पाद्यद्भुतविषयविमर्शपरस्तृतीयः स्कन्धः संहितानाम्ना[4] प्रथते। यथा भृगुसंहिता, बृहत्संहितेत्यादि। पुराणेषु कतिपयेषु अध्यायवत् कतीनाञ्चित् संहितानां दर्शनं भवति[5]। यथा सूतसंहितेत्यादि। इत्थं यद्यपि प्रस्थानभेदान्नानार्थेषु शक्तिमावहति संहिताशब्दः, परं नैतेष्वन्यतमो मद्गवेषणाविषयः, किन्तु शब्दशास्त्रे समुपयुज्यमानः पूर्वोक्तिभ्यो विलक्षण एव।

शाब्दिकरीत्या समुपसर्गाद् दधाते[6] र्भावार्थकि क्ते[7], दधातेर्हि[8] टापि[9] च संहिताशब्दो व्युत्पाद्यते। सन्धानं सन्धिर्वा[10] संहितेति च फलति। ननु **'नपुंसके भावे क्त'** इति नपुंसकत्वनियमनात् कथमत्र स्त्रीत्वमिति चेत्, अत एव निर्देशात् तन्नियमस्य शैथिल्याभ्युपगमात्, **लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति**[11] भाष्यवचनाद्वा। यद्वा, सम्यग्घितौ मिलितौ निमित्तकार्यिणौ यस्यां सा सञ्ज्ञा संहितेति बहुव्रीहिसमासाभ्युपगमाददोषः। अथवा, 'क्तिच् क्तौ च सञ्ज्ञायाम्' [12] इति बाहुलकाद् आशिषोऽभावे क्तप्रत्यये व्युत्पत्तिः सुलभा। केचित्तु[13] इयमपि सञ्ज्ञा व्याकरणस्य निष्ठादिसञ्ज्ञावद् रूढिरेवेति व्युत्पत्तिविवाद एवात्र व्यर्थ इत्याहुः। स्तन्नोचितम्, विरामोऽवसानम् इति सूत्रंव्याचक्षाणेन स्वयं महाभाष्यकृतैव संहितासञ्ज्ञाया लोकप्रसिद्धयोगार्थमाश्रित्य[14] प्रत्याख्यानात्, महासञ्ज्ञाकरणाच्च। एवञ्च पूर्वोक्तो यौगिकार्थ एव न्याय्यः।

### २. लोकप्रसिद्धाया अपेक्षया शास्त्रीयायाः संहिताया वैलक्षण्यं, निष्कृष्टं तल्लक्षणञ्च

लोके 'अयं संहितामधीते न पदानि, पदान्यधीते न संहिताम्' इत्यादि वाक्यव्यवहारो दृश्यते। तत्र संहिता नाम वेदवाक्यानां पदप्रविभागराहित्येनाखण्डतया समुच्चारणम्। तदनुसारं पदस्य पदान्तरेण आनन्तर्यम् अतिशयितः सन्निकर्षः संहिताया व्यवहारलभ्योऽर्थः फलति। परम् एतादृशसंहितायाः शब्दशास्त्रे आश्रयणे सति 'सुध्युपास्य' इत्यादौ वर्णनैरन्तर्यस्थले संहिताकार्यं दुर्घटमेव स्यात्। अतो भगवान् पाणिनिरेतच्छास्त्रोपयोगि-व्यवहारविलक्षण-संहितामुज्जि-

घाटयिषुः सूत्रमिदमारभते—**परः सन्निकर्षः संहितेति**[१५]। अत्र परशब्दो न दिक्कालविशेषरूपः, सन्निकर्षे विशेष्ये तदर्थायोगात्। नाप्यन्यार्थपरः, यत्किञ्चित्पदार्थापेक्षया सर्वेषामप्यन्यत्वेन क्वापि व्यभिचारविरहात् तदभावे च "सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवदि"ति न्यायेन परपदोपादानस्यैव वैयर्थ्यापत्तेः। एवञ्चातिशयविशिष्ट एवेह परपदार्थः। सन्निकर्षश्च न संश्लेषरूपः स्वीक्रियते, यतः संश्लेषो नाम सम्बन्धः, स च संयोगरूपो वा स्यात् समवायरूपो वा ? तत्र नाद्यः, संयोगस्य द्रव्यमात्रधर्मत्वेन शब्दे गुणे तदयोगात्। शाब्दिकमते तस्य द्रव्यरूपत्वपक्षेऽपि[१६], अप्राप्तयोः प्राप्तावेव संयोगस्य सत्त्वेन शब्दे तदसम्भवात्। नाप्यन्त्यः, शब्दस्याकाशसमवायित्वेन[१७]वर्णे वर्णस्य तदसम्भवात्। किञ्च संयोगसमवाययोः सन्निकर्षत्वे तत्र 'पर' इति विशेषणं नोपपद्यते, तयोस्सर्वदा सर्वत्र चैकरूपत्वात्[१८]। एवञ्च प्रत्यासत्तिः सामीप्यम् अत्र सन्निकर्षपदार्थः स्वीक्रियते। तच्च शब्दशास्त्रप्रस्तावात् प्रत्यासत्त्या वर्णानामेव। इत्थम् अतिशयितं वर्णानां सामीप्यं संहितेति फलति।

तत्रातिशय्यं नाम नान्तरीयकार्धमात्राकालाधिककालाव्यवधानम्। अयं भावः—वर्णाः उच्चरितप्रध्वंसिन इति वर्णद्वयस्य कस्यचिद् यौगपद्येनोच्चारणमसम्भवि[१९]। एवञ्च कस्यचिद् वर्णस्य समुच्चारणाय प्रारब्धताल्वादिव्यापारोपरतौ द्वितीयवर्णनिष्पादकव्यापारारम्भे मध्ये काचिदवश्यं कालकला स्फुरति। सा च स्वाभाविकी कलाऽर्धमात्राकालिकी। तादृशार्धमात्रापि किंस्वरूपेति जिज्ञासायामुक्तम्—

**कालेन यावता पाणिः पर्येति जानुमण्डले।**
**सा मात्रा कविभिः प्रोक्ता × × × ×॥**[२०] **इति**

अथवा, अक्षिपक्ष्मणोऽधःपतने यावान् कालः सा मात्रेत्युच्यते। यद्वा, अङ्गुष्ठतर्जन्योर्मध्ये काचन नाडी स्फुरति, तस्या एकस्फुरणे यावान् कालविलम्बः सा मात्रेति[२१] व्यवह्रियते। एतावत्कालव्यवधानम् अवर्जनीयत्वादकामेनापि सोढव्यमेवेति नैतद् आतिशय्यव्याघातकं भवति। इत्थं 'सुध्युपास्य' इत्यादौ इकारानन्तरं स्वाभाविकतया नैरन्तर्येणोकारोच्चारणे संहिताकार्यं सिद्ध्यति। परम्, एतावत्कालादर्धक्षणाधिक्येऽपि तत् परत्वं व्याहन्यत एव। अत एव 'अग्निचिद् अत्रे'-त्यादावर्धमात्रिकव्यञ्जनव्यवायेऽपि तत्सम्भावनापि प्रत्युक्ता।

ननु— **अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने स्मृता।**
**शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता॥**[२२]

इति नियमानुसारं प्रोक्तार्धकालिकव्यवधानस्य द्रुतायामेव सम्भवादितरयोः संहिताकार्याणि न स्युरिति चेदुच्यते। सर्वासु वृत्तिसु मध्यवर्त्ती कालः समान एव, वृत्तयो हि वर्णज्ञानकालभेदिकाः[२३]। यद्वा, यस्यां वृत्तौ यावान् कालव्यवाय आवश्यकस्ततोऽधिकतया कालव्यवायराहित्येन वर्णानामुच्चारणं संहितेति नोक्तदोषावकाशः। तथा चोक्तं भगवता भाष्यकारेणापि—**अथवा ह्रादाविरामः संहितेति तल्लक्षणं करिष्यते**[२४] इत्यादि। ह्रादाः वर्णाभिव्यक्तिहेतवो नादाः।

ननु सातिशयं सन्निकृष्टयोर्वर्णयोः संहितोक्ता, तत्रोत्पत्तिपक्षेऽभिव्यक्तिपक्षे वा वर्णानां सन्निकर्ष एवासिद्धः, तेषाम् उच्चरितप्रध्वंसित्वादिति[२५]चेत्, सत्यम्। इह बुद्धिकृतपौर्वापर्यमाश्रीयत इति न दोषः। तथा च भाष्यकारः प्राह—

**बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्त्ता धीरस्तत्त्वन्नीतिः।**
**शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात् पौर्वापर्यम्॥**[२६] इति

**३. त्रयः संहिताधिकाराः।**

संहितास्वरूपं समालोचितम्, सम्प्रति तत्प्रदेशान् गत्वा लक्ष्यानुसन्धानमावश्यकम्। अष्टाध्याय्यां प्रामुख्येन त्रयः संहिताधिकारा उपलभ्यन्ते, क्रमशस्ते विचारणीयाः—

( क ) **'संहितायाम्'**[२७]—अयमधिकारः षष्ठाध्यायप्रथमपादे, ७२ तमात् **छे चे**तिसूत्रात् १५८ तमम् **अनुदात्तं** पदमेकवर्जम् इति सूत्रं यावदुपसर्पन् षडशीतिप्रदेशान् व्याप्नोति। सन्धयोऽत्र प्रामुख्येन विवेचिताः। सन्धिषु पदान्तस्थले उक्तातिशयितसन्निकर्षविरहे सांहितिक-यणादि-व्यावृत्तिरस्य फलम्। यथा 'दध्यानय-दधि आनये'ति।

( ख ) **'संहितायाम्'**[२८]—उक्ताकृतिर्द्वितीयोऽयमधिकारः षष्ठाध्यायतृतीयपादे ११५ तमात् **'कर्णे लक्षणस्या-विष्टाष्टे'**त्यादिसूत्रादारभ्य १३५ तमं **'द्व्यचोऽतस्तिङः'** इति सूत्रं यावत् प्रवर्त्तते। अत्र दीर्घत्वसम्पादकान्येव सर्वाण्यपि शास्त्राणि प्रायेण विचारितानि। अवग्रहस्थलेऽत्र दीर्घत्वरूपसांहितिककार्यविरहः फलम्[२८क]। यथा—'द्विगुणाकर्णः—द्विगुणकर्णः' इति। वस्तुतस्तु अस्याधिकारस्यैकमेव फलं 'द्व्यचोऽतस्तिङ' इति। तत्र हि 'विभा हि त्वा गोपतिं शूरगानाम्' इत्यादौः संहितापाठे दीर्घत्वं, पद्पाठे च नेति व्यावृत्तिः सिद्ध्यति। ततोऽन्येषान्तु उत्तरपदाधिकारादेव[२९]सिद्धिरिति न तत्र तदावश्यकत्वम्।

( ग ) **'तयोर्य्वावचि संहितायाम्'**—अत्र 'संहितायाम्' इत्ययमेवांशोऽधिक्रियते। इदञ्च अष्टमाध्यायद्वितीय-पादस्यान्तिमं सूत्रम् उपरितनं कृत्स्नं पादद्वयमभिव्याप्नोति। अत्र षष्ठाध्यायतोऽवशिष्टाः सन्धयो विवेचिताः। अत्रापि पदान्तस्थले संहिताया अविषयतायां तत्प्रयुक्तकार्यव्यावृत्तिः फलम्। यथा—'पुना रम्यः-पुनः रम्य' इति।

अस्मिन्नधिकारे एका समस्या समापतति। संहितया व्याप्यमानेऽस्मिन् पादद्वये, **वाऽवसाने**[३०] इत्यादीनां केषाञ्चि-दवसाननिमित्तककार्याणां सन्निवेशो दृश्यते। तत्र **वाऽवसाने** इत्येतस्य विषये उभे अपि सञ्ज्ञे प्राप्नुतः। न च, संहिता पूर्वस्य परेण सन्निकर्षे सति स्यत्, अत्र चावसानविषये परस्य दुर्लभत्वम् इति कथं तत्प्राप्तिः, अत एव निर्देशात् क्वचित् परवर्णस्य पूर्वेण सन्निकर्षे सत्यपि तत्स्वीकारात्[३१]। एवञ्च प्राप्तयोरुभयोर्मध्ये, 'दध्यत्र' इत्यादाववसानाविषये सम्प्राप्ता-वकाशायाः संहिताया निरवकाशयाऽवसानसञ्ज्ञया 'रामात्' इत्यादौ बाधः प्राप्नोति[३२]। यद्यपि वर्णसन्निधौ संहितासञ्ज्ञा, वर्णासन्निधौ चावसानसञ्ज्ञेति विषयभेदादुभयोर्बाध्यबाधकता नोचिता प्रतिभाति, तथापि 'सत्यपि सम्भवे बाधनं भवति' इति भाष्यवचनमनुसृत्य तत्सम्भवः। न च 'अ' शब्दस्य[३३]सम्बुद्धौ **अणोऽप्रगृ.**[३४] इत्यनेनानुनासिकावसरे तत्र वर्णद्वयाभावेन संहिताया अविषयतायाम् अवसानसञ्ज्ञायाश्चारितार्थ्येन निरवकाशत्वाभावात् कथमपवादत्वशङ्केति वाच्यम्, एवं तर्हि परत्वादेव बाधो वाच्यः। एवञ्च बाधे सति संहिताधिकारस्यावसानस्थलेऽसङ्गतिरेवेति चेत्, श्रूयताम्—संहिता-धिकारेऽवसानकार्यदर्शनेन आकडारीयं शास्त्रं शब्दशास्त्रीयसंज्ञामात्रविषयकं कल्प्यते। संहितावसानयोश्च लोकेऽपि विदितत्वेन शास्त्रीयत्वमात्रविरहान्नानयोर्बाध्यबाधकताप्रसङ्गः[३५]। न चैतावत्क्लिष्टकल्पनापेक्षयावसानकार्येषु संहितायां असम्बन्ध एवास्तु, 'तोर्लि'[३६]इत्यादावग्रिमसूत्रेषु च मण्डूकप्लुत्यैव कार्यनिर्वाहादिति वाच्यम्। **विसर्जनीयस्य सः** इति सूत्रे भाष्ये उपपत्तिसम्भवे मण्डूकप्लुत्याश्रणस्यायुक्तत्वध्वननात्[३७]। एवञ्च अवसानप्रदेशेषु उभयोरपि संहितावसानयोः समावेशो निर्बाधः[३८]।

**४. संहिताया नित्यानित्यत्वम्।**

त्रयः संहिताधिकाराः समीक्षिताः। सम्प्रति संहितेयं क्व नियतविषया, क्व च शक्यकामचारेति विचारणीयम्। व्यवहारे संहिताया नित्यानित्यत्वव्यवस्थापनपरं भगवतो भर्तृहरेः [३९]पद्यमिदं भृशं प्रसिद्ध्यति—

**संहितैकपदे नित्या नित्या धातूपसर्गयोः।**
**नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते॥** इति

( क ) संहितैकपदे नित्या—संहितेयम् एकस्मिन् पदे नित्या नियतविषया तिष्ठति। यथा—'रामौ, हरये, मत्याम्' इत्यादौ। इह कारिकायाम् 'एकपदे' इत्येव सिद्धे समासे तल्लाभाय 'नित्या समासे' इत्यनेन पुनर्घोषणं गोबलीवर्दन्यायेनेति[४०] केचित्। वस्तुतस्तु एकपदशब्देनात्र एकमखण्डं पदं विवक्षितमस्ति। अखण्डत्वञ्च पदत्वाभाववदुत्तरखण्डकत्वम्। एतादृशैकपदत्वस्यासाधारणं फलं 'राजीयति' इत्यादिप्रयोगसिद्धिः। अन्यथा हि **न क्ये**[४१] इति सूत्रनियमाद् 'राजन्' इत्यस्य पदत्वेऽपि, 'राजीयती'ति समुदायस्य तत्त्वाभावेन ऐकपद्यासम्भवात् शपा सह क्यचः सांहितिकपररूपं न सिद्ध्येत्। किञ्चैतत्स्वीकारे सामासिकस्थले 'राजपुरुष' इत्यादौ उत्तरखण्डस्यान्तर्वर्त्तिविभक्तिमाश्रित्य सुबन्तत्वेऽपि[४२] पदत्वाभाववत्त्वविरहात् पुनरुक्तिप्रसङ्गोऽपि निरस्तः[४३]।

( ख ) नित्या धातूपसर्गयोः—एवं धातूपसर्गमध्ये नित्यमेव संहिता भवति। यथा—अन्वगच्छत्, प्रतीक्षते, प्रणमति' इत्यादौ। ननु 'अन्वगच्छत्', 'प्रतीक्षते' इत्यादौ समाससत्वेन 'नित्या समासे' इत्यग्रिमांशेनैव सिद्धे किमिति पृथक्तया पुनरुपादीयत इति चेन्न, असमासपक्षे तस्यावश्यकत्वात्। अत एव **शेषे कखादावषान्त उपदेशे**[४४] इत्यादिणत्वप्रभृतिविकल्पशास्त्राणि सङ्गच्छन्ते। अन्यथा उक्तरीत्यैव विकल्पे सिद्धे तेषामारम्भोऽसङ्गत एव स्यात्।

( ग ) नित्या समासे—समस्तपदेष्वपि संहिताकार्याणि नियतमेव भवन्ति। यथा—'सुध्युपास्यः, वनौका' इत्यादौ। अद्यतनास्तु विभागरेखां ( – ) दत्वा सामासिकपदेष्वपि संहिताकार्याणामैच्छिकतां प्रतिपादयन्तः समुपलभ्यन्ते। यथा 'अल्प-आहाराय', 'गमन-उद्योगम्' इत्यादि। अत्र रेखेयं 'समासे नियतैव संहिते'ति प्रतिपादयन्ती बोधसौकर्य्याय प्रयुज्यत इति तेषामाशयः।

एषु त्रिषु एकपदादिषु वस्तुतो विरामस्यावसर एव न सम्भवति। यथा 'कृष्ण' इत्येतच्छब्दस्थाने न केनापि 'कृष्ण' इति व्यस्तमिष्यते वक्तुम्[४५]। लोकैर्हि पदानि अर्थावबोधाय प्रयुज्यन्ते, तथा समुच्चार्यमाणे तु सुतरां तल्लक्ष्यं प्रतिरुध्यत इति न तेषां तत्र प्रवृत्तिः। अत एव प्राचीनाचार्यैः संहिताभावे शब्दानामसाधुत्वं, शाब्दबोधराहित्यं च स्वीकृतम्[४६]।

( घ ) वाक्ये तु सा विवक्षामपेक्षते—वाक्ये पदसमूहरूपे व्यवहारे तु सांहितिकानि कार्याणि नैकपदादिवन्नियतविषयाणि, किन्तु लोकानां विवक्षाधीनानि भवन्तीति तत्र तेषां कामचारः। यथा रामः गच्छति–रामो गच्छति, दधि आनय-दध्यानये'त्यादि। ननु 'सुप्तिङन्तचयो वाक्यमि'ति[४७]लोके प्रसिद्धसामान्यवाक्यत्वस्वीकारे 'दध्यानये' त्यादावुपपत्तावपि 'गवित्ययमाहे'त्यादिसिद्धिर्न स्यात्, तत्र 'गो' इत्यादीनामनुकरणत्वेन पदत्वाभावादिति[४८]चेत्, सत्यम्, अत्र वाक्यपदेन एकपद-धातूपसर्ग-समासभिन्नस्य शिष्टोच्चरितशब्दसमुदायस्याङ्गीकरणाद्दोषविरहात्[४९]। अत एव च 'अइउण्' इत्यादिप्रत्याहारस्थले नागेशोक्तः[५०] संहिताकार्याविवक्षानिबन्धनः सन्ध्यभावः सङ्गच्छते।

किञ्च एतादृशमपि वाक्यं छन्दोविषयभिन्नमेवानियतसंहितं स्वीकार्यम्। न हि श्लोके क्वचन संहिताकार्याण्यनियतानि[५१]। यत्र तु क्वचित्—**निरस्तपादपे देशे एरण्डोऽपि द्रुमायते'**[५२] इत्यादौ न दृश्यते संहिताकार्यं, तत्र त्रिकालवज्रलेपायमानं कवेरसामर्थ्यविजृम्भितमेव। अत एव काव्यमध्ये आवश्यकसंहिताकार्याभावे 'विसन्धि'र्नाम दोष आलङ्कारिकैरस्ति परिगणितः[५३]।

वस्तुतस्तु श्लोकभिन्नेऽपि वाक्ये सर्वत्र न भवति संहिताकार्यं विकल्पेन, किन्तु यत्र प्रयोक्तृभिरर्थबोधकैलक्ष्ये वाक्यव्यवहारे सांहितिककार्ये क्रियमाणे क्लिष्टता, अस्पष्टता ( वर्णव्यक्तिपरिच्छेदाभावः ) वाऽनुभूयते तत्रैव, यत्र तु तत्कार्ये अक्रियमाणे एव बोधः प्रतिरुध्यते, न तत्र सत्यपि स्वरक्लेशे तदुपेक्ष्यते। यथा—'यद्यपि' 'तथापि' इत्यादीनां व्यावहारिकाणां शब्दानां स्थाने न कदाचित् केनचिद् 'यदि अपि' 'तथा अपि' इति संहितामुपेक्ष्य व्यवह्रियते। स्वयमाचार्यः पाणिनिरपि, **'उपदेशेऽजनुनासिक इत्**[५४], **झलां जशोऽन्ते**[५५], **अल्पाच्तरम्**'[५६] इत्यादौ सत्यपि कुत्वादिसम्भवे अर्थबोध-सन्देहमनुभूय संहिताकार्यमकुर्वाणस्तत्त्वमिदं समर्थयन्नुपलभ्यते।

मन्ये, तदेत्सर्वं सुविचार्यैव भगवता भर्तृहरिणा 'विवक्षामपेक्षते' इति सारगर्भितं पदमुदीरितम्। अर्थात् वाक्ये क्व संहिता नियतविषया क्व नेति व्यवस्थापनाय सर्वथा लोक एव प्रमाणमिति।

किञ्च वाक्यस्यान्ते सर्वदा विराम आवश्यकः, तथा च संहिताऽभावात् तस्य अग्रिमेण वाक्येन सह सन्धिरसाधुः। अतो'गौरीतिर्गत्युमापतिर्न गच्छति' इत्यत्र यज् असाधुरिति सम्पादकः।

## ५. संहिताधिकारसञ्ज्ञयोरनौचित्यम्।

संहिताया नित्यत्वानित्यत्वे समालोचिते। अथान्ते संहिताबोधाय भूयो भूयो विहितस्तदधिकारः तत्सञ्ज्ञा च कियदुचितौ इति विचारः प्राप्तावसरः। संहितावसानसञ्ज्ञासूत्रे व्याख्याय तदुपसंहारमाचरता महाभाष्यकृता 'लोक-प्रसिद्धिमाश्रित्य सञ्ज्ञाद्वयमपि प्रत्याख्यातम्। तथा च तेनोक्तम्—**संहितावसानयोर्लोकविदितत्वात् सिद्धमि**त्यादिना। तत्रायमाशयः लोके 'शन्नो देवीयं संहितयाधीष्वे'ति गुरुणादिष्टः शिष्यः मन्त्रान् परमसन्निकर्षेण समुच्चारयन् दृश्यते। न चासौ परः सन्निकर्षः संहिता भवतीति सूत्रं जानानो भवति। एवञ्च शब्दशास्त्रीयानुनासिकादिसञ्ज्ञान्तरवदियमपि संहितासञ्ज्ञा लोकविदितेवैति नैतदर्थं सूत्रारम्भ उचित इति। न च पदस्य पदान्तरेण यदानन्तर्यं तत्रैव संहिता लोके प्रसिद्धेति 'मत्याम्' इत्यादिवर्णनैरन्तर्ये कथं सूत्रारम्भमन्तरा संहितालाभ इति वाच्यम्, वर्णनैरन्तर्येऽपि लोकप्रसिद्धि-स्वीकाराददोषात्।

किञ्चैतत्सञ्ज्ञावत् त्रयः अधिकारा अपि व्यर्था एवेतिकृत्वा तेऽपि महाभाष्यकृता प्रत्याख्याताः। तथा च **संहितायाम्**[५७] इति सूत्रे तेनोक्तम्—अयं योगः शक्योऽवक्तुम्। कथम्? अधिकरणं नाम त्रिविधं—व्यापकम्, औपश्लेषिकं, वैषयिकञ्चेति। शब्दस्य च शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हत्यन्यदत उपश्लेषात्। इको यणचि, अचि उपश्लिष्टस्येति तत्रान्तरेण संहिताग्रहणं संहितायामेव भविष्यतीति।

इदमत्राकूतम्—संहिता नाम कार्यिनिमित्तयोर्वर्णयोरतिशयितं सान्निध्यमित्युक्तम्। तच्च सान्निध्यं संहिता-धिकारीयेषु सप्तम्यन्तपदघटितेषु सर्वेष्वपि शास्त्रेषु सप्तम्यन्तपदैरन्यथैव लब्धम्। तथाहि–सप्तम्या आधारोऽर्थः, स च त्रिविधः—औपश्लेषिक वैषयिकाभिव्यापकभेदात्। तत्र उप = समीपे श्लेषः = सम्बन्धः तत्कृतः औपश्लेषिकः सामीपिक इत्यर्थः। एवञ्च **इको यणची**[५८]त्यादेरच्समीपवर्त्तिन इको यणिति फलति। सामीप्यञ्च कालतो वर्णतश्च[५९]। एवम् असंहितास्थले एतादृशसामीप्यविरहादेव यणभावसिद्धेः तदर्थः संहिताधिकारो व्यर्थ एवेति।[६०]

## सन्दर्भ-संकेतः

१. तथा च सायणः—'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति

२. तथोक्तम् ऋक्प्रातिशाख्ये—'पदप्रकृतिः संहिता' (२।१।१)

३. यथाऽमरेणाप्युक्तम्—'स्मृतिस्तु धर्मसंहिता' इति, अ.को. १।६।६

४. उक्तञ्च नारदसंहितायाम्—

सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम् ।
वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम्॥ इति

५. यथा स्कन्दपुराणे—

स्कान्दमद्याभिवक्ष्यामि पुराणं श्रुतिसम्मितम्।
षड्विधं संहिताभेदैः पञ्चाशत्खण्डमण्डितम्॥

स्क.पु., सूतसंहिता, माहा.ख., अ. १ इत्यादि

६. 'डुधाञ् धारणपोषणयोः', पा.धा. पाठः, ३।१०९२

७. 'नपुंसके भावे क्तः', पा.सू., ३।३।११४

८. 'दधातेर्हिः', पा.सू., ७।४।४२

९. 'अजाद्यतष्टाप्', पा.सू., ४।१।४

१०. अग्रे वक्ष्यमाणस्य संहिताधिकारत्रयस्य मध्यगामिनः सर्वेऽपि विधयः सन्धिशब्देनोच्यन्ते।

११. महाभाष्यम्।

१२. पा.सू., ३।३।१७४

१३. इदञ्च मतं हल्सन्धौ 'संहितायाम्' इति सूत्रव्याख्यायां कौमुद्या लक्ष्मी-टीकायां प्रस्तुतमस्ति।

१४. तथा च महाभाष्यकृतोक्तम्–'संहितावसानयोर्लोकविदितत्वात्', 'विरामोऽवसानम्' १।४।११० इति सूत्रे भाष्ये।

१५. पा.सू. १।४।१०९

१६. तथा च शाब्दिकसिद्धान्तः–'नित्यो विभुः द्रव्यरूपः शब्दः'।

१७. तथा चोक्तं महाभाष्यकारेण–'श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्द' इति। म.भा., प्रत्याहाराह्निके 'अइउण्'-सूत्रे।

१८. एवञ्च संयोगसमवाययोः प्रकर्षापकर्षावसंभविनौ इति भावः।

१९. तथा च 'परः सन्निकर्षः संहिते'ति सूत्रे भाष्यकृतोक्तम्—'उच्चरितप्रध्वंसिनः खल्वपि वर्णाः। उच्चरितः प्रध्वस्तः। अथापरः प्रयुज्यते न वर्णो वर्णस्य सहायः इति।

२०. शब्दस्तोममहानिधिः।

२१. सिद्धहेमवृत्तिः।

२२. प.ल.मञ्जूषा, स्फोट–निरूपणम्।

२३. तथा चोक्तं महाभाष्यकृता तपरसूत्रे भाष्ये—'सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते' इति।

२४. 'परः सन्निकर्षः संहिते'ति सूत्रभाष्य इत्यर्थः।

२५. तथा च भाष्यकृता संहितासंज्ञासूत्रे भाष्ये प्रोक्तम्—'एकैकवर्त्तिनी वाङ्। न द्वौ युगपदुच्चारयति। गौरिति गकारे यावद् वाङ् वर्त्तते, नौकारे, न विसर्जनीये। यावद् औकारे, न गकारे, न विसर्जनीये। यावद् विसर्जनीये, न गकारे, नौकारे। उच्चारितप्रध्वंसित्वादिति।'

२६. संहितासंज्ञासूत्रभाष्ये तत्रैव

२७. पा.सू. ६।१।७१

२८. पा.सू.–६।३।११५

२८. (क) इदञ्च 'संहितायाम्' ६।३।११५ इतिसूत्रस्थतत्त्वबोधिनीकारानुसारेण। वस्तुतो मतमिदं नैवोचितमिति 'तस्मिन्नि'' इति सूत्रस्य शेखरे स्पष्टम्। अत एवाग्रेऽधिकारवैयर्थ्यमुक्तम्।

२९. 'अलुगुत्तरे'' ६।३।१ इति सूत्रादिति भावः।

३०. पा.सू., ८।४।५६

३१. अयं भावः—यद्यपि सन्निकर्षः सर्वत्र पूर्वस्य परेणैव भवति, परमेवं सति अवसानविषये परत्वाभावेन तत्रैतत्प्रवृत्त्यभावेऽधिकारसङ्गतिरेव स्यात्, अतः क्वचित् परस्य पूर्वेणापि स स्वीक्रियत इत्यदोषः।

३२. येन नाप्राप्तिन्यायेनेत्यर्थः।

३३. वासुदेववाचकस्येत्यर्थः।

३४. पा.सू., ८।४।५७

३५. किञ्च पूर्वोक्तः 'सत्यपि सम्भवे बाधनं भवती'ति न्यायोऽपि असंज्ञाविषय एवेति न भाष्यविरोधलेशोऽपि।

३६. पा.सू. ८।४।६०

३७. तत्र हि अनवकाशत्वाद् बाधपक्षे, पूर्वपरसन्निकर्ष एव संहितेति पक्षे च 'अणोऽप्रगृ°' इत्यत्रोभयानुवृत्तौ दोषो दर्शितः। यदि तत्रानधिकारः स्यात्तेनैव तत्र दोषाभावाच्छङ्कैवासंगता स्यादिति भावः।

३८. वस्तुतस्तु अनयोरुक्तरीत्या विषयभेदाद् बाध्यबाधकतैव नेति कलहो निरर्थकः।

३९. इदञ्च 'शेषे कखा.' ८।४।१८ इति सूत्रे एतत्पद्यव्याख्यापरबालमनोरमा-टीकानुसारेणोक्तम्। यद्यपि वाक्यपदीये सम्प्रति नोपलभ्यते पद्यमिदं, तथापि साकल्येन प्रकीर्णकाण्डस्यानुपलम्भात्तत्र क्वचित् स्यादेवेत्यनुमीयते।

४०. इदञ्च मतं पूर्वोक्तस्थल एव तत्त्वबोधिन्यां स्थितम्।

४१. पा.सू. १।४।१५

४२. एवञ्चात्र 'सुप्तिङन्तचयो वाक्यमि'ति वाक्यस्वरूपं नाश्रीयत इति भावः।

४३. अयमाशयः—'एकपदे' इत्यस्य एकम् अखण्डं पदं यस्मिन् इति व्युत्पत्त्या राजीयतीत्यादौ मुख्यमखण्डपदम्, 'हरय' इत्यादौ च व्यपदेशिवद्भावेनेति। सामासिकपदे एकाधिकपदसत्त्वेन एकपदत्वस्यासत्त्वेन न तत्रास्य व्याप्तिः। सर्वमिदं व्याख्यानं स्पष्टार्थं ग्रन्थप्रपञ्चार्थं ग्रन्थलापनार्थञ्च, पदरूपेण अखण्ड-सखण्डयोर्द्वयोरेव ग्रहणे लाघवाद् बाधकाभावाच्चेति।

४४. पा.सू. ८।४।१८

४५. ननु लोके सगद्गदवाक् अशिक्षितो वा एकपदादिस्थलेऽपि उच्चारणसमये विरमन् दृश्यत इति चेन्न, तेषां विरामस्य रोगकृतत्वादज्ञानकृतत्वाद्वा आपत्त्यभावात्। अत एवासौ जनः पौनःपुन्येन साधूच्चारयितुं यतमानो दृश्यते।

४६. इदञ्च मतं संहितासञ्ज्ञासूत्रव्याख्यावसरे शेखरे स्थितम्।

४७. अमरकोषः, १।६।२

४८. अत्राभेदस्थलेऽर्थवत्त्वविरहेण प्रातिपदिकत्वाभावात् तन्निबन्धनं पदत्वमपि नेति भावः।

४९. इदञ्च मतं शेखरस्य व्याख्याकर्त्तुः श्रीधरस्येति बोद्धव्यम्।

५०. शेखरे इत्यर्थः।

५१. द्वितीयतृतीयपादयोर्मध्ये तु नैव भवति।

५२. हितोपदेशस्य मित्रलाभे ७० तमं पद्यमिदम्।

५३. तथा च मम्मटः—'प्रतिकूलवर्णमुपहतप्लुतविसर्गं विसन्धि इतवृत्तम्' इत्यादि, काव्यप्रकाशः, स.उ. ५३.।

५४. पा.सू., १।३।२

५५. तदेव, ८।२।३९

५६. तदेव, २।२।३४

५७. पा.सू. ६।१।७२

५८. पा.सू. ६।१।७७

५९. कालकृतं व्यवधानं संहिताधिकारेण, वर्णकृतं च 'निर्दिष्टे' (१।१।६६) इति सूत्रघटकनिर्ग्रहणेन वार्यते। एवञ्चोभयमपि न विधेयमिति भाष्याशयः।

६०. दृष्टार्थरहित इत्यर्थः। अदृष्टार्थदृष्ट्या तु सर्वेषामेव प्रत्याख्यातानां शास्त्राणामानर्थक्यं नास्त्येव। तथा च भाष्योक्तिः—'सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यादि'ति। **[इति]**

# व्याकरणशास्त्रे न्यायशास्त्रप्रभावः

□ के. वी. सोमयाजुलुः

व्याकरणन्यायशास्त्रयोः पदप्रमाणशास्त्रनाम्ना व्यवहारो विद्वज्जगति दरीदृश्यते। तत्र बहोः कालादारभ्य व्याकरणन्यायशास्त्रयोः परस्परं प्रगाढस्सम्बन्धो वरीवर्ति। वैयाकरणा नैयायिकाश्च स्वस्वयुक्तिभिर्मतान्तरखण्डनद्वारा स्वस्वसिद्धान्तप्रतिपादनपूर्वकं स्वस्वशास्त्रसम्प्रदायान् मर्यादाश्च संरक्षितुं प्रयतन्ते। 'परमतमप्रतिषिद्धमनुमतं भवती'ति न्यायेन स्वस्वसिद्धान्तप्रतिष्ठापने सत्यवसरे मतान्तरनिराकरणमपि शास्त्रज्ञैः क्रियते।

अत्रेदं बोध्यम्—व्याकरणशास्त्रे *महाभाष्यं* समुद्रायमाणोऽतीव मूर्धन्यतमो ग्रन्थः। भगवान् पतञ्जलिरत्र ग्रन्थे शब्दतत्त्वेन साकमतीन्द्रियतत्त्वानि बहूनि प्रादर्शयत्, परन्तु शुष्कतार्किकास्तान्यज्ञात्वा स्वीयन्यायवासनया व्याकरणशास्त्रं पाणिनीयं बहुधा आचिक्षिपुः। यथा—'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इति पाणिनिस्सूत्रमसृजत्। किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्नतु द्रव्यप्रकर्षे इति तदर्थः। तत्सूत्रस्य 'उच्चैस्तमाँस्तरुः' इत्युदाहरणं, 'उच्चैस्तमस्तरुः' इति प्रत्युदाहरणमिति वक्तव्यम्। अत्र सूत्रे द्रव्यपदश्रवणेन झटिति कणादपरिभाषितं द्रव्यमेव बुद्ध्यारूढं भवति। तच्च गुणाश्रयत्वं द्रव्यत्वम्। तादृशद्रव्यलक्षणस्वीकारे 'उच्चैस्तमाँस्तरुः' इत्यत्रोन्नतस्य भूप्रदेशस्य, तादृशवृक्षस्य चोभयोरपि पार्थिवत्वेन कणादपरिभाषया द्रव्यत्वादुभयत्रापि द्रव्यप्रकर्षस्य सत्त्वेन तयोरुभयोरपि प्रत्युदाहरणत्वमेव स्यात्।

एवं 'तस्य भावस्त्वतलौ' ५-४-११९ इति सूत्रार्थविचारावसरे क्रियानाश्रयत्वं गुणत्वमिति गुणलक्षणस्वीकारे घटस्य भावो घटत्वमित्यत्र 'यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ' इति वार्तिकेन त्वतलौ न प्राप्नुतः। घटत्वस्य गुणत्वाभावादित्येवं रीत्या नैयायिकाः व्याकरणशास्त्रसिद्धान्तान् खण्डयामासुः। तदानीन्तनवैयाकरणास्तेषां नैयायिकानामाक्षेपखण्डने असमर्था आसन्। प्रत्युतास्मच्छास्त्रमनन्वितार्थबोधकमनुपयुक्तकरञ्चेति बुद्धिरासीच्छाब्दिकानाम्। तदा पाणिनीयं नष्टप्रायमासीत्। उक्तञ्च वाक्यपदीये—

**यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः।**
**काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः॥**

न्यायशास्त्रज्ञानरहिताः केवलवैयाकरणा न्यायशास्त्रानध्ययनकारणेन नैयायिकैः पराभूताः।

एवं स्थिते चन्द्राचार्यवसुरातौ न्यायप्रस्थानमार्गान्, स्वीयव्याकरणदर्शनञ्च सम्यगधीत्य दर्शनान्तरीयपदार्थानां, व्याकरणशास्त्रीयपदार्थानाञ्च साधर्म्यवैधर्म्ये सम्यज्ज्ञात्वा यत्र न्यायादिदर्शनान्तरीयसिद्धान्तो व्याकरणस्य प्रतिकूलस्तत्र मतान्तरं परित्यज्य व्याकरणशास्त्रीयप्रक्रियानिर्वहणमात्रोपयोगिपदार्थजातं प्रदर्श्य पाणिनिविरचितं व्याकरणशास्त्रं निर्दुष्टमिति सिद्धान्तं तौ प्रथमं सम्यज्ज्ञात्वा नैयायिकैः कृतानामाक्षेपाणां दृढतमागमसम्मतोत्तराणि प्रदर्श्य महाभाष्यार्थं प्रियशिष्याय भर्तृहरये उपादिशताम्। उक्तञ्च वाक्यपदीये—

**न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वश्च दर्शनम्।**
**प्रणीतो गुरुणाऽस्माकमयमागमसंग्रहः** ।। इति।

तदा भर्तृहरिस्तान् सिद्धान्तान् सङ्कलय्य यत्र न्यायपदार्थस्वीकारे पाणिनिसूत्राणामर्थो न घटते तत्र तद्व्यतिरेकेण महाभाष्याद्याकरग्रन्थप्रामाण्यप्रदर्शनपुरस्सरं पदार्थान् निर्णीय पाणिनीयस्य योग्यं प्रामाणिकं समन्वयमकल्पयत्। यथा— 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' ५-५-१३ इति सूत्रे द्रव्यपदार्थविचारसन्दर्भे यत्र कणादपरिभाषितद्रव्यपदार्थग्रहणे शास्त्रं न समन्वेति तत्र कणादमतवैलक्षण्येन—

**वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।**
**द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ।।**

इति कारिकया द्रव्यादिपदार्थानां लक्षणं प्रत्यपादयत्। इदं तदिति सर्वनामपरामर्शयोग्यं वस्तु द्रव्यमित्येकं द्रव्यलक्षणम्। हरिणैव 'भेद्यत्वेन विवक्षितोऽर्थो द्रव्य'मित्यनेन लक्षणान्तरमपि व्यरचि। किञ्चिन्निरूपितविशेष्यत्वेन विवक्षितोऽर्थो द्रव्यमिति तदर्थः। प्रकृते 'उच्चैस्तमाँस्तरुः' इत्यत्र उन्नते देश इत्यर्थे उच्चैश्शब्दस्याधिकरणशक्तिप्रधानतया सम्बन्धस्य विशेष्यत्वाद्देशस्य तत्र विशेषणत्वेन निरुक्तरीत्या लक्षितं द्रव्यत्वं नास्ति। अतो द्रव्यप्रकर्षाभावान्निरुक्तार्थे आमुर्न प्रवर्तते। अत्र विशेष्यत्वेन विवक्षितास्सर्वे पदार्था द्रव्याण्येव। एवञ्चात्र नैयायिकोक्तं द्रव्यलक्षणं नाश्रयणीयम्। तद्विषये कणादसिद्धान्तविरोधोऽस्तु वैयाकरणानाम्। का वा हानिः ? यत्र तु परकीयद्रव्यलक्षणस्वीकारे न शास्त्रासङ्गतिस्तत्र तदेव स्वीक्रियते। यथा—'विप्रतिषिद्धं चानधिकरणवाचि' २-४-१३ इत्यादौ। अत्र सूत्रे अधिकरणशब्दो द्रव्यपरः। अद्रव्यवाचिनां विरुद्धार्थानां द्वन्द्वो वैकवत् स्यादिति तत्सूत्रार्थः। गुणवाचकयोश्शीतोष्णयोर्द्वन्द्वे 'शीतोष्णम्-शीतोष्णे', एवं 'सुखदुःखं-सुखदुःखे' इत्युदाहरणम्। अत्र शीतोष्णादीनामपि निरुक्तरीत्या द्रव्यलक्षणाक्रान्तत्वेन अधिकरणवाचीति प्रतिषेधात् शीतोष्णादीनामनुदाहरणत्वमेव स्यात्। द्वन्द्वस्य सुबन्तसमुदायरूपत्वेन सर्वेषां सुबन्तानां जात्युपहितद्रव्य-बोधकत्वेनायं विधिस्सर्वात्मना निर्विषय एव स्यात्। अतः प्रकृतसूत्रे वस्तूपलक्षणमिति लक्षितं द्रव्यं नैव ग्राह्यम्। किन्तु गुणवद् द्रव्यमिति प्रसिद्धकणादपरिभाषितमेव ग्राह्यम्। न ह्यस्माकं शास्त्रान्तरसिद्धान्तेषु विद्वेषः। किन्तु अस्मच्छा-स्त्रीयप्रकियानिर्वहणे अस्माभिः प्रयत्यते। यत्र शास्त्रान्तरसिद्धान्तोऽस्मच्छास्त्रसमन्वये विरुध्यते तत्र तत्त्यज्यते। अविरोधे तु नैयायिकादिदर्शनान्तरीयसिद्धान्तोऽपि मूर्धन्यतया अस्माभिर्ग्राह्य एव।

उपर्युक्तरीत्या भर्तृहरिर्नैयायिकमतखण्डनपूर्वकं व्याकरणशास्त्रसिद्धान्तान् मुनित्रयाविरोधेन प्रदर्श्य महाभाष्यं समुचितरीत्या समन्वयन् व्याकरणशास्त्रं सदा रक्षितवान्। तदनुसारेणैवानन्तरकालिकैर्वैयाकरणैरपि तत्तद्व्याकरणग्रन्थेषु सत्यवसरे नैयायिकादिमतखण्डनपूर्वकं व्याकरणसिद्धान्ता न्यरूपिषत।

अत्रेदं विचारणीयम्—व्याकरणशास्त्रसिद्धान्तसमन्वयसन्दर्भे कुत्र कुत्र नैयायिकैः पर्यनुयोगो नितरां व्यधायि। तत्र किं कारणम्? इत्यादिकं सर्वमादौ अस्माभिः परिशीलनीयम्। तदैव तन्मतखण्डनम्, अस्मच्छाब्दिकमतमण्डनञ्च सम्भवति। अतो व्याकरणशास्त्रे न्यायशास्त्रप्रभावोऽत्यन्तं वरीवर्ति। तदर्थं सर्वैर्वैयाकरणैर्न्यायादिदर्शनान्तराण्यप्यध्येत-व्यानि।

**अत्र काचन शङ्का—वैयाकरणैः स्वशास्त्रसिद्धान्तपरिज्ञानाय तच्छास्त्रमेव मुहुर्मुहुरध्येयम्, किमर्थं न्यायप्रस्थाना-ध्ययनमिति।** तत्तु न सम्यक्। एकस्य स्वीयशास्त्राध्ययने कृतेऽपि पदार्थानुत्प्रेक्षितुं प्रज्ञा न विकसति। भिन्नभिन्न-

शास्त्रसिद्धान्तपरिज्ञानेन तु प्रज्ञा युक्तायुक्तविचाराय प्रभवति। अतस्सर्वेषां शास्त्रज्ञानां शास्त्रान्तराध्ययनमप्यावश्यकं भवति। उक्तञ्च वाक्यपदीये—

**प्रज्ञा विवेकं लभते भिन्नैरागमदर्शनैः।**
**कियद्वा शक्यमुन्नेतुं स्वतर्कमनुधावता॥**

एतावत्पर्यन्तं व्याकरणशास्त्रे न्यायशास्त्रप्रभावः कथमस्ति, कुतो वा वैयाकरणैर्न्यायशास्त्रमप्यध्येतव्यमित्यादि विषया मया यथामति संग्रहेण प्रत्यपादिषत। अत्र सन्दर्भे कुत्र कुत्र वैयाकरणानां नैयायिकानाञ्च मध्ये मतभेदास्समागताः ? कथं वा तत्तत्सन्दर्भे न्यायमतखण्डनपूर्वकं व्याकरणसिद्धान्तास्सप्रमाणं निरूपिता इत्येतत्सर्वं अस्मिन् लघुशोधप्रबन्धे विस्तरेण यथामति मया विव्रियते।

अन्योऽपि विषयो मया विज्ञाप्यते यत् बहूनां वैयाकरणानामयं भ्रमो भवति यत् सर्वदा वैयाकरणानां नैयायिकादिदर्शनान्तरीयाणाञ्च स्वस्वशास्त्रसिद्धान्तसमन्वयसन्दर्भे वैमत्यमेवेति। तदपि न समीचीनम्। यतो हि वैयाकरणानां, नैयायिकादिदर्शनान्तरीयाणाञ्च यद्यपि बहुत्र भिन्नभिन्नानि मतानि वर्तन्ते। तथापि क्वचित् क्वचित् तेषां सर्वेषां दार्शनिकानामैकमत्यमपि वर्तते। सोऽपि विषयो मयाऽत्र तत्तत्सन्दर्भे निरूपयिष्यते। मम तु व्याकरणमतसमर्थने पक्षपातो नास्ति। पदार्थपरिशोधनमेव प्रधानमुद्देश्यं मत्वा मयैतावान् प्रयासो विधीयते। तथा हि—

**क. धात्वर्थनिरूपणे प्राचीननैयायिकमतप्रदर्शनम्—तत्समीक्षा।**

पचति, पाकः, करोति, कृतिरित्यादौ फलं, व्यापारः, एकत्वादिसंख्या, कर्तृकर्मादिरूपो धर्मी, काल इत्यादि सर्वे पदार्था भासन्ते। अत्र विषये कस्मिन्नपि शास्त्रे कस्यापि शास्त्रज्ञस्य न विप्रतिपत्तिः। कस्यार्थस्य को वाचक इत्यत्रैव सर्वेषां विप्रतिपत्तिः।

अत्र प्राचीननैयायिकाः—'चैत्रस्तण्डुलं पचती'त्यादौ कर्तरि लकारे, 'पच्यते तण्डुलः स्वयमेव' इत्यादौ कर्मणि लकारे च धातोर्व्यापार एव शक्तिः न तु फले। तथा च व्यापारमात्रं धात्वर्थः। फलं संयोगादिरूपं तु कर्मप्रत्ययार्थः। अत्र च 'कर्मणि द्वितीया', 'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्याद्यनुशासनमेव प्रमाणम्। कर्मत्वे द्वितीया, कर्तृत्वे लकार इति तदर्थः। कर्मत्वञ्च क्रियाजन्यफलाश्रयत्वम्। तत्र च क्रिया धातुत एव लभ्यते। जन्यजनकभावस्य च पदार्थत्वं विनैव संसर्गमर्यादया भानं सम्भवतीति फलमात्रं कर्मप्रत्ययार्थ—इति वदन्ति।

तन्न युक्तम्। तथा सति 'चैत्रो ग्रामं गच्छती'त्यत्र चैत्रनिष्ठक्रियायाः पूर्वदेशविभागोत्तरदेशसंयोगजनकत्वेन संयोगविभागयोरपि फलत्वात् 'चैत्रो ग्रामं गच्छती'त्यर्थे 'चैत्रो ग्रामं त्यजति' इति, एवं 'चैत्रो ग्रामं त्यजती'त्यर्थे 'चैत्रो ग्रामं गच्छती'ति बोधापत्तेः। तथा च त्यजिगम्योः पर्यायतापत्तेः। एतद्दोषवारणाय प्रत्ययार्थसंयोगरूपफलबोधे गमिधातुसमभिव्याहारस्य, प्रत्ययार्थविभागरूपफलबोधे त्यजिधातुसमभिव्याहारस्य च कारणत्वकल्पनेऽतिगौरवम्। त्यागो गमनमिति प्रयोगापत्तेश्च।

ननु कृञो व्यापारसामान्यत्ववादिनस्तव मते वातरोगादिना स्पन्दमाने पुरुषे 'नाऽहं स्पन्दं करोमी'त्यत्र, 'रथो गमनं करोती'त्यत्र च यथा करोतेर्यत्नार्थकत्वं तद्वन्ममापि त्यागो गमनमित्यत्र व्यापारमात्रवाचकत्वस्याऽपि त्यजादेः फलावच्छिन्नव्यापारवाचकत्वं सेत्स्यति। अतः पूर्वोक्तदोषापत्तिर्नेति चेत्—एवं तर्हि 'ग्रामं ग्रामाय वा गच्छती'त्यादौ

गत्यर्थकर्मणि 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ' इत्यादिसूत्रेण द्वितीया-चतुर्थ्योः, 'श्वशुराज्जिह्रेति' इत्यादौ 'ल्यब्लोपे कर्मणी'त्यादिवार्त्तिकेन पञ्चम्याः, तथा 'अधीती व्याकरणे' इत्यादौ 'क्तस्येन्विषयस्ये'त्यादिना सप्तम्याश्च विधानेन अनेकेषां सुपां, तिङाञ्च फले शक्तिकल्पने गौरवात्तदपेक्षया धातोरेव फलांशे शक्तिकल्पनमुचितम्।

अपि च प्राचीननैयायिकमते धात्वर्थान्वितप्रत्ययार्थफलाश्रयत्वं कर्मत्वम्, एवं प्रत्ययार्थफलव्यधिकरण-व्यापारवाचित्वं सकर्मकत्वमित्येवं रीत्या कर्मत्वं, धातूनां सकर्मकत्वाऽकर्मकत्वविभागश्च तैस्साधनीयः। तथा सति भावे लकारे 'चैत्रेण भूयते' इत्यादौ धातूनां व्यापारमात्रार्थकत्वात् सकर्मकत्वात् कर्मणि लकारानापत्तिः। तथा चाकर्मक धातुप्रकृतिकहेतुमण्ण्यन्ते 'भावयति घटो, मेधयति पुरुष' इत्यादौ पूर्वोक्ताकर्मकत्वसकर्मकत्वादिलक्षणानामव्याप्तिः स्यात्। अतो व्यापार इव फलमपि धात्वर्थ एव। न तु फलं कर्मप्रत्ययार्थः। अतोऽत्र प्राचीननैयायिकमतमयुक्तम्। स्पष्टञ्चेदं *वैयाकरणसिद्धान्तलघुमञ्जूषायां* धात्वर्थविचारे, तद्व्याख्याने *नागेशभावप्रकाशाख्यग्रन्थे* च।

**ख. ईश्वरेच्छा शक्तिरिति नैयायिकमतखण्डनम्।**

पदपदार्थयोस्सम्बन्धो वाच्यवाचकभावरूपः शक्तिः। सा च शब्दार्थोभयनिष्ठा। तयोश्शक्तिग्राहकं तादात्म्यम्। तच्च सङ्केतोऽभेदरूपः। पदनिष्ठशक्त्युपकारकत्वात्तस्यापि शक्तिरिति व्यवहारः। उक्तञ्च पातञ्जलभाष्ये-'सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः, योऽयं शब्दस्सोऽर्थो योऽर्थस्स शब्दः।'—इति वैयाकरणाः।

अत्र नैयायिकाः—अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारा, इदं पदमिममर्थं बोधयत्वित्याकारा वेश्वरेच्छैव शक्तिः। वाच्यवाचकभावरूपसम्बन्धान्तरं नैव आश्रयणीयम्। ईश्वरेच्छा द्विविधा—अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारा अर्थविशेष्यकेच्छैका। इदं पदमिममर्थं बोधयत्विति पदविशेष्यकेच्छा अपरा। तत्र अर्थविशेष्यकेश्वरेच्छायाम् इदंशब्दस्य कर्मवाचकस्याभेदेन अर्थेऽन्वयः। इदंशब्दोत्तरपञ्चम्या जन्यत्वमर्थः। जन्यतायां शब्दस्य निरूपितत्वसम्बन्धे-नान्वयः। जन्यत्वस्य च बोद्धव्यघटकबुधधात्वर्थे बोधे आश्रयत्वसम्बन्धेनान्वयः। बोधस्य च निरूपितत्वसम्बन्धेन तव्यप्रत्ययार्थविषयतायामन्वयः। तस्याश्च स्वरूपसम्बन्धेनार्थेऽन्वयः। तथा च इदमभिन्नशब्दनिरूपितजन्यतावद्बोध-निरूपितविषयतावानर्थ इत्यर्थविशेष्यकेच्छायाः स्वरूपं पर्यवस्यति।

पदविशेष्यकेच्छायाम् इदमर्थस्याभेदेनार्थेऽन्वयः। अर्थस्य च विषयतायां निष्ठत्वसम्बन्धेनान्वयः। विषयत्वस्य च निरूपकत्वसम्बन्धेन बुधधात्वर्थे बोधेऽन्वयः। बोधस्य निरूपितत्वसम्बन्धेन जनकत्वरूपाख्यातार्थे अन्वयः। तथा च इदमर्थनिष्ठविषयतानिरूपकबोधनिष्ठजन्यतानिरूपकजनकतावत्पदमिति पदविशेष्यकेच्छायाः स्वरूपं पर्यवस्यति।

नन्वेवं विषयतासम्बन्धेनेच्छावत्त्वमेव वाचकत्वं, वाच्यत्वं वा वाच्यम्। तस्य चेच्छाविषये पदे, अर्थे, जन्यजनक-भावरूपसम्बन्धे, बोधे च सर्वत्र सत्त्वात् वाच्यवाचकयोर्व्यवस्था न स्यात् इति चेन्न। तस्यामीश्वरेच्छाविषयो यो बोध-स्तन्निष्ठजन्यतानिरूपितजनकताख्यविषयताश्रयत्वसम्बन्धेनेच्छावत्त्वं वाचकत्वम्, इच्छीयबोधनिष्ठविषयतानिरूपित-विषयताश्रयत्वसम्बन्धेनेच्छावत्त्वं वाच्यत्वमिति न सम्बन्धादौ वाचकत्वलक्षणस्यातिव्याप्तिः।

ननु वाक्येष्वेव वृद्धव्यवहारदर्शनात्तत्रैव शक्तिरस्तु। पदे तादृशव्यवहारादर्शनात् तत्र शक्तिर्नास्तीति चेन्न। शास्त्रप्रक्रियानिर्वाहाय प्रकृतिप्रत्ययाभ्यां पदविभागस्यापि कल्पितत्वात् पदे शक्तिर्निराबाधा। अत ईश्वरेच्छैव शक्ति-रित्याहुः।

**नैयायिकमतसमीक्षणम्**—ईश्वरेच्छा शक्तिरिति नैयायिकमतमयुक्तम्। तथाहि—प्रयोजकवृद्धेन घटमानयेत्युक्तम्। प्रयोज्यवृद्धेन घट आनीतः। तदानीं तटस्थो बाल एवं विचारयति यत् प्रयोजकेन घटमानयेत्युक्तम्। प्रयोज्यस्तमानीतवान्। तत्र घटानयने घटमानयेति शब्द एव कारणम्। तथा च प्रयोज्यस्य ज्ञानजनकं किमित्याकाङ्क्षायां जनकतारूपप्रश्ने जनकताघटितसम्बन्धकल्पनस्यान्याय्यत्वात्। किञ्च शाब्दबोधात् प्राक् तत्कारणीभूतं शक्तिज्ञानमपेक्षितं भवति। बोधजनकत्वघटितस्यैव शक्तित्वे तु बोधजननात् प्राक् बोधजनकत्वाभाववत्पदमिदमिति निश्चयसत्त्वेन तद्वत्ताज्ञानं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वेन बोधजनकत्वघटितेच्छात्मकस्य, बोधजनकत्वरूपस्य वा शक्तित्वासम्भवात्। किञ्चेच्छा इत्युक्ते बोधजनकत्वरूपा, बोधजनकत्वञ्चेच्छारूपमिति आत्माश्रयेण बोधजनकत्वस्यावच्छेदकत्वमपि नैव घटते। एतेन नैयायिकैस्सह बोधजनकत्वमेव शक्तिरिति वदन्तः प्राचीनवैयाकरणा अपि परास्ताः।

किञ्च नैयायिकैः ज्ञानेच्छाकृतीनामङ्गीकृतत्वात् विनिगमनाविरहादीश्वरेच्छायामेव शक्तिः, न तु कृतौ, न वा ज्ञान इति वक्तुमशक्यत्वात्। किञ्चेश्वरेच्छायाश्शक्तित्वे ज्ञानकृत्योस्तद्द्वयात्मककारणाभावेऽपि कार्योत्पत्तिरूपव्यतिरेकव्यभिचारः परस्परमापद्येत।

किञ्च नव्यनैयायिकाः प्रत्यक्षानुमानोपमानशब्दाख्यप्रमाणचतुष्टयमङ्गीकुर्वन्ति। तत्र प्रमाणानि सर्वथा प्रमेयेण जनकत्वतद्घटितातिरिक्तसम्बन्धेनैव सम्बद्धानि भवन्ति। शब्दस्यापि प्रमाणत्वेन तदतिरिक्तसम्बन्धेनार्थेन सह शब्दज्ञानजनकत्वमुचितम्। बोधजनकत्वस्यैव शक्तित्वे शब्दस्य प्रामाण्यं भज्येत। अपि च नैयायिकानां प्रथमतो व्याप्तिज्ञानं, ततः पक्षधर्मताज्ञानं, ततः परामर्शः, अनन्तरमनुमितिरिति क्रमो विद्यते। यथा पर्वतो वह्निमान् धूमाद् यथा महानसमित्याकारकानुमितिस्थले प्रथमतो वह्निव्याप्यो धूम इति व्याप्तिज्ञानं जायते। ततो धमूवान् पर्वतः इति पक्षधर्मताज्ञानं, ततो वह्निव्याप्यधूमवानयं पर्वतः इति परामर्शज्ञानं, ततः पर्वतो वह्निमान् इत्यनुमितिरिति तत्र क्रमः। बोधजनकत्वस्यैव शक्तित्वे पर्वतो वह्निमान् धूमादित्याकारकानुमितिस्थलेऽपि हेतुसाध्ययोर्धूमज्ञानजन्यज्ञानविषयो वह्निर्भवतु इति इच्छाविषयत्वेन, वह्निविषयकबोधजनकत्वरूपेण वा सम्बन्धेनैवानुमित्युत्पत्तौ हेतुसाध्ययोर्नैयायिकाभिमतव्याप्त्युच्छेदप्रसङ्गः। तस्मात् पदपदार्थयोर्बोधजनकत्वं, तद्घटितेश्वरेच्छादिरूपश्च सम्बन्धो नोचितः।

वस्तुतस्तु पदपदार्थयोस्सम्बन्धत्वमेव नैव घटते। सम्बन्धस्य सर्वथा द्विष्ठत्वात्। यथा—घटभूतलयोस्संयोगादिस्सम्बन्धो भवति। तत्र सम्बन्धिनोराधाराधेययोर्घटभूतलयोस्सत्त्वात्। प्रकृते जनकत्वस्य, ईश्वरेच्छाविषयत्वस्य वैकस्मिन्नेव सत्त्वात्, पदमात्रविषयत्वाच्च सम्बन्धत्वं नैव घटते। किञ्च अयमर्थः, इदं पदं वेच्छावदिति लोकव्यवहारादर्शनाच्च ईश्वरेच्छायास्सम्बन्धत्वमनुचितम्। 'सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रितो विशिष्टबुद्धिनियामकश्च', 'द्विष्ठस्सम्बन्धः' इति चाभियुक्तव्यवहारो विद्यते। ज्ञाने विषयज्ञानकर्त्रोरुभयोः कारणत्वेऽपि जनकत्वसम्बन्धेन विषयविशिष्टः कर्ता, कर्तृविशिष्टो विषय इति वा विशिष्टबुद्ध्यदर्शनात् ज्ञानकर्त्रोः सम्बन्धत्वासम्भवः।

उपर्युक्तदोषग्रस्तत्वादीश्वरेच्छा शक्तिरिति नैयायिकमतमयुक्तम्। तस्मात् पदपदार्थयोस्सम्बन्धान्तरमेव शक्तिर्वाच्यवाचकभावापरपर्याया, तद्ग्राहकश्चेतरेतराध्यासमूलकं तादात्म्यं, तच्च सङ्केत इति वैयाकरणानामाशयः। स्पष्टञ्चेदं *सिद्धान्तलघुमञ्जूषायां*, तद् व्याख्यायां *रत्नप्रभायां* च।

**ग. नव्यनैयायिकशैल्या कालाध्वनोरत्यन्तसंयोगे इति सूत्रस्थव्यापकत्वनिरूपणम्।**

व्याकरणशास्त्रीयप्रक्रियाद्वारा असाधुशब्देभ्यो विविच्य साधुशब्दबोधनाय व्याकरणमावश्यकम्। इदञ्च शास्त्रं पदसाधुत्वप्रतिपादकं भवतीति निर्विवादम्। एतादृशे व्याकरणशास्त्रे कारकप्रक्रियाभागः अतीव कठिनो गभीरश्च। अयञ्च कारकभाग उद्दण्डपण्डितानपि व्यामोहयति तर्हि सामान्यपण्डितानां का कथा। अस्मिन् कारकभागे विभक्त्यर्थविचारः अत्र प्रस्तुतोऽस्ति। तत्र उपपदकारकभेदेन विभक्तयो द्विधा विभज्यन्ते। कारकत्वव्याप्यकर्तृकर्मादिसंज्ञाविधानद्वारा या विभक्तयो विधीयन्ते ताः कारकविभक्तयः। कारकाधिकारानन्तर्गतास्तत्तत्पदपदार्थमूलकत्वेन विहिता विभक्तय उपपदविभक्तय इत्युच्यन्ते उपपदविभक्तिविधायकसूत्राणि कारकप्रकरणे बहूनि वर्तन्ते। तेष्वन्यतमद् भवति 'कालाध्वनोरत्यन्तसंयोगे' २।३।५। इति सूत्रम्।

अत्रेदं विचारणीयम्—मदीये प्रस्तुतशोधप्रबन्धे सत्यवसरे बहुत्र तत्तत्सन्दर्भानुसारं नैयायिकमतखण्डनपूर्वकं व्याकरणसिद्धान्ता मया प्रादर्शिषत। तथापि 'कालाध्वनोरत्यन्तसंयोगे' इति सूत्रार्थविषये वैयाकरणानां नैयायिकानाञ्च ऐकमत्यमेवास्ति। *वैयाकरणसिद्धान्तलघुमञ्जूषायां* सुबर्थविचारे कालाध्वनोरत्यन्तसंयोगे इति सूत्रघटकः अत्यन्तसंयोगपदार्थो नव्यनैयायिकशैल्या विचारितः। न्यायशास्त्रे लेशतोऽपि ज्ञानरहितानां केवलवैयाकरणानां *लघुमञ्जूषास्थ*तत्सूत्रस्थात्यन्तसंयोगपदार्थो दुर्ज्ञेय एव। ये न्यायशास्त्रमपि जानीयुस्त एव तदर्थं सम्यग्बोद्धुं प्रभवन्ति। अतो व्याकरणशास्त्रे न्यायशास्त्रप्रभावः अत्यन्तं वरीवर्ति। अहमिदानीं 'कालाध्वनोरत्यन्तसंयोग' इति सूत्रार्थविचारं *लघुमञ्जूषोक्त*रीत्या यथामति निरूपयामि। तथा हि—

'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीयाध्याये तृतीयपादे पञ्चमं सूत्रम्। कालाध्वनोः, अत्यन्तसंयोग इति पदच्छेदः। अन्तं विराममतिक्रान्तः अत्यन्तः। स चासौ संयोगश्चात्यन्तसंयोगः। निरन्तरसन्निकर्ष इत्यर्थः। केनात्यन्तसंयोग इत्याकाङ्क्षायां गुणक्रियाद्रव्यैरित्यौचित्याद्बोध्यम्। अत्यन्तसंयोगे गम्यमाने कालवाचिनः, अध्ववाचिनश्च द्वितीया भवतीति सूत्रार्थः। 'मासमधीते', 'क्रोशं कुटिला नदी' इत्युदाहरणम्। अत्रोदाहरणद्वये मासक्रोशशब्दाभ्यां 'कर्मणि द्वितीया' इति सूत्रेण द्वितीया न प्राप्नोति, अकर्मकधातुभिर्योगे एव कर्मसंज्ञाविधानात्। तथा च प्रकृतोदाहरणयोः कर्मसंज्ञाया अभावेन 'कर्मणि द्वितीया' इति सूत्रेण द्वितीयाया अप्राप्तौ तद्विधानायेदं सूत्रं पाणिनिना आरब्धम्।

**अत्यन्तसंयोगपदार्थविचारः**—अत्यन्तसंयोगो नाम व्यापकत्वम्। तत्त्वञ्च तदधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वम्। मासव्यापकत्वञ्च त्रिंशत्ववन्निष्ठप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नत्वम्। 'मासमधीते' इत्यत्र लक्षणसमन्वयः—मासो नाम त्रिंशद्दिनात्मकः कालः। त्रिंशत्ववान्मासः। तन्निष्ठप्रतियोगिव्यधिकरणो य अत्यन्ताभाव इत्युक्ते मासे त्रिंशत्ववान्न इत्याकारकप्रतीतिसिद्धः अत्यन्ताभावो नैव समायाति। अपि तूदासीनघटात्यन्ताभावस्समायाति। तत्प्रतियोगित्वं घटे। अप्रतियोगित्वं मास इति।

अत्रेयमाशङ्का—प्रकृतव्यापकत्वपरिष्कारे अभावे प्रतियोगिवैयधिकरण्यं मास्तु। तथा चात्र प्रतियोगिव्यधिकरणात्यन्ताभावो नैव ग्राह्यः। किन्तु प्रतियोगिसमानाधिकरणात्यन्ताभाव एवात्र स्वीक्रियते। तथा च त्रिंशत्ववन्निष्ठप्रतियोगिसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नत्वं व्यापकत्वमिति लक्षणं फलति। प्रकृतप्रतियोगिसमानाधिकरणात्यन्ताभावमादायैव मासमधीत इत्यादिप्रयोगा उपपादनीया इति।

अत्रेदं समाधानम्—प्रकृतव्यापकत्वलक्षणे यदि अभावे प्रतियोगिवैयधिकरण्यं नाश्रीयेत तर्हि 'कपिसंयोगी एतद्वृक्षत्वादि'त्यत्रैकत्रैव वृक्षाधिकरणे अग्रावच्छेदेन कपिसंयोगस्य सत्त्वेऽपि मूलावच्छेदेन तदभावात् प्रकृते कपिसंयोगकपिसंयोगाभावयोरेकत्र सत्त्वात् एतद्वृक्षत्वरूपहेतुव्यापकत्वस्य कपिसंयोगरूपसाध्ये वक्तुमशक्यतया तत्र व्यापकत्वलक्षणस्याव्याप्तिः स्यात्। अतस्तद्वारणायाभावे प्रतियोगिवैयधिकरण्यं निवेशनीयम्। तथा च न दोषः। 'मासमधीते' इत्युदाहरणवाक्यस्यायमर्थः—मासो नाम त्रिंशद्दिनात्मकः कालः। यो माणवकस्त्रिंशद्दिनेषु यावत् प्रतिदिनमविच्छिन्नतया अध्ययनं करोति तदा तस्य त्रिंशद्दिनात्मकाध्ययनस्य व्यापकत्वेन तत्र प्रकृतसूत्रेण मासशब्दाद् द्वितीयायां कृतायां 'मासमधीते' इति प्रयोगस्सङ्गच्छते। यदि मासे उद्देश्यतावच्छेदकसामानाधिकरण्येन यत्राध्ययनं प्रवृत्तं तत्राध्ययनस्य मासव्यापकत्वाभावात् प्रकृतसूत्रेण द्वितीयाया अप्राप्तौ षष्ठ्यां कृतायां 'मासस्य द्विरधीते' इत्येव प्रयोगो भवति। एवमेवाध्वनो विषये 'क्रोशं कुटिला नदी' इत्याद्युदाहरणेष्वपि समन्वय ऊह्यः। स्पष्टश्चेदं *व्युत्पत्तिवादे* द्वितीयाकारके, *वैयाकरणासिद्धान्तलघुमञ्जूषायां*, तद्व्याख्याने *नागेशभावप्रकाशे* च। एवञ्चैतत्सूत्रार्थवर्णनावसरे वैयाकरणानां नैयायिकानाञ्चैकमत्यमेवास्ति, न तु वैमत्यमिति दिक्।

**घ. नैयायिकमतखण्डनपूर्वकमिष्टसाधनत्वमेव लिङर्थ इति व्याकरणसिद्धान्तप्रदर्शनम्**

'सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता' इत्यभियुक्तव्यवहारात् सुप्तिङन्तसमुदायो वाक्यमिति व्यपदिश्यते। 'चैत्रस्तण्डुलं पचति', 'यजेत स्वर्गकामः' इत्यादीन्युदाहरणानि। तत्र प्रातिपदिकेभ्यस्सुपः, धातुभ्यश्च तिङो विधीयन्ते। तिङस्तु अष्टादश वर्तन्ते। ते तिबादेशा लकारस्थाने 'तिप्तस्झि' इत्यादिसूत्रेण विधीयन्ते। 'वर्तमाने लट्', 'परोक्षे लिट्' इत्यादिसूत्रैर्धातोर्लकारा विधीयन्ते। ते च लकारा लट्लिडादिभेदेन दश वर्तन्ते। तेषां मध्ये लेट्लकारस्य छन्दस्येव प्रयोगो भवति, न तु लोके। तं लेट्लकारं परित्यज्य यद्यपि नवैव लकारा दृश्यन्ते तथापि विधिलिङाशीर्लिङित्याकारकभेदेन लिङो लकारस्य द्वैविध्यात् दश लकारा लोकेऽपि सिध्यन्ति। लिङ्लकारयोर्मध्ये विधिलिङ्लकारो यो वर्तते तस्य कः अर्थ इति विचारसन्दर्भे वैयाकरणाः, नैयायिकाः, मीमांसकाश्च सर्वे दार्शनिकाः तत्तन्मतप्रतिष्ठापनपूर्वकं परस्परं विवदन्ते। अस्मिन् सन्दर्भे वैयाकरणमतोक्तरीत्या लिङर्थं दिङ्मात्रं प्रदर्श्य ततो विस्तरेण नैयायिकमतप्रदर्शनपूर्वकं तन्मतखण्डनद्वारा दीक्षितकौण्डभट्टनागेशप्रभृतिवैयाकरणमूर्धन्यानां मतानुसारेण विस्तरेण लिङर्थमहं यथामति प्रदर्शयाम्यधुना। तथाहि—

'यजेत' इत्यादौ भागद्वयं वर्तते। *यज्* धातुः, प्रत्ययश्च। तत्र *त* इति प्रत्ययो विधिलिङ्लकारस्थाने विधीयते। तत्र लिङर्थः क इति विचारावसरे वैयाकरणा एवं लिङर्थं निरूपयन्ति। तथाहि—'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' इति सूत्रेण विध्यादिष्वर्थेषु लिङ् व्यधायि। विधिः प्रेरणं, भृत्यादेर्निकृष्टस्य प्रवर्तनम्। निमन्त्रणं नियोगकरणमावश्यके प्रेरणेत्यर्थः। आमन्त्रणं कामचारानुज्ञा। अधीष्टं सत्कारपूर्वको व्यापारः। यद्यप्येतत्प्रार्थनासहितचतुष्टयस्य प्रवर्तनात्वेन व्यवहारः, एतेषां चतुर्णां पृथगुपादानापेक्षया लाघवात् प्रवर्तनात्वस्यैव विधिप्रत्ययशक्यतावच्छेदकत्वम्; अन्यथा विधित्वनिमन्त्रणत्वादिना वाच्यत्वे गुरुभूतशक्यतावच्छेदकनानात्वापत्त्या गौरवात्, अतः प्रवर्तना-संप्रश्नयोर्लिङित्येव सूत्रयितुमुचितं, तथापि तत्तत्स्वरूपविवरणप्रदर्शनाय, स्पष्टार्थं वा विध्यादीनामुपादानं पृथक् कृतमिति न दोषः।

ओदनकामः पचेत, स्वर्गकामो यजेतेत्यादिषु पुरुषो लिङादिश्रवणे अयं मां प्रवर्तयति, मत्प्रवृत्त्यनुकूलव्यापारवानयमिति ज्ञानद्वारा तत्तद्विधिषु प्रवर्तते। प्रवर्तनात्वञ्च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्। स्वर्गकामो यजेत इत्यत्र

लक्षणसमन्वयः— प्रवृत्तिः चैत्रस्य यागादौ प्रवृत्तिः। तज्जनकं यज्ज्ञानं यागः स्वर्गसाधनमित्याकारकं ज्ञानम्। तादृशज्ञानीया या विषयता यागादिनिष्ठा विशेष्यत्वाख्या विषयता। तन्निरूपितप्रकारतावच्छेदकत्वं स्वर्गसाधनत्वस्येति। एतादृशेष्टसाधनत्वस्य धात्वर्थे यागादावन्वयः। एतादृशप्रवर्तनयेष्टसाधनत्वमनुमीयते। 'न कलञ्जं भक्षयेदि'त्याकारकनिषेधस्थले तु निवर्तना लिङर्थः। निवर्तनात्वञ्च निवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्। तथा च लक्षणसमन्वयः—निवृत्तिः चैत्रस्य कलञ्जभक्षणादौ निवृत्तिः। तज्जनकं यज्ज्ञानं कलञ्जभक्षणं मदनिष्टसाधनमित्याकारकं ज्ञानम्। तादृशज्ञानीया या विषयता भक्षणत्वप्रकारकाभावत्वावच्छिन्ना विशेष्यता। तन्निरूपितप्रकारतावच्छेदकत्वं निवर्तनात्वस्य। एतादृशया निवर्तनयाऽपि भक्षणनिषेधात्मकमिष्टसाधनत्वमनुमीयते। अत्रेष्टसाधनत्वस्य नञर्थेऽभावेऽन्वयः। एवञ्चेष्टसाधनत्वमेव विध्यर्थ इति वैयाकरणानामाशयः।

अत्र नैयायिकाः—यजेत, जुहुयादित्यादिविधिस्थले यदि केवलमिष्टसाधनत्वमेव विध्यर्थः स्यात्तर्हि पुरुषस्य चन्द्रमण्डलं प्रति जिगमिषायास्सत्वेन तस्य चन्द्रमण्डलग्रहणादावपि प्रवृत्तिर्दुर्वारा। तद्वारणाय कृतिसाध्यत्वमपि निवेशनीयम्। अत एव कृत्यसाध्ये चन्द्रमण्डलगमनादौ चैत्रादेः प्रवृत्त्यभावस्सिध्यति। किञ्चेष्टसाधनत्वस्यैव विध्यर्थत्वे चैत्रादेर्मधुविषसंपृक्तान्नभोजनेऽपि विषभक्षणं मदिष्टसाधनमित्याकारकेच्छायास्सत्त्वेन प्रवृत्त्यापत्तिः। अतस्तत्र प्रवृत्तिवारणाय बलवदनिष्टाननुबन्धित्वमपि निवेशनीयम्। तत्त्वञ्च इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्। प्रकृते चैत्रादेरिष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तस्य मरणदुःखस्य जननान्न तत्र तस्य प्रवृत्तिः। दुःखाजनकत्वस्य तत्रासत्त्वात्। 'न कलञ्जं भक्षयेत्'—इत्याकारकनिषेधस्थले तु लिङर्थस्य बलवदनिष्टाननुबन्धित्वस्यैव योग्यताबलान्नञर्थे अभावे अन्वयः। तत्रापि कृतिसाध्यत्वस्य वा इष्टसाधनत्वस्य वा नञर्थे अभावे नान्वयः। अन्यथा निषिद्धेऽपि कलञ्जभक्षणादौ तृप्त्यादिरूपेष्टसाधनत्वस्य, कृतिसाध्यत्वस्य च सत्त्वेन तदभावस्य नञा बोधने तद्वाक्यस्य प्रामाण्यानुपपत्तेः। बलवदनिष्टाननुबन्धित्वस्यैवान्वये तु तस्यैवाभावो बलवदनिष्टनरकाद्यनुबन्धिनि तत्तत्कर्मण्यबाधितो बोध्यत इति तत्प्रामाण्योपपत्तिः। 'श्येनेनाभिचरन् यजेत' इति वेदवाक्यविहितश्येनादियागविधायकस्थले तु बलवदनिष्टाननुबन्धित्वस्य बाधितत्वात् तदतिरिक्तस्येष्टसाधनत्वकृतिसाध्यत्वरूपार्थद्वयस्यैव धात्वर्थे श्येनादावन्वयः। एवञ्च त्रितयं लिङर्थ इति वदन्ति।

**नैयायिकमतसमीक्षणम्**—वस्तुतस्तु नैयायिकमतमयुक्तम्। कृतिसाध्यत्वस्य वेदादवगतत्वेऽपि न तन्मात्रं प्रवर्तकम्। अशक्तस्यापि प्रवृत्त्यापत्तेः। किन्तु इष्टसाधनत्वमेव प्रवर्तकम्। तच्च यागो मत्कृतिसाध्यः, मत्कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वादित्यनुमानरूपलौकिकप्रमाणेनाऽपि सम्भवतीति न विधेः कृतिसाध्यत्वे शक्तिः। निरुक्तानुमानप्रमाणरूपान्यलभ्यत्वात्। अनन्यलभ्यश्शब्दार्थ इति न्यायात्।

वस्तुतस्तु कृतिसाध्यत्वज्ञानस्य प्रवर्तकत्वमेव नास्ति। कृत्यसाध्ये चैत्रस्य चन्द्रमण्डलग्रहणादौ प्रवृत्त्यभावस्तु तत्र वृथा श्रमजनकतया द्वेषादुत्पद्यते। अतो न तल्लिङ्पदशक्यम्।

बलवदनिष्टाननुबन्धित्वज्ञानमपि न लिङर्थः, द्वेषाभावेनान्यथासिद्धत्वात्। एवञ्च द्वेषदशायामप्रवृत्तेः, द्वेषाभावदशायां प्रवृत्तेश्च सिद्धतया न नैयायिकोक्तरीत्या तज्ज्ञानस्य कारणत्वं सिध्यति। किञ्चास्तिककामुकस्येदं बलवदनिष्टाननुबन्धीतिज्ञानसत्वेऽपि उत्कटेच्छायां परसुंदरीगमनादौ प्रवृत्तिदर्शनाद्बलवदनिष्टाननुबन्धित्वलक्षणस्य व्यभिचारः स्यात्। तस्मादिष्टसाधनत्वमेव विधिनिषेधस्थलद्वयेऽपि लिङर्थः। उक्तञ्च *विधिविवेके* मण्डनमिश्रैः—

**पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः।**
**प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनाम्॥** इति।

पुंसां प्राणिनां, क्रियासु यागादिकर्मसु; प्रवर्तकः प्रवृत्तिजनकज्ञानविषयतावच्छेदकः इष्टसाधनत्वादन्यः कोऽपि धर्मो नास्ति। यतः प्रवृत्तिहेतुं धर्मं तद्धेतुतावच्छेदकप्रवर्तनापदेन व्यपदिशन्तीति तत्कारिकार्थः। स्पष्टञ्चेदं *वैयाकरणभूषणसारे* तथा अस्मद्गुरुचरणैर्विरचितायां तद्व्याख्यायां *तत्त्वदर्शिन्याञ्च*।

अपि च नैयायिकोक्तरीत्या इष्टसाधनत्वकृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वरूपार्थत्रितये यदि लिङः शक्तिः कल्प्येत तर्हि शक्तित्रयकल्पने गौरवापत्तिः। किञ्च नैयायिकमते लिङादीनामर्थत्रये शक्तित्रयकल्पने तत्तत्समभिव्याहारातत्तद्व्युत्पत्तिवशाच्च विभिन्नशाब्दबोधोदयात् तदनुरोधान्न्यायमते सप्तकार्यकारणभावकल्पनापत्तावतिगौरवम्। तथा हि—लिङोऽर्थत्रये शक्तिस्वीकारे 'न कलञ्जं भक्षयेदि'त्यादौ लिङर्थबलवदनिष्टाननुबन्धित्वप्रकारकनञर्थाभावविशेष्यकशाब्दबोधोदयात्तदनुरोधेन (१) नञ्समभिव्याहृतलिङर्थबलवदनिष्टाननुबन्धित्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन जायमानशाब्दबुद्धित्वावच्छिन्नं प्रति नञ्पदजन्योपस्थितिः कारणम्, (२) तत्रैव नञसमभिव्याहारे यजेतेत्यादितो बलवदनिष्टाननुबन्धित्वभिन्नप्रकारकधात्वर्थविशेष्यकशाब्दबोधोदयात्तदनुरोधेन नञसमभिव्याहृतबलवदनिष्टाननुबन्धित्वातिरिक्तलिङर्थप्रकारकबोधे धातुजन्योपस्थितिः कारणम्, (३) 'न पचति चैत्र' इत्यत्र लिङतिरिक्तलकारसमभिव्याहृतनञ्समभिव्याहारे पाकानुकूलकृत्यभाववाँश्चैत्र इति नञर्थप्रकारकप्रथमान्तार्थविशेष्यकशाब्दबोधोदयात्तदनुरोधेन नञ्समभिव्याहृतलिङर्थप्रकारकशाब्दबोधे धातुजन्योपस्थितिः कारणम्, (४) लिङसमभिव्याहृतनञर्थप्रकारकशाब्दबोधे प्रथमान्तपदजन्योपस्थितिः कारणम्, (५) लिङ्समभिव्याहृतनञर्थप्रकारकशाब्दबोधे धातुजन्योपस्थितिः कारणम्, (६) नञसमभिव्याहृताख्यातार्थकृतिप्रकारकशाब्दबोधे प्रथमान्तपदजन्योपस्थितिः कारणम्, (७) नञ्समभिव्याहृताख्यातार्थकृतिप्रकारकशाब्दबोधे नञ्पदजन्योपस्थितिः कारणमित्येवं रीत्या सप्त कार्यकारणभावाः नैयायिकमते कल्पनीयाः।

अपि च नैयायिकोक्तरीत्या यदि विधेरर्थत्रये शक्तिः कल्प्येत तर्हि 'श्येनेनाभिचरन् यजेत' इत्यत्र श्येनादौ प्रमाणान्तरेण श्येने नरकसाधनत्वज्ञानात् तत्र बलवदनिष्टाननुबन्धित्वस्य बाधितत्वान्न तस्य तत्रान्वय इति तत्रापि बोधापत्तिः। स्पष्टञ्चेदं *भाट्टरहस्ये* तद्व्याख्याने *खण्डदेवभावप्रकाशे* च।

*वैयाकरणसिद्धान्तलघुमञ्जूषायां*नागेशोपाध्यायास्तु लिङर्थविषये इत्थमभिप्रयन्ति यत्—'यजेत स्वर्गकामः' इत्यादौ यथा कृतिसाध्यत्वं बलवदनिष्टाननुबन्धित्वञ्च न लिङर्थस्तथेष्टसाधनत्वमपि विध्यर्थो न भवति। तस्यापि चिकीर्षयाऽन्यथासिद्धत्वात्। अतो लिङ्घटितशब्दप्रयोगरूपा प्रेरणापरपर्याया प्रवर्तनैव विध्यर्थः। तया प्रवर्तनयेष्टसाधनत्वमनुमीयते, ततः प्रवृत्तिः। प्रवर्तनाया विध्यर्थत्वमित्युक्ते शाब्दीभावनायाः प्रत्ययार्थत्वमार्थीभावनाया धात्वर्थत्वमेवेति तदर्थः। तथा च नागेशमते प्रवर्तनाया एव विध्यर्थत्वाल्लिङश्शक्तित्रयकल्पनाप्रयुक्तं गौरवं, सप्तकार्यकारणभावादिकल्पनाप्रयुक्तं गौरवं वा नास्तीति लाघवमेव वर्तते। अतः प्रवर्तनैव विध्यर्थः। तस्या धात्वर्थे स्वविषयकज्ञानविशेषजन्यानुमितिजन्यस्वनिरूपितकारणतावच्छेदकीभूतसम्बन्धनाशकालीनाभावप्रतियोग्यभावप्रतियोगित्वसंसर्गेणान्वयः। स्पष्टञ्चेदम् अस्मद्गुरुचरणैर्वैयाकरणसिद्धान्तलघुमञ्जूषाया व्याख्याने *नागेशभावप्रकाशे*।

अत्रेदं किञ्चिद्विज्ञाप्यमस्ति—'व्याकरणशास्त्रे न्यायशास्त्रप्रभावः' इत्याकारके मदीये प्रकृतलघुशोधनिबन्धे व्याकरणशास्त्रे न्यायशास्त्रप्रभावः अस्ति वा न वा? यदि अस्ति चेत् तत्प्रभावो व्याकरणशास्त्रे कथम् अङ्कुरितः,

पल्लवितः, पुष्पित इति च मया सप्रमाणं सयुक्तिकं न्यरूपि। तत्सन्दर्भे स्थालीपुलाकन्यायेन मया चत्वारो विषयाः 'क, ख, ग, घ' इति वर्णक्रमानुसारं प्रत्यपादिषत। एवं व्याकरणन्यायशास्त्रयोर्मध्ये वैयाकरणानां नैयायिकानाञ्च बहुत्र मतभेदोऽस्ति। क्वचिदैकमत्यमस्ति। परन्तु शोधपत्रविस्तर भीत्या मया चतुर्षु स्थलेष्वेव व्याकरणशास्त्रे न्यायशास्त्र प्रभावः कथमस्ति इति प्रत्यपादि।

अत्रेदं मदीयं निवेदनम्—लोके सर्वाणि शास्त्राणि महत्त्वपूर्णानि, आर्षाणि च। तत्तच्छास्त्रप्रणेतारोऽपि देव-कल्पाः, परमप्रामाणिकाश्चैव भवन्ति ते सर्वे तत्त्वज्ञाः, लक्ष्यैकचक्षुष्काः, परमयोगिनश्च। ते तु तत्तच्छास्त्रमर्यादानुसारं तत्तच्छास्त्रसिद्धान्तसमन्वयाय प्रायतन्त। तत्रेदं शास्त्रं समीचीनमिदं शास्त्रमसमीचीनमिति निर्णयो लक्षणैकचक्षुष्कैरल्प-ज्ञैर्मादृशैः नैव कर्त्तव्यः। अस्माकं व्याकरणशास्त्रसिद्धान्तसमन्वये यत्र न्यायमतमननुकूलं तत्र तत्त्यज्यते। तावन्मात्रेण न्यायशास्त्रस्य महत्त्वं नैव नाशमेष्यति। तावता न्यायशास्त्रस्य जघन्यत्वं नैवापादनीयम्। अस्माकमेकस्मिन् शास्त्रे नैव रागो, नापि न्यायादिशास्त्रान्तरेषु द्वेषः। अपि च सर्वतन्त्रस्वतन्त्राः शास्त्ररत्नाकराः, पुम्भावसरस्वतीमूर्तयो महानुभावा देवताकल्पा जगदीश, रघुनाथ, गङ्गेशादयो महर्षिकल्पा नैयायिकाः क्व? व्याकरणे एकदेशे अधीती मूढमतिरल्पज्ञोऽहं क्व? तथापि पदार्थपरिशोधनमेव प्रधानं लक्ष्यमभिलषय्य स्वशास्त्रवासनया वैयाकरणभूमिकां धृत्वा अत्र प्रबन्धे मया न्यायमते पर्यनुयोगो व्यधायि। यत्र न्यायशास्त्रप्रक्रियां विना व्याकरणसिद्धान्ता व्याख्यातुं न शक्यन्ते तत्र न्याय शास्त्रसिद्धान्तानपि मूर्धन्यत्वेनाहं समर्थयाम्बभूव। मदीयमेतादृशं परिश्रमं महतां सर्वेषां पण्डितप्रकाण्डानां सन्निधौ निवेदयितुमेवाहमेतादृशं साहसमकरवम्। न तु नैयायिकमूर्धन्यानां महतां विषये दोषारोपणरूपमुद्देश्यं मदीयमस्ति। सदा पण्डितप्रवराणां सविधावहं विनीतो बद्धाञ्जलिश्च भवामि। **[इति]**

# शाब्दिकमतेऽपि व्यञ्जनाऽनिवार्या

□ सदानन्द झा

येनाधिगम्य समसंस्कृतशब्दभव्यसाहित्यदर्शनसुशास्त्रविचक्षणत्वम्।
स्वीयैः सुतैः सुतसुतैश्च स्वयं च चक्र आजीवनं सुरगवी-प्रचुरप्रसारः॥ १॥
तं श्रोत्रियान्वयसरोजसरोजबन्धुं सर्वोपकारकरुणाकुलचित्तसिन्धुम्।
**श्रीकृष्णमाधव**महं प्रवरं बुधानामेतन्निबन्धकुसुमेन समर्चयामि॥ २॥

हेयोपादेयनिश्चयश्शब्दाधीनः, सर्वस्यापि ज्ञानस्य शब्दानुविद्धत्वस्य भर्तृहरिणाऽभिहितत्वात्[१]। शब्देऽर्थबोध-कारकत्वस्य दर्शनेनान्यथानुपपत्त्या व्यापारः कल्प्यते, कारकमात्रस्य व्यापारवत्त्वनियमात्। स च शब्दतदर्थसम्बन्ध एव वृत्त्यादिपदपर्यायः। न च शब्दनिष्ठा बोधकत्वलक्षणाशक्तिरेव वृत्तिरिति वाच्यम्, तस्या अपि सिद्धेः सम्बन्धाधीनत्वात्। प्रमाणं हि वस्तु प्राप्य प्रकाशकारि। वस्तुसम्बन्धाभावे नहि तत्र प्रकाशकता सिद्ध्यति। यथा प्रदीपः स्वसम्बद्धाने-वार्थान् प्रकाशयति, नहि सति कुड्यादिव्यवधाने। एवं चक्षुराद्यपि। इत्थं सम्बन्धस्यैवार्थप्रकाशलक्षणकार्येणान्वयव्यतिरेक-नियमात्तस्यैव वृत्तित्वम्। सम्बन्ध एव प्रकाशकत्वादि शक्तिसाधकः। एतद् वैयाकरण*सिद्धान्तलघुमञ्जूषायां*[२] *परमलघु-मञ्जूषायां* भर्तृहरिवचने[३] च स्पष्टम्।

अतः शब्दप्रमाणस्यापि शब्द-शब्दार्थसम्बन्ध एव वृत्तिः। सैकैवाभिधालक्षणा शक्तिपर्याया सङ्केतितार्थविषया, लक्ष्य-व्यङ्ग्यविषये लक्षणा-व्यञ्जने नाङ्गीकार्ये, तदर्थयोरनुमानविषयत्वादिति व्यक्तिविवेककृत्[४]। वृत्तिरेकधैव शक्तिरिति मुकुलभट्टः[५], तन्मते लक्षणाया अपि शक्तेरेव प्रकारत्वात्।

लक्षणाऽपि वृत्तिरिति नैयायिकाः। एवं गुरुमतानुयायिनो वाक्यतत्त्वविदोऽपि। सा त्रिधा, अभिधालक्षणातिरिक्ताया वाक्यार्थविषयायास्तात्पर्यवृत्तेः स्वीकृतेरिति भट्टमतानुयायिनः[६]। सा चतुर्धा, व्यञ्जनाया अपि वृत्तित्वादिति ध्वनि-रस-वादिन आलङ्कारिकाः[७]। रसमात्रविषयाया रसनाख्याया अपि वृत्तित्वाद् वृत्तयः पञ्चधेति कतिचनाऽलङ्कारकाराः[८]। वृत्तिर्द्विधैव शक्तिर्व्यञ्जनेति वैयाकरणाः।

तत्राभिधा सङ्केतितार्थविषया। लक्षणा मुख्यार्थबाधतत्सम्बन्ध-रूढि-प्रयोजनान्यतरनिमित्ता मुख्यार्थेतरविषया। शब्दात्मकवाक्यवृत्ति वाक्यार्थविषयं तात्पर्यम्। वाच्य-लक्ष्यवाक्यार्थेतरार्थविषया व्यञ्जना। रसना च रसमात्रविषया।

तत्र शक्तेरभिधापरपर्यायाया व्यञ्जनायाश्चैव वृत्तित्वमिति वैयाकरणा आहुः, तन्मते लक्षणाया अप्रसिद्धाख्य-शक्तिविशेषे गतार्थत्वात् तात्पर्यस्य शाब्दबोधसहकारिकारणत्वात् रसनायाः साध्यस्य व्यञ्जनयैव सिद्धत्वादालङ्कारिकैरेव वरिष्ठैरस्वीकृतत्वाच्च। एवं वृत्तिविभागविषये विवादे वर्तमाने व्यञ्जनायाः स्वीकृतौ न वर्तते विप्रतिपत्तिलेशोऽपि शाब्दिक-साहित्यिकयोः।

तत्र का व्यञ्जनेति जिज्ञासायामाह नागेशभट्टः—'मुख्यार्थबाधनिरपेक्षबोधजनको मुख्यार्थसम्बन्धासम्बन्ध-साधारणः प्रसिद्धाप्रसिद्धार्थविषयो वक्त्रादिवैशिष्ट्यप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना'[९]। अत्र शक्तिलक्षणयोरिव साक्षात्सम्बन्धेन शब्दार्थनिष्ठत्वं विहाय सहृदयनिष्ठधर्मविशेषरूपसंस्कारविशेषत्वस्य प्रतिपादनाद् व्यञ्जनायाः सहृदय-हृदयवेद्यत्वनिवेदनद्वारेण तस्याः किमपि चमत्कारचुञ्चुत्वमावेदितं भवतीति *परमलघुमञ्जूषाया वंशीटीकाया* स्पष्टम्[१०]। व्यञ्जनायाश्चमत्कारित्वं ध्वनिकृताऽप्यवादि। स्वं स्वमर्थं बोधयित्वा विरतासु तिसृषु वृत्तिष्वभिधालक्षणातात्पर्या-ख्यासु यया तदतिरिक्तोऽर्थो बोध्यते सा वृत्तिर्व्यञ्जनेति वदन्ति स्म आलङ्कारिकाः। तत्रैषां मते व्यञ्जनायाः स्वीकार आवश्यकः, तन्मते वस्त्वलङ्कार-रस-स्वरूपाणां व्यङ्ग्यानां तन्मात्रविषयत्वात्। तथा हि—

**दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद् गृहे दास्यसि**
**प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।**
**एकाकिन्यपि यामि तद्द्रुतमितः स्रोतस्तमालाकुलं**
**नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदानलग्रन्थयः॥**[१२]

इत्यत्र प्रतीयमानं परपुरुष सम्भोगस्य तत्रत्यदन्तक्षतादीनां च नलग्रन्थिलेखनेन गोपनात्मकं वस्तु,—

**प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थरवेदं विदध्या-**
**न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि**
**सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयातः**
**त्वय्यायाते विकल्पान् दधत इवाभाति कम्पः पयोधेः**[१३]**॥**

इति प्रकृतश्लोके भवान् हरिः इति रूपकालङ्कारः,—

**दुर्वारा मदनेषवो दिशि दिशि व्याजृम्भते माधवो**
**हृद्युन्मादकराः शशाङ्करुचयश्चेतोहराः कोकिलाः।**
**उतुङ्गस्तनभारदुर्धरमिदं प्रत्यग्रमन्यद्वयः**
**सोढव्याः सखि! साम्प्रतं कथममी पञ्चाग्नयो दुःसहाः**[१४]**॥**

इत्यत्र विप्रलम्भशृङ्गारो रसश्चेमा व्यञ्जनामात्रविषयाः। नात्राभिधा, समयाभावात्। न लक्षणा, मुख्यार्थबाधादिहेतु सद्भावाभावात्। किञ्च व्यञ्जना क्वचिल्लक्षणाया अपि मूलम्। गङ्गायां घोष इत्यत्र व्यङ्ग्यस्य प्रयोजनस्याभावे हेतोरसत्त्वेन तस्या अप्रवृत्तेः। नापि तात्पर्यम्, तस्य सङ्केतितानां पदार्थानामन्वयस्य बोध एवोपक्षीणत्वात् 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति सिद्धान्तात्। न च 'यत्परः शब्दः स शब्दार्थः'[१५] इति नियमेन प्रोक्तव्यङ्ग्यानां तात्पर्यवृत्तिवेद्यत्वम्, उक्तनियमस्य सङ्केतितमात्रेऽदग्धदहनन्यायेन प्रमाणान्तरानधिगत एवार्थेऽस्य प्रवृत्तेः। नहि व्यङ्ग्यं सङ्केतितम्।

नापि व्यङ्ग्येऽनुमितिप्रवृत्तिः, व्यञ्जकस्य लिङ्गत्वाभावात्। व्यञ्जक-व्यङ्ग्ययोर्व्याप्तिरभावेन कथमनुमितिः? यत्तु—

**भ्रम धार्मिक! विश्वस्तः स शुनकोऽद्य मारितस्तेन।**
**गोदावरीकच्छकुञ्जवासिना दृप्तसिंहेन॥**

इत्यत्र कान्तानुरागेण राजाज्ञया वा सिंहवद्देशेऽपि भीरुभ्रमणसम्भवेन यत्र यत्र सिंहवत्त्वं तत्र तत्र भीरुभ्रमणायोग्यत्वमिति व्याप्तेरभावेन व्यभिचारित्वादनुमानासम्भवात् निरस्तं मम्मटाचार्येण स्वकीयग्रन्थे *काव्यप्रकाशे*।

इत्थमालङ्कारिकाणां मते व्यञ्जना व्यङ्ग्यबोधायानिवार्या। सा द्विधा शाब्दी चार्थी च। आद्या-द्विधा अभिधामूला लक्षणामूला च। तत्रापि प्रथमा यत्रानेकार्थस्य शब्दस्याभिधायां संयोगादिभिर्नियन्त्रितायां परोऽर्थो बोध्यते तत्र[१६]। यथा 'राजत्युमावल्लभः'[१८] इत्यत्रोमाया राज्ञ्या वल्लभे उपमा च तद्व्यञ्जनाविषयः। पण्डितराजमते नानार्थ स्थले नास्ति शाब्दी साऽभिधामूला व्यञ्जना, तत्राऽभिधयैवाप्रकृतार्थस्य बोधात्, उपमादीनामर्थापत्तिविषयत्वाच्च। अतो योगरूढिस्थले सा व्यञ्जना[१९]। यथा—

**अबलानां श्रियो हृत्वा वारिवाहैः सहानिशम्।**
**क्रीडन्ति चपला यत्र स कालः समुपागतः॥**

इत्यत्र चपलासु वेश्यात्वं व्यङ्ग्यं शाब्दव्यञ्जनाविषयः[२०]। नागेशस्त्विहापि शक्त्यैव व्यङ्ग्यबोधं मन्यत इति *रसगङ्गाधरगुरुमर्मप्रकाशे* स्पष्टम्[२१]।

लक्षणाफलं यया ज्ञायते सा लक्षणामूला। यथा 'गङ्गायां घोषः' इत्यत्र पावनत्वातिशयो लक्षणामूलया तया बोध्यते। आर्थी व्यञ्जना तत्र यत्र वक्त्रादिवैशिष्ट्येन व्यङ्ग्यबोधः। इयं व्यञ्जना निरर्थके सार्थके च शब्दे, अर्थे, अशब्दात्मके चेष्टादौ च वर्तते। अत इयं वृत्त्यन्तरापेक्षया व्यापिका, तासां हि शब्दार्थमात्रवृत्तित्वात्।

अथ प्रकृतं विचार्यते—

व्यञ्जना शाब्दिकैरपि स्वीकार्यावश्यम्। तन्मते हि स्फोट एव वृत्त्याश्रयः, तत एवार्थावगमात्। स्फोटात्मकः शब्दश्च ध्वनिभिरेव प्राकृतैर्व्यज्यत इति भर्तृहरिणाऽभ्यधायि[२२]। स्फोटस्यैवार्थबोधकत्वं *महाभाष्य प्रदीप उद्योते*ऽन्यत्र चाभिहितम्, न तु ध्वनेः तस्याशुविनाशित्वात्। तत्र ध्वनौ व्यञ्जनैव व्यापारः व्यापारान्तरस्य स्फोटाश्रितत्वेन तत्राभावात्। यदि नाङ्गीक्रियते व्यञ्जना, तदा वृत्त्याश्रयस्य शब्दस्य व्यक्तिरेव कथं स्यात्? इत्थं व्यञ्जना स्फोटरूपाश्रयसाधनेन शक्तेरपि निमित्तम्। किञ्च व्यञ्जनां विना निपातानां द्योतकत्वमपि शाब्दिकसम्मतं विरुद्ध्येत। स्पष्टमिदं *परमलघुमञ्जूषायाम्*।

अतो यथा निर्गुणा भगवती चितिरेव जगत्प्रपञ्चं व्यक्तीकृत्य तत्रापि स्वयं प्रविश्य प्रेरयत्यर्थजातं तथा व्यञ्जनाऽपि ध्वनिभिः स्फोटमभिव्यज्य तत्र स्थिताऽभिधाद्यविषयमर्थं बोधयति। एवं चेयं ब्रह्मकल्पा व्यञ्जना शाब्दिकमतेऽप्यनिवा*र्येति शम्*॥

## सन्दर्भ-संकेतः

१. न सोऽस्ति प्रत्ययो लोके यःशब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ वाक्यपदीये ब्रह्मकाण्डम्, का० १२३।

२. वैयाकरणसिद्धान्तमञ्जूषा, पृ० ५०, स्फोटनिरूपणे।

३. उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः॥ वाक्यपदीयम् ३।३।५।

४. अर्थोऽपि द्विविधो वाच्योऽनुमेयश्च। तत्र शब्दव्यापारवृत्तिविषयो वाच्यः, तत एव तदनुमिताद्वा लिङ्गभूतादर्थान्तरमनुमीयते सोऽनुमेयः। व्यक्तिविवेके १ उन्मेषे।

५. कः पुनर्मुख्यो लाक्षणिको वाऽभिधाव्यापार इत्याशङ्क्य विषयोपदर्शनद्वारेण मुख्यलाक्षणिकौ शब्दव्यापारावुपवर्णयितुमाह—
शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता।
अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते॥ अभिधावृत्तिमातृका, पृ० २।

६. तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।
तात्पर्यार्थं तदर्थं च वाक्यं तद्बोधकं परे॥ साहित्यदर्पणः २।२३।

७. विरतास्वभिधाद्यासु ययाऽर्थो बोध्यतेऽपरः।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च॥ तत्रैव।

८. रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः॥ तत्रैव ५।२९

९. परमलघुमञ्जूषायां व्यञ्जनानिरूपणे।

१०. तत्रैव वंशीटीकायाम्।

११. प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥ ध्वन्यालोकः १।४।

१२. शब्दव्यापारविचारः, पृ० १७।

१३. तत्रैव, पृ० १७।

१४. तत्रैव, पृ० १८।

१५. काव्यप्रकाशस्य पञ्चमोल्लासे।

१६. तत्रैव।

१७. अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।
एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया॥ साहित्यदर्पणः २।१७।

१८. तत्रैव द्वितीयपरिच्छेदे श्लोक सं० ११।

१९. योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते।
धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा॥ रसगंगाधरे द्वितीयानने।

२०. तत्रैव।

२१. तत्रैव गुरुमर्मप्रकाशे, पृ० ५३।

२२. स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते। वाक्यपदीयम् [ ? ]।

२३. 'येनोच्चारितेन सास्ना लाङ्गूलककुद खुरविषाणिनां सम्प्रत्ययो भवति स शब्दः' इति पस्पशाभाष्योपरि प्रदीप उद्योते च। [इति]

ज्योतिर्मार्त्तण्ड पं. विश्वेश्वरझाकृतं
सुधावर्षिणीव्याख्योपेतं

# वास्तविकचन्द्रशृङ्गोन्नतिसाधनम्

दिनकरं हि निधाय हृदि ब्रुवे रघुवरान्वयकारणमव्ययम्।
हिमकरस्य सिताङ्गुलसाधनं गणितगोलविदां विदुषां मुदे॥ १॥

**अथ सुधावर्षिणी टीका।**

यो नो विभुः स्वकृतकर्मबलेन तर्त्तुं संसारसागरमसावपि नाम यस्याः।
स्मृत्वैव तं तरति तामिह नौमि तारां **विश्वेश्वरो**ऽहमतिमन्दमतिर्विनीतः॥ १॥

मन्मानसक्षितिजजाड्यमदार्ज्जुनौ यः कट्यां मतावहनदागमरूपदाम्ना।
बध्वाऽनुशासनमुदूखलमेव वन्दे **दामोदरं** निजगुरुं तमशेषविज्ञम्॥ २॥

श्रीभास्करादिकृतगोलविचाररूपाकाशस्थदोषतमसो दमनेन योऽभूत्।
आह्लादको बुधचकोरगणस्य तस्मै भूयः **सुधाकरविदे** महते नमोऽस्तु॥ ३॥

क्वायं विधून्नतविषाणविचारसिन्धुः क्वाहञ्च मन्दमतिपङ्गुपदस्तथापि।
लब्ध्वोडुपं गुरुपदाब्जदयांशमात्रं तर्त्तुं कथञ्चिदपि दुस्तरमेनमीहे॥ ४॥

किं तया टीकया या मनोरञ्जिनी नैव तत्त्वार्थबोधे बुधानां भवेत्।
किं तया कान्तया या मनोरञ्जिनी नाञ्जसाऽनङ्गरङ्गे भवेत्कामिनाम्॥ ५॥

किञ्च या तर्जनी मध्यमत्वावृता सा स्फुटा तर्जनी विद्वरैर्नोच्यते।
यत्र मेघस्य लेशोऽपि संदृश्यते साभ्रदेहा कथं सा निरभ्रोच्यते॥ ६॥

सती हन्त **सौधाकरी भारतीयं** वृथा सुन्दराख्येन दोषाग्निदग्धा।
कृता, तां सजीवां सुहृष्टां करोतु मदीयाऽद्य टीका सुधावर्षिणीयम्॥ ७॥

चन्द्रविम्बोपरिष्ठं यद् वास्तवदृश्यवृत्तं तदन्तर्गतं दृगभिमुखं यच्चन्द्रविम्बखण्डं तदेव चन्द्रशब्देनात्र वस्तुतो ग्रहीतुं युज्यते, तत्रैव शृङ्गोत्पत्तेः। तत्र प्राचीनैः सर्वैरप्याचार्य्यैरशुद्धमेव चन्द्रं स्वीक्रित्य तदन्तर्गतयोरशुद्धयोरेव शृङ्गयोरेकतरस्योन्नतिः साधिता, तदपि साधनं न वास्तवम्। अतः पण्डितशिरोमणिः **श्रीसुधाकर**नामाचार्य्योऽयमुक्तान् सर्वान् शुद्धपथैवानेतुं बद्धपरिकरः सन् स्वाभिलषितपदार्थस्य वास्तवचन्द्रशृङ्गोन्नतिसाधनमित्यन्वर्थकमेव नामाकारि। अनीदृशाभिलषितस्वीकारे वास्तवशब्दस्यादावेवोपादानं नातिसार्थकं स्यादिति।

इह किल त्रिस्कन्धज्यौतिषशास्त्रात्मकाकाशस्थनानादोषात्मकतमोदमनेन विद्वज्जनमनश्चकोराह्लादने सुधाकरः श्रीसुधाकरनामाचार्य्यः सुधाकरशृङ्गसमुन्नतिसाधनं पूर्वाचार्य्यकृतमनेकदोषोपप्लवकवलितमालोक्य शुद्धपथोक्तशृङ्गो-

न्नतिसाधनं चिकीर्षुः सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् क्षपयन्ति दर्प्पणोदरनिहिता इव मन्दिरस्यान्त इत्यादि वराहसंहितावचनप्रामाण्यात्सिद्धान्तोक्तयुक्तिभिश्च चन्द्रशृङ्गोन्नतौ रवेरेव मुख्यकारणतां पश्यन् मूले सिक्ते सर्वशाखाः सुसिक्ता इतिन्यायेन रविनमनेन रविवंशप्रसूतस्य स्वेष्टदेवस्य रामचन्द्रस्यापि नमनं कृतमेव भविष्यतीति हृदि दधन् रविनमनात्मकमङ्गलमाचरन् प्रकृतार्थं द्रुतविलम्बितेन प्रतिजानीते **दिनकरमिति**।। दिनकरं दिनं करोतीति दिनकरस्तम्। एतेन स्वभारहितस्य प्रकाशकत्वमर्के द्योत्यते। हृदि निधाय धृत्वा हिमकरस्य हिमा एव कराः किरणानि यस्यासौ हिमकरस्तस्य। एतेन चन्द्रस्य स्वभारहितत्वमवगम्यते दिनकरहिमकरशब्दाभ्याञ्च स्वभारहितस्य चन्द्रस्य सूर्य्यकरप्रसङ्गेन सितता ततः शृङ्गयोरुत्पत्तिश्चेमौ द्योत्येते। सिताङ्गुलसाधनं शुक्लाङ्गुलसाधनं ब्रुवे वच्मि। किं विशिष्टं दिनकरम्। रघुवरान्वयकारणम्। रघूणां रघुकुलोद्भवानां नृपाणां मध्ये वरः साक्षादीश्वरावतारात्मकत्वेन श्रेष्ठो रघुवरः श्रीरामचन्द्रस्तस्यान्वयो वंशो रघुवरान्वयस्तस्य कारणं प्रधानबीजम् रघुवरान्वयकारणस्तम्। सूर्य्यादिव तद्वंशप्रवृत्तेः। एतेन स्वेष्टदेवस्य रामचन्द्रस्यापि ध्यानं फलितम्। अथ बीजात्मकपदार्थस्य भूमिसंयोगाद्युपाधिवशादङ्कुरोत्पत्त्यनन्तरं क्रमशो नाशदर्शनाद्बीजोऽवश्यंनाशवान् पदार्थ इति सिद्ध्यति। तेन रघुवरान्वयकारणात्मको रविर्नाशिवानिति शङ्कावारणाय पुनस्तं विशिनिष्टि। अव्ययम् विनाशरहितम्। एतेनास्येश्वरत्वं स्पष्टीकृतम्। सकललोकबीजस्येश्वरस्यैवाव्ययत्वात्। किन्निमित्ताय। गणितगोलविदां गणितगोलयोर्मध्ये वित्पण्डितो गणितगोलवित् तेषां विदुषां मुदे हर्षाय। गणितगोलविदामित्यनेनात्र प्रस्तुतविषये गणितगोलयोर्निरतिशयं कौशलं वर्त्तत इति ध्वनिः। अथात्र प्रकृत-शृङ्गोन्नतिसाधनस्याङ्गरूपशुक्लाङ्गुलसाधनस्यैवोपादानेन 'शुक्लाङ्गुलसाधनमीदृगेवास्ति यस्मिन् प्राचीनानां सर्वेषामाचार्य्याणां मतयः कुण्ठिता एवाभवन्। अतस्तमेव शुद्धपथा वदता मया शृङ्गोन्नतिसाधनमतिशुद्धमेव गदितं भविष्यती'त्येवमाचार्य्यस्यान्तरिकप्रौढतावगमः। अथ दिनकरमिति पदस्य रघुवरान्वयकारणमव्ययमिमे पदे विशेषणत्वेन सम्बन्धिनी तेनैतयोर्मध्ये पुरोवर्त्तिनो हिमकरस्य सिताङ्गुलसाधनमिति कर्म्मपदस्याधाराधेयभावेन सम्बन्धिनो ब्रुवे इति क्रियापदस्योपादानेन विधेयाविमर्शाख्यः काव्यदोषः। तेनैतद्दोषवारणाय 'रघुवरान्वयकारणमव्ययं दिनकरं हि निधाय हृदि ब्रुवे। हिमकरस्य सिताङ्गुलसाधनं गणितगोलविदां विदुषां मुदे' इत्येवं पाठः साधीयानिति मन्मतमित्यलं पल्लवितेन।। १।।

इदानीं तावद् ग्रहाणां दृश्यादृश्यभागव्यवस्थामाह—

**खस्थानां गोलबिम्बानां रूपमर्द्धाल्पमेव हि।**
**लोका विलोकयन्तीति स्पष्टं गोलविदां सदा।। २।।**

**खस्थानामिति**—खस्थानामाकाशस्थानां गोलबिम्बानां गोलात्मकविम्बानां रूपमाकारमर्द्धाल्पमेव। एवशब्दो विषयान्तरव्यवच्छेदकार्थस्तेन नार्द्धं नार्द्धाधिकश्चेति सिद्धम्। लोकाः प्राणिनः सदा सर्वदा। एतेन विम्बानां लोकानाञ्चोच्चावचस्थानस्थत्वमवगम्यते। विलोकयन्ति पश्यन्तीति गोलविदां गोलज्ञानां स्पष्टम्। गोलविदामित्य-नेनैतद्विषयस्य वासना गोलीयक्षेत्रावलम्बेन भवतीत्यवगम्यते। अत्र केचन टीकाकारा गोलविम्बानामिति दीर्घवृत्तपिण्डानामप्युपलक्षकमित्यूचुः, तदरम्यमिव प्रतिभाति। यतः उक्तानुक्तोभयोः पदार्थयोरुक्तलक्षणं सार्वदिकम-सार्वदिकेऽपि बहुकालिकं वा यदि भवेत्तदैवोक्तपदार्थोऽनुक्तस्योपलक्षकमिति विदुषां समीचीना रीतिः सर्वत्र दृश्यते। तत्र प्रस्तुते गोलबिम्बमुक्तपदार्थः। दीर्घवृत्तपिण्डमनुक्तपदार्थः। अर्द्धाल्परूपदर्शनमुक्तलक्षणम्, दीर्घवृत्तपिण्डस्यार्द्धा-ल्परूपदर्शनं सार्वदिकमेव वा बहुकालिकमेवेति कथमपि कयापि युक्त्या न केनापि वक्तुं शक्यते। कादाचित्कन्तु युक्त्या स्पष्टमेवेति। अथ च नव्येनैव वास्तवशुक्लाङ्गुलानयनतत्परेणानेनाचार्य्येण चन्द्रशुक्लाङ्गुलानयने एवं किल स्यातसकल-ग्रहाणामिति वक्ष्यमाणेनान्येषामपि शुक्लाङ्गुलानयने न कुत्रापि गोलविम्बेतरत्वोपपादकशब्दस्योल्लेखः कृतस्तेन

खस्थविम्बानां दीर्घवृत्तपिण्डात्मकत्वमस्तीति वेधविधिविद्भिर्नव्यैर्यदुच्यते तत् सूर्य्यादिसप्तग्रहाणां नास्त्येवेति प्रतिभाति। यद्भवतु। किंच सिद्धान्तग्रन्थे सर्वत्र वास्तवपक्षपोषकस्य पक्षपातरहितस्यास्याचार्य्यस्य कृतैतद्ग्रन्थावलोकनसिद्धसूर्य्यादिसप्तग्रहगोलविम्बात्मकत्वमेवास्माकं मतम्।

अथ प्रकृतमनुसरामः। दृष्टिस्थानाच्चन्द्रविम्बस्य याः स्पशरिखास्तासामन्तर्गतं दृगभिमुखं यद्विम्बखण्डं तद्दृश्यमन्यददृश्यम्, तत्र दृग्गमनाभावात्। एतद्दृश्यभागस्यार्धाल्पत्वे वासना। बहिःस्थबिन्दुतो गोलस्पर्शरेखाकरणप्रकारेण सर्वविदितेनादौ चन्द्रविम्बस्य दृष्टिस्थानात् स्पशरिखाः सकला विधाय स्पर्शविन्दुषु दृष्टिस्थाने च विम्बकेन्द्राद्गतैः सूत्रैर्यानि जात्यत्र्यस्राण्युत्पद्यन्ते तानि समानान्येव दृष्टिकर्णविम्बव्यासार्द्धयोः कर्णभुजयोः सर्वत्र साम्यात्। अतो विम्बकेन्द्रलग्नास्राणि सर्वत्र समानि स्युः। अथ स्पर्शबिन्दुभ्यो दृष्टिसूत्रे कृताभ्यो लम्बरेखाभ्यो विम्बकेन्द्रलग्नैकतमास्राणि यानि त्र्यस्राणि तान्यपि मिथः समानान्येव। अतः सर्वा लम्बरेखा दृष्टिकर्णमेकविन्दावेव छेत्स्यन्ति। तेन सर्वा लम्बरेखा यस्मिन्नेकभूतले स्युस्तत्स्पर्शबिन्दुषु यास्यत्येव। अतः स्पर्शविन्दुषु गतमुक्तभूतलच्छिन्नमार्गं वास्तवदृश्यवृत्ताभिधम्। उक्तभूतलस्य विम्बकेन्द्रे गमनाभावाद् दृश्यवृत्तस्य लघुवृत्तत्वं तेन च दृश्यविम्बखण्डस्यार्द्धाल्पत्वं स्पष्टमेवात उपपन्नम्।

अथ कतमद् दृष्टिसूत्रं विम्बकेन्द्रे यास्यति कानि च गोलस्पर्शकराणि स्युरित्यादिविचारः सिद्धान्तप्रपञ्चचतुराणामतिरोहित एव, तथापि संक्षेपात्किञ्चिद् ब्रुवे। दृष्टिस्थाने मिथः संलग्नं समयष्टित्रयं तथा स्थाप्यं यथा वर्द्धितानि तानि यष्टिरूपसूत्राणि गोलस्पर्शकराणि स्युः। यष्टचग्रवद्धरेखाभ्यः स्पर्शविन्दुत्रयवद्धरेखाभ्यश्च क्रमादाद्यान्यभिधेये त्र्यस्रे तदुपरिष्ठे वृत्ते चाद्यान्याभिधे। तत्रान्यवृत्तमेव वास्तवदृश्यवृत्तम्। अन्यथात्वे गोलपृष्ठस्थवृत्तयोः स्थानत्रये सम्पातरूपस्य महादोषस्यापत्तेः। अथ दृष्टिस्थानादाद्यवृत्तभूतले यो लम्बः स तद्वृत्तकेन्द्रगः स्यादेव यष्टिरेखाणां समत्वात्। तेन दृष्टिस्थानलग्नास्राणि तुल्यानि। अतः स लम्बो वर्द्धितः सन्नन्यवृत्तस्यापि केन्द्रगस्तद् वृत्तभूतले लम्बश्च गोलकेन्द्रगश्चापि स्यात् स्पशरिखात्रयाणां साम्यात्। अत आद्यान्यवृत्तभूतले समान्तरे। अतो दृश्यवृत्ताधारा दृष्टिस्थानशीर्षका गोलस्पशरिखारूपसकलसूचीकर्णवती या समासूची भविष्यति तस्याः सर्वे सूचीकर्णा आद्यवृत्तपरिधिच्छेदका एव स्युः। अन्यथा सरलभूतले वृत्तद्वयस्य स्थानत्रये सम्पातरूपो महादोषः। अतः सिद्धं यत् आद्यवृत्तपरिधिस्थसकलविन्दुषु दृष्टिस्थानाद् बद्धा एव रेखा वर्द्धिताः सत्यो गोलस्पर्शकराः स्युः। दृष्टिस्थानादाद्यवृत्तकेन्द्रगा च रेखा वर्द्धिता गोलकेन्द्रगा स्यादिति।

अथ प्रस्तुतश्लोके विम्बानां यदर्द्धाल्परूपदर्शनमुक्तं तस्यायमाशयः। अर्द्धाल्पं दृश्यविम्बखण्डं दृश्यवृत्तभूतले परिणतं सद् यदाकारं राजतमुद्रावदेव दृश्यं तदाकारं दृष्टया दृग्गोलपरिणतं दृश्यते दृष्टिशक्तिबलेन। किञ्च दृश्यविम्बखण्डस्य प्रान्तं किमाकारकमित्यनुक्तमपि सूत्रं विधुगोलकेन्द्रगमित्यनन्तरवक्ष्यमाणश्लोके दृश्यभागस्य केन्द्रविन्दुकथनादुक्तप्रान्तं वृत्तानुकारकमित्युक्तमेव जातम्। पूर्वापरवाक्य विलोकनेनैव तस्य फलितत्वादित्यलं विततेन॥ २॥

इदानीं दृश्यवृत्तस्य पृष्ठीयकेन्द्रमाह—

**सूत्रं विधुगोलकेन्द्रगं दृक्चिह्नाद् विधुपृष्ठलग्नमत्र।**
**केन्द्रश्च सुधीः प्रकल्पयेद् दृश्यस्यैव निजेन्दुभागकस्य॥ ३॥**

सूत्रमिति॥ दृक्चिह्नात् दृष्टिस्थानाद्विधुगोलकेन्द्रगं चन्द्रविम्बकेन्द्रगतं सूत्रं दृष्टिकर्ण इति यावत् यत्र विधुपृष्ठलग्नं चन्द्रपृष्ठे लग्नम्। अत्र किन्तु तत्र एव दृश्यस्य निजेन्दुभागकस्य दृश्यचन्द्रविम्बखण्डस्य केन्द्रं मध्यबिन्दुं सुधीः प्रकल्पयेत्। च शब्दोऽनुक्तसमुच्चयार्थस्तेन दृश्यविम्बखण्डस्य यदेव केन्द्रं तदेव दृश्यवृत्तस्यापीत्यनुक्तमपि फलितम्। दृश्यवृत्तस्य सत्यपि पृष्ठीयकेन्द्रद्वये यत्पृष्ठीयकेन्द्रं दृश्यभागस्यापि केन्द्रं भवेत्तदेव दृश्यवृत्तस्यापि पृष्ठीयकेन्द्रशब्देनास्मिन् ग्रन्थे जानीयादिति

प्रकल्पयेच्छब्देनाचार्य्यस्याशयोऽवगम्यते। अन्यथा लघुवृत्तस्य आसन्नकेन्द्रस्यैव केन्द्रसंज्ञात्रेत्याशयकल्पनया वक्ष्यमाण-शुक्लवृत्तकेन्द्रकल्पनावसरे दोषापत्तेः।

अथदृष्टिकर्णो यत्रेन्दुविम्बं भित्वा चन्द्रकेन्द्रगतोऽभूत्तत्कथं केन्द्रमित्यत्र वासना—दृश्यभागप्रान्तरूपस्य दृश्य-वृत्तस्य परिधिस्थविन्दुभ्यो दृष्टिकर्णोपरि कृतलम्बानां समत्वात्तल्लम्बरूपज्यारेखाणां चापा अपि समास्तेनोपपन्नं तद्विन्दोः केन्द्रत्वकथनमिति दिक्॥ ३॥

इदानीं शुक्लवृत्तस्य स्वरूपकथनपूर्वकं शुक्लवृत्तस्य केन्द्रमाह—

**लग्नं यत्र शशाङ्कसूर्य्यजनितं विम्बान्तरं सूत्रकं**
**पृष्ठे तत्र विधोर्विधेयममलं केन्द्रं बुधैर्विद्वरैः।**
**भागस्यैव विधोरिनांशुनिकरैर्जाज्वल्यमानस्य च**
**विम्बार्द्धादधिकस्य सर्वमिति यज्ज्ञात्वाऽग्रतश्चिन्तयेत्॥ ४॥**

लग्नमिति। शशाङ्कसूर्य्यजनितं चन्द्रसूर्य्योत्पन्नं विम्बान्तरं सूत्रकं चन्द्रसूर्य्ययोर्विम्बान्तरसूत्रमित्यर्थः। विधोश्चन्द्रस्य पृष्ठे यत्र लग्नं तत्रैनांशुनिकरैः सूर्य्यकिरणसमूहैर्जाज्वल्यमानस्य प्रकाशितस्य विम्बार्द्धाच्चन्द्रविम्बार्द्धादधिकस्य विधोर्भगस्य चन्द्रखण्डस्य सूर्य्यकिरणसंयोगेन शुक्लस्य चन्द्रविम्बार्द्धाधिकखण्डस्येत्यर्थः। अमलं वास्तवं केन्द्रं पृष्ठीयकेन्द्रं विद्वरैर्बुधैर्विधेयं ज्ञेयमिति यावत्। इति सर्वं यदुक्तं तत् तदिति शेषोऽध्याहार्य्यो यत्तदोर्नित्यसम्बन्धात्। ज्ञात्वा बुद्ध्वा मनस्याधायेत्यर्थः। अग्रतो वक्ष्यमाणं चिन्तयेत्पश्येदिति। अत्रापि शुक्लभागप्रान्तरूपस्य शुक्लवृत्तस्य यत्पृष्ठीयकेन्द्रं शुक्लभागस्यापि केन्द्रं भवेत्तदेव शुक्लवृत्तस्यापि पृष्ठीयकेन्द्रशब्देन ग्राह्यमितरपृष्ठीयकेन्द्रस्यासन्नत्वेऽपीति विधेयशब्दाशयः। अपि च दृश्यशुक्लवृत्तयोरुभयोरप्येकपथैव केन्द्रकथनमाचार्य्यस्योत्कृष्टतामेवावहतीति।

अथ शुक्लभागस्य विम्बार्द्धाधिकत्वे शुक्लभागस्थ विम्बान्तरसूत्रचन्द्रविम्बयोगविन्दोश्च शुक्लवृत्तकेन्द्रत्वे वासना—

तत्र तावच्चन्द्रसूर्य्यविम्बयोः क्रमस्पशरिखाः सर्वा अपि विम्बान्तरसूत्रं चन्द्रविम्बाभिमुखमेकविन्दावेव छेत्स्यन्तीति निर्णीयते।

चन्द्रसूर्य्यविम्बयोरुपरि विम्बान्तरसूत्रनिष्ठैकभूतलच्छेदनेन ये महद्वृत्ते तयोर्य्यैका क्रमस्पशरिखा सा विम्बान्तर-सूत्रमवश्यं चन्द्राभिमुखं च्छेत्स्यत्यर्कव्यासाच्चन्द्रव्यासस्याल्पत्वादित्येकभूतलस्थलघुमहद्वृत्तयोः क्रमस्पर्शरेखाकरणप्रकारेण रेखागणितज्ञानां स्फुटमेव। अथ सूर्य्यविम्बपृष्ठस्थस्पर्शविन्दुगार्कव्यासार्द्धविम्बान्तरसूत्राभ्यां जातकोणतुल्याः कोणाः सर्वतो विम्बान्तरसूत्रेण सहार्ककेन्द्रादेव विधाय तत्तत्कोणकर्त्तृकरेखाच्छिन्नार्कपृष्ठस्थविन्दुभ्यो विम्बान्तरसूत्रस्पशरिखा योगविन्दौ बद्धाः सर्वा रेखा विम्बयोः स्पर्शकरा एव। तत्र हेतुः। स्पर्श विन्दुतश्छिन्नविन्दुभ्यश्च विम्बान्तरसूत्रे कृता लम्बा एकविन्दावेव विम्बान्तरसूत्रं छेत्स्यन्ति तुल्याश्च भविष्यन्ति सूर्य्यकेन्द्रलग्नकोणानां सर्वत्र साम्यात्। अतो लम्बरेखासंशक्तच्छिन्नविन्दुलग्नौ कोणौ सर्वत्र समानौ। तौ च समकोणस्य खण्डरूपौ। अतस्ताः सर्वा बद्धरेखाः सूर्य्यविम्बस्पर्शकरा एव स्युः। अथ चन्द्र-केन्द्रात्प्रतिबद्धरेखोपरि ये ये लम्बास्ते ते समा एव। एतेषां लम्बरेखाणां सूर्य्यविम्बनिष्ठोक्तच्छिन्नविन्दुगार्कव्यासार्द्धैः सह समान्तरत्वात् तेषां साम्याच्च। अथ चैते लम्बा यतः समा अतश्चन्द्रव्यासार्द्धतुल्या अपि। लम्बरेखाणामेकतमस्याश्चन्द्र-व्यासार्द्धसमत्वात्। एतेन ता एव बद्धरेखाश्चन्द्रविम्बस्यापि स्पर्शकरा इति सिद्धम्। अतश्चन्द्रार्कविम्बयोः सर्वाः स्पशरिखा-श्चन्द्रदिशि विम्बान्तरसूत्रमेकविन्दावेव छेत्स्यन्तीत्युपपन्नम्। अथेन्दुविम्बस्थस्पर्शबिन्दुभ्यो विम्बान्तरसूत्रोपरि कृता लम्बाः स्पशरिखाजनितसूचीशीर्षाभिमुखमेवैकविन्दावेवं विम्बान्तरसूत्रे लगिष्यन्ति समाश्च भविष्यन्ति चन्द्रकेन्द्रस्थविम्बान्तर-सूत्रेन्दुव्यासार्द्धैर्जातकोणानां साम्यात्। एतेन लम्बरेखाभ्यो जातभूतलस्येन्दुकेन्द्रे समानाभावात्स्पर्शविन्दुषु बद्धमार्गस्य

शुक्लभागप्रान्तरूपस्य शुक्लवृत्ताभिधस्य लघुवृत्तत्वं विम्बान्तरसूत्रस्य लम्बरेखोत्पन्नभूतले लम्बत्वेन शुक्रभागान्तर्गत-विम्बान्तरसूत्रेन्दुपृष्ठयोगविन्दोः शुक्लवृत्तपृष्ठीयकेन्द्रत्वञ्च सूपपन्नम्।

अथ शुक्लभागस्य कतमांशेऽधिकशौक्ल्यमित्यपि प्रसङ्गागतं किञ्चिद् ब्रुवे। चन्द्रसूर्य्ययोर्विरुद्धस्पशरिखा या भविष्यन्ति तासामन्तर्गतं सूर्य्याभिमुखं यच्चन्द्रविम्बखण्डं तत्राधिकशौक्ल्यमितरत्राल्पमित्यस्य वासना—

सूर्य्यपृष्ठस्यैकविन्दोर्याश्चन्द्रविम्बस्पशरिखास्तदन्तर्गतेन्दुविम्बीयप्रतिबिन्दुषु सूर्य्यपृष्ठस्थस्य तदेकविन्दोस्तेजो गमिष्यतीत्येव वासनाबीजे मनसि निर्द्धारिते सति प्रस्तुतविषयः सूपपन्नो भवतीति दिक्॥४॥

इदानीं शुक्लवृत्तव्यासार्द्धानयनमाह—

**स्वशुक्लवृत्तस्य च विस्तृतेर्दलं चापश्च कार्य्यं किल योजनादिकम्।**
**रवीन्दुविम्बान्तरसूत्रमानतो रवीन्दुगोलोद्भवविस्तृतेस्तथा॥५॥**

**स्वशुक्लवृत्तस्येति।** स्वशुक्लवृत्तस्य वास्तवशुक्लवृत्तस्य विस्तृतेर्दलं व्यासार्द्धं चापं चापात्मकं चापात्मकव्यासार्द्ध-निष्ठकलादीत्यर्थः। योजनादिकं योजनात्मकञ्च। एतेन चापात्मकं यद्व्यासार्द्धं तन्निष्ठयोजनं रेखात्मकं यद्व्यासार्द्धं तन्निष्ठयोजनञ्चेत्यर्थः। कार्य्यं साध्यमिति यावत्। कथं साध्यमित्याह श्लोकोत्तरार्द्धेन। रवीन्दुविम्बान्तरसूत्रमानतश्चन्द्रा-र्कयोर्विम्बान्तरसूत्रेण तथा रवीन्दुगोलोद्भवविस्तृतेरर्कचन्द्रविम्बव्यासार्द्धाभ्याञ्चेति। एतेनोक्तपदार्थत्रयावलम्बेनैव तदानयनं कार्य्यमिति फलितम्।

तत्र तावद् विम्बान्तरसूत्रानयनम्—

भूगर्भकेन्द्रिके कस्मिन्नपि गोले परिणतयोश्चन्द्रार्कयोः प्रोतं सितवृत्ताभिधं वृत्तं चन्द्रगकदम्बप्रोतवृत्तञ्च कार्य्यम्। तदेन्दुशरस्पष्टभोगचिह्नान्तरसितवृत्तीयान्तरचापैर्जातजात्ये कोटिभुजयोर्ज्ञानात्कर्णज्ञानं चापजात्यमहिम्नैव स्फुटम्। तेन चन्द्रार्ककर्णाभ्यां जाताम्रं भूगर्भलग्नं सितवृत्तीयान्तरांशसमं ज्ञातम्। ततो रवीन्दुविम्बान्तरसूत्रे कृते रवीन्दु कर्णविम्बान्तर-सूत्रैर्जातत्र्यस्रे रवीन्दुकर्णयोस्तदुत्पन्नसितांशसमकोणस्य च ज्ञानाद्भूसम्मुखाम्रोद्भवेत्यादिना विम्बान्तरसूत्रज्ञानं सुबोधम्। अन्यथा वा विम्बान्तरसूत्रानयनम्—

**सितवृत्तभूतले क्षेत्रमिदम्**



अत्र क्षेत्रे ∠ अ° = सितवृत्तीयान्तरांशाः। अन्यत्सर्वं क्षेत्रदर्शनादेव स्पष्टम्।

$\frac{\text{र क} \times \text{ज्या अ}^\circ}{\text{त्रि}} = \text{भुजः}$, $\frac{\text{र क} \times \text{कोज्या अ}^\circ}{\text{त्रि}} = \text{वभू}$,

वभू-चक = चव, $\sqrt{(\text{चव})^{\text{२}} + \text{भुज}^{\text{२}}} = \text{विअ}^\circ\text{सू}$,

अथवा

$\frac{\text{च}^\circ \text{ क} \times \text{ज्या अ}^\circ}{\text{त्रि}} = \text{चल}$, $\frac{\text{च}^\circ \text{ क} \times \text{कोज्या अ}^\circ}{\text{त्रि}} = \text{मूल}$,

रक-मूल = लर, $\sqrt{(\text{लर})^{\text{२}} + (\text{चल})^{\text{२}}} = \text{विअ}^\circ\text{सू}$,

एतेन ग्रहार्कयोः स्पष्टवियोगजीवेतिकमलाकरोक्तमुपपद्यते। अथप्रकृतमनुसरामः।

**विम्बान्तरसूत्रनिष्ठैकभूतले क्षेत्रमिदम्**

अर = $\frac{\text{१}}{\text{२}}$ र व्या, चउ = $\frac{\text{१}}{\text{२}}$ च° व्या, $\frac{\text{१}}{\text{२}}$ र व्या - $\frac{\text{१}}{\text{२}}$ च° व्या = र इ = भुजः,

$\sqrt{\text{विअ}^\circ\text{सू}^{\text{२}} - \text{भुजाः}^{\text{२}}} = \text{कोटिः}$

अर, उच समान्तरे तेन ∠ चरअ = ∠ लचउ, अतः

र च उ △ , ल च उ △ योः साजात्यादनुपातः।

$\frac{\text{कोटि} \times \frac{\text{१}}{\text{२}} \text{ च}^\circ \text{ व्या,}}{\text{विअ}^\circ\text{सू}} = \text{ल उ} = \text{योजनात्मक सरल व्यासः।}$

$\frac{\text{त्रि} \times \text{ल उ}}{\frac{\text{१}}{\text{२}} \text{ च}^\circ \text{ व्या,}}$ = ज्या ∠ लचउ = कलात्मकसरलव्यासः। अस्याश्चापं साशीतिशताच्छोध्यं तदाशेषं शुक्लवृत्त-व्यासार्द्धं चापीयं कलात्मकम्। एतन्निष्ठयोजनानयनमेवम्—

$\frac{\text{च}^\circ \text{ विं परिधियोज} \times \text{साधित चापांश}}{\text{३६०}^\circ}$ = चापीय व्यासार्द्धं योजनात्मकम्। एतद्वासनावलोकनेन रवीन्दु-विम्बान्तरसूत्रमानतो रवीन्दुगोलोद्भवविस्तृतेस्तथेति स्फुटमुपपद्यते इति॥ ५॥

अथ वास्तवदृश्यवृत्तव्यासार्द्धानयनमतिदिशति—

**स्वदृश्यवृत्तस्य च विस्तृतेर्दलं चन्द्रस्य गोले किल योजनादिकम्।**
**तदीयचापश्च विधेयमुक्तिभिः सिद्धान्तजाभिश्च विशेषयुक्तिभिः ॥ ६ ॥**

**स्वदृश्यवृत्तस्येति।** चन्द्रस्य गोले चन्द्रविम्बे स्वदृश्यवृत्तस्य वास्तवदृश्यवृत्तस्य च विस्तृतेर्दलं व्यासार्द्धं योजनादिकं योजनात्मकं सरलरेखात्मकव्यासार्द्धनिष्ठयोजनमित्यर्थः। तदीयचापश्च सरलरेखात्मकव्यासार्द्धतुल्यज्यारेखाया यच्चापं तदपि। तस्यैव चापस्य दृश्यवृत्तस्य लघुवृत्तत्वेन चापात्मकव्यासार्द्धत्वात्। शुक्लवृत्ते तु चापो नभार्द्धांशस्यैव चापात्मक व्यासार्द्धत्वं भवति नात्र तथेत्याशयेनैव तदीयशब्दोपादानम्। विधेयं साध्यम्। कथं साध्यमत्राह। सिद्धान्तजाभिः सिद्धान्तोत्पन्नाभिः सिद्धान्तग्रन्थोक्ताभिरिति यावत्। विशेषयुक्तिभिर्विशेषाः शुद्धा युक्तयो वासना यस्यां सा विशेषयुक्तिस्ताभिः। उक्तिभी रीतिभिरिति यावत् इति व्याख्या।

तत्र तावद् बिम्बीयनतांशानयनम्—

भूगर्भकैन्द्रिके कस्मिन्नपि गोले परिणतचन्द्रोपरि कदम्बप्रोतं लग्नप्रोतश्च वृत्तं विधाय दृक्क्षेपवृत्तं कार्य्यम्। ततः कदम्बलग्नोभयनिष्ठकोणकं यच्चापजात्यद्वयं भविष्यति तत्र

$$\frac{\text{ज्या वित्रिभग्रहान्तर} \times \text{कोज्या शर}}{\text{त्रि}} = \text{कोज्या लग्न विम्बान्तरचापः।}$$

एतच्चापोना नवतिर्लग्नविम्बान्तरचापम्। ततः

$$\frac{\text{ज्या श} \times \text{त्रि}}{\text{ज्या लवि}^\circ\text{अ}^\circ} = \text{ज्या लग्न प्रो. क्रा}^\circ \text{ वृत्तयोः परमान्तरम्।}$$

एतच्चापदृक्क्षेपचापयोः संस्काराद् दृक्क्षेपवृत्तीयं खमध्याल्लग्नप्रोतवृत्तं यावच्चापभ्। अथ विम्बोपरि दृग्वृत्ते कृते दृग्वृत्तदृक्क्षेपलग्नप्रोतवृत्तैरुत्पन्नचापजात्ये कोटिभुजयोर्ज्ञानात्कर्णोऽपि ज्ञातः स एव विम्बीयनतांशः। एतदूना नवति र्विम्बीयोन्नतांशः। एतयोर्ज्ये.ग्रहशङ्कुदृग्ज्ये त्रिज्यागोलीये। एते कर्णगोले परिणाम्येते।

$$\frac{\text{एते साधिते} \times \text{च}^\circ\text{ क}}{\text{त्रि}} = \text{विम्बकैन्द्रिके एते।}$$

ततः

$$\sqrt{[\text{विंश}^\circ - (\tfrac{1}{2}\text{ भूद्या} + \text{दृ उ})]^2 + \text{विं दृग्ज्या}^2} = \text{दृष्टि सूत्रम्।}$$

अथ दृष्टिसूत्रचन्द्रबिम्बव्यासार्द्धस्पर्शरेखाभिर्जातं बृहज्जात्यं दृष्टिसूत्रोपरि स्पर्शबिन्दुतो लम्बकरणेन विम्बकेन्द्रलग्नास्रकं यल्लघुजात्यश्च एतयोः साजात्यात्

$$\frac{\text{सारे} \times \tfrac{1}{2}\text{ त्रं व्या}}{\text{दृसू}} = \tfrac{1}{2}\text{ दृश्यष्ट व्या० योजनात्मकम्। तत उक्तलघुक्षेत्रे}$$

$$\frac{\text{त्रि} \times \tfrac{1}{2}\text{ दृ वृ व्या}}{\tfrac{1}{2}\text{ च}^\circ\text{ व्या}} = \text{ज्या केन्द्रलग्नास्र} = \text{कलात्मक सरल व्यासार्द्धम्।}$$

अस्या जीवाया यच्चापं तत्कलात्मकं चापीयव्यासार्द्धम्। ततः

$$\frac{\text{च° वि° पयो} \times \text{६ चा पी व्या}}{\text{३६०°}} = \text{कलात्म चापी व्यासार्द्धनिष्ठयोजनम्।}$$

एवमाचार्य्योक्तानुसारमेव सर्वमानीतमित्यलम्॥ ६॥

अथविशेषसंज्ञामाह—

**दृश्यवृत्तस्य विष्कम्भखण्डस्य यच्चापमानं भुजस्तस्य कोटिर्भवेत्।**
**एवमेवात्र विष्कम्भखण्डस्य यच्छुक्लवृत्तस्य कोटिर्भवेत्सोऽपमः॥ ७॥**

**दृश्यवृत्तस्येति**। दृश्यवृत्तस्य वास्तवदृश्यवृत्तस्य यद् व्यासार्द्धं सरलात्मकं तस्य विष्कम्भखण्डस्य व्यासार्द्धस्य यच्चापमानं दृश्यवृत्तस्य चापीयव्यासार्द्धमित्यर्थः। तस्य कोटिर्भुजो भुजसंज्ञको भवेत्। दृश्यवृत्तस्य यच्चापीयव्यासार्द्धं तस्य कोटिर्भुजसंज्ञ इत्यर्थः। उद्देश्यविधेयभावेनात्र भिन्नलिङ्गत्वम्। एवमेवात्र शुक्लवृत्तस्येति वास्तवस्य यच्चापीयव्यासार्द्धं तस्य कोटिर्या सोऽपमः क्रान्तिसंज्ञः। अत्राप्युद्देश्यविधेयभावः। शुक्लवृत्तस्य व्यासार्द्ध एव नवत्यंशं विशोध्य शेषस्य क्रान्तिसंज्ञा। एतद्व्यासार्द्धस्य नवत्यधिकत्वात्। वक्ष्यमाणस्थलेऽनयोः प्रयोजनत्वेनात्र तन्नामकरणमिति॥ ७॥

इदानीं शृङ्गोन्नतावितिकर्त्तव्यतामाह—

**आदौ हि तद्युक्तिवशाद्बुधेन्द्रैः सितांशसंसाधनमेव कार्य्यम्।**
**विम्बान्तरात्तत्वविवेकमध्ये या युक्तिरुक्ता कमलाकरेण॥ ८॥**

**आदाविति॥** कमलाकरेण तत्त्वविवेके **सिद्धान्ततत्वविवेके** विम्बान्तराच्चन्द्रार्कयोर्विम्बान्तरसूत्रवशात् सितांशसाधने या युक्तिर्वासनोक्ताभिहिताः तद्युक्तिवशाद्बुधेन्द्रैरादौ प्रथमं सितांशसंसाधनमेव कार्य्यम्। अथ सितांशसाधने यान्युपकरणानि सन्ति तेषामेकतमस्य विम्बान्तरसूत्रस्यैवोपादानेन तथा सितांशसंसाधनमेव कार्य्यमित्यत्र एव शब्दोपादानेन चाचार्य्यस्य कोऽभिप्रायो निस्सरति तदर्थमुच्यते। सर्वैः प्राचीनाचार्य्यैः कमलाकरान्तैर्नवीनैश्च भूगर्भमेव दृष्टिस्थानं मत्वा चन्द्रविम्बार्द्धमितं दृश्यभागं शुक्लभागञ्च स्वीकृत्य सितांशानयनं कृतमिति तेषां ग्रन्थावलोकनादेव स्पष्टम्। अथ विम्बान्तरसूत्र रविदृक्कर्णचन्द्रदृक्कर्णैर्जातत्र्यस्रभूतलच्छेदनेन चन्द्रपृष्ठे यन्महद्वृत्तं तस्मिन्नेव दृश्यशुक्लवृत्तयोः परमान्तरम्। तदेव परमान्तरं सितांशसंज्ञ इतिवक्ष्यमाणस्वदृश्यत्रिजीवेतिश्लोकवासनायां स्पष्टीभविष्यति। अतः प्राचीनस्वीक्रितयोरवास्तवदृश्यशुक्लवृत्तयोः परमान्तरमवास्तवसितांशाः। वास्तवयोस्तयोश्च परमान्तरं वास्तवसितांशाः। तत्र दृष्टिस्थानवशेन जातयोरवास्तवदृश्यशुक्लवृत्तयोर्यत्परमान्तरं तेऽप्यवास्तवसितांशा एव। एतस्यैवालम्बेन वास्तवसितांशज्ञानं भवतीति वक्ष्यमाणं तावन्मनसि धार्य्यम्। अतो दृष्टिस्थानजनितावास्तवसितांशज्ञानमावश्यकम्। तज्ज्ञाने च या रीतिर्भवति सा भूगर्भरूपदृष्टिस्थानजनितकमलाकरोक्ता वास्तवसितांशानयनरीत्या सर्वथा साम्यमावहतीति झटित्येव तदानयनरीतिदर्शनेन स्फुटीभविष्यति। अत एव आदौ हि तद्युक्तिवशादित्यादि वदत्याचार्य्यः। अत्र **कमलाकरोक्ता** एव सितांशाः साध्या इत्येवाचार्य्याशय इति यैर्मन्यन्ते ते भ्रान्ता एव। कमलाकरोक्तसितांशस्य भूगर्भरूपदृष्टिस्थानजनितत्वेनास्मिन् ग्रन्थे प्रयोजनाभावात्। अपि च कमलाकरोक्ताः सितांशाः साध्या इति सरलमार्गं विहाय तद्युक्तिवशादिति वक्रमार्गकथने वैयर्थ्यापत्तिरेव।

[ अपूर्णा एवेयं सुधावर्षिणी उपलब्धा। ]

# वैखानसागमीयं परमं तत्त्वम्

□ राघव प्रसाद चौधरी

आगच्छन्ति बुद्धिमारोहन्ति यस्मात् अभ्युदयनिःश्रेयसोपायाः सः आगमः इति सामान्यव्युत्पत्त्या आगमपदेन परम्परातः आगताचारादिविशेषप्रतिपादकं शास्त्रं विवक्षितं वर्तते इति भाषाशास्त्रतत्त्वमर्मज्ञमूर्धन्यः भगवान् भर्तृहरिः[१]। भारतीयसमाजे वैष्णवशैवशाक्तादयः अनेके आगमसम्प्रदायाः प्रसिद्धाः व्यवहारे अनुसृताश्च सन्ति। तत्र तावद्वैष्णवागमस्य **वैखानसपाञ्चरात्रौ** इति द्वौ सम्प्रदायौ लब्धप्रसारौ। एतयोः वैष्णवसम्प्रदाययोः सिद्धान्ताचारादिप्रतिपादकाः मुद्रिताः अमुद्रिताश्च नैके ग्रन्थाः सन्त्युपलब्धाः[२]।

एषु आगमग्रन्थेषु ज्ञानयोगक्रियाचर्येति चत्वारः विषयाः वर्णिताः। यद्यप्येते विभागाः सर्वेष्वपि वैष्णवागमग्रन्थेषु स्पष्टतया न सन्ति निर्दिष्टाः, तथापि पाञ्चरात्रागमस्य *पाद्मसंहितायाः*[३] आन्तरिकं विभागम् अवलोक्य तत्रस्थान् विषयांश्च विमृश्य वैष्णवागमस्थानां विषयाणामुपर्युक्तक्रमेण चतुर्धा विभागः सर्वथा युक्त एव। तत्र तावद्वासुदेवाद्याराध्यदेवानां स्वरूपादिकं, तद्भेदाः, सृष्टिप्रक्रिया, परमतत्त्वादिकञ्चेति दार्शनिकविषयाः ज्ञानपादान्तर्भूताः। योगपादे तावत् प्राधान्येनाष्टाङ्गयोगविषयाः वर्णिताः। क्रियापादान्तर्गतवर्णितेषु विषयेषु समूर्तदेवाराधनार्थं देवालयमूर्त्यादिनिर्माणापेक्षिताः आवश्यकाः प्रायः सर्वे विषयाः उपस्थापिताः। पादेऽस्मिन् देवालयकल्पनाय मानसिकसङ्कल्पादारभ्य भूपरीक्षण-कर्षण-शिलादार्वादिसङ्ग्रहण-आलयमूर्तिकल्पनादयः सर्वेऽपि क्रियात्मकाः विषयाः सविस्तृतं वर्णिताः। चर्यापादे तु आलये प्रतिष्ठापितस्य आराध्यस्य देवस्य नैत्यिकनैमित्तिकाराधनपरकाः विषयाः अतिविस्तृततया पल्लविताः। अत्रास्मिन् निबन्धे वैखानसागमस्य कांश्चन ग्रन्थान् अवलम्ब्य तत्रस्थं परमं तत्त्वं ( ब्रह्मतत्त्वम् ) वर्णयितुं विवेचयितुं च प्रयतिष्यते।

वैखानसागमे विष्णुः ( वासुदेवः ) एव परमतत्त्वरूपेण स्वीकृतः। वैखानसागमस्य अन्यतमः ग्रन्थः *विमानार्चन-कल्पः* विष्णुं ( वासुदेवम् ) अर्थात् परमात्मानं ब्रह्म सर्वाधारं सनातनम् अप्रमेयम् अचिन्त्यं निर्गुणं निष्कलं च वर्णयति। विमानार्चनकल्पः परमात्मानं विष्णुं वासुदेवं वा तिले तैलम्, पुष्पे गन्धं, फले रसं, काष्ठे अग्निम् इव सर्वव्यापकरूपम् अङ्गीकरोति[४]। अस्मिन् एव ग्रन्थे एकत्र सकलं शाश्वतम् अशरीरमपि परमात्मानं सर्वभूतेषु अवस्थितम्, अतिसूक्ष्मम्, अनिर्देश्यम्, अतिमात्रम्, अतीन्द्रियम्, अव्यक्तं, प्रकृतिमूलम्, अनादिनिधनम्, अखिलजगतः सृष्टिस्थितिलयकारणम्, अप्रमेयं, सत्तामात्रं च मन्यते[५] आगमिकाचार्यः।

अत्रागमे परमात्मनः मूर्तममूर्तं चेति तत्त्वद्वयं स्वीकृतम्। सर्वेष्वपि भूतेषु क्षरम् अक्षरञ्चेति तत्त्वद्वयमवस्थितम्। तत्र तावत् अक्षरतत्त्वं नाम ब्रह्म, क्षरतत्त्वं तु सम्पूर्णं जगत्[६] इत्युच्यते। एतयोः द्वयोरपि तत्त्वयोः वर्णनं भगवतः आराधनवर्णनक्रमे दृष्टिपथमायाति। यथा सर्वत्रावस्थितः वह्निः अरण्यां मथनानन्तरमेवोत्पद्यते तथैव सर्वत्र जगति व्याप्तः विष्णुः ( ब्रह्म ) ध्यानरूपेण मथनेन कुम्भे भक्तानां हृदये वा सन्निहितः भवति[७]। खिलाधिकारे परमात्मा ( ब्रह्म ) निःसङ्गः चित्स्वभावः अयोनिजः निरौपम्यः निगूढात्मा काष्ठे अग्निरिवावस्थितः एकः व्यापी समशुद्धः निगुर्णः प्रकृतेः परः जन्मवृद्ध्यादिरहितः आत्मस्वरूपः सर्वगः अव्ययरूपश्च उक्तः[८]। एतत् सर्वं ब्रह्मणः अमूर्तं तत्त्वं प्रतिपादितम्।

क्रियाधिकारानुसारं हृदि पद्मकोशप्रतीकाशविश्वायतने अग्निशिखामध्ये ध्यानेन तस्य परमात्मनः सूक्ष्मम् अव्ययरूपं द्रष्टुं शक्यम्। स परमात्मा निवातदीर्घार्चिरिव आकाशे विद्युल्लेखेव विराजते। स एव ईश्वरात्मनो ज्योतिः अक्षरः पुरुषश्चोक्तः। एतच्च शुद्धात्मकं ब्रह्म अक्षरम् इत्युच्यते[९]। अयमेव विष्णुः (ब्रह्म) निर्मलः निर्गुणः नित्यः अक्षरः सर्वकारणभूतः निष्कलः सकलः तेजोभासुरभासितश्चास्ति[१०]।

*आनन्दसंहिता*नुसारं हरिः अर्थात् नारायणः देवानां परमदेवः पतिः विश्वात्मेश्वरः शाश्वतशिवः अच्युतः परमब्रह्म परमात्मा परः अव्ययश्च वर्तते। स एक एव पुरुषः शिवः इन्द्रः अक्षरः परमस्वराट् चेति। अयमणोरणीयान् महतो महीयान् च गुहास्थितः कथितः। देवः हरिः जगत्स्रष्टा अखिलपाता सर्वहर्ता त्रिगुणाश्रयः नित्यः निर्गुणः अतीन्द्रियश्चेति। अयं विष्णुः वेदमूर्तिः लोकमूर्तिः भूतमूर्तिरिति त्रयीमयः तेजोमूर्तिः पुण्यमूर्तिः यजुर्मूर्तिः चिन्मयः आनन्दमूर्तिः सन्मूर्तिः अमूर्तिमान् विश्वचक्षुः विश्वमुखः विश्वात्मा विश्ववेत्ता विश्वगर्भः अजरः अमरः विश्वेन्द्रियगुणाभासः विश्वेन्द्रियविवर्जितश्च वर्णितः। तस्मिन् सर्वम् तस्मात् सर्वं वर्तते। सः सर्वमयः सर्वगश्चास्ति। अयमेव परमधाम, परमज्योतिः गुणातीतः गुहाशयः ज्ञानज्ञेयज्ञातृहीनः विज्ञानबहुलः अक्षरः जाग्रत्स्वप्नसुषुप्त्यादौ तुरीयावस्थायाम् अवस्थितः अन्तःप्रज्ञः बहिःप्रज्ञः प्रज्ञाप्रज्ञश्चोक्तः। वैश्वानराभासरूपं ब्रह्म हृदयाकाशगोचरम् हृदयपद्माग्निशिखामध्ये ज्वलनयुक्तकनकप्रभासमानम् निवातपरिसरे दीपार्चिरिव आकाशे विद्युल्लेखेव ज्ञानज्ञेयसुसंवेद्यं चोक्तम्। पुनः तद्ब्रह्म सत्यमेकाक्षरं सदसदुपकारकम् ओङ्कारमयं नित्यमनन्तं परं निष्कलं च निर्दिष्टम्। एतच्च अनन्तानन्तचैतन्यतेजःस्वरूपम् अरूपमिव तिष्ठति। ब्रह्म क्षीरे सर्पिरिव अरणीमध्ये अग्निरिव जगति तिष्ठति। ज्ञानदीपप्रकाशकं सर्वेषामाधारभूतं ब्रह्म पुराणपुरुषोत्तम-नाम्नाभिहितम्। अयं विष्णुः सर्वेश्वरः श्रीमान् सर्वकारणभूतः कथितः[११]।

प्रायः सर्वेष्वपि वैखानसागमग्रन्थेषु वैष्णवानां परमाराध्यः परमतत्त्वस्वरूपः नारायणः विष्णुः उपरिनिर्दिष्टैः नामरूपादिभिः अस्मिन्नेव रूपे वर्णितः दृष्टिपथमायाति। संक्षेपत इदं वक्तुं युक्तं यत् अत्रत्यं वासुदेवाख्यं परमं तत्त्व-मौपनिषदिकब्रह्मतत्त्वसमानं[१२] प्रतिभाति। विश्वतश्चक्षुः विश्वतो मुखमित्यादिरूपेण वर्णितं वैखानसागमीयं परमं तत्त्वं स्पष्टरूपेण पुरुषसूक्तादिवैदिकसूक्तेषु निर्दिष्टं परमं तत्त्वम्[१३] इव प्रतिभाति।

*विमानार्चनकल्पः* मूर्तममूर्तञ्चेति द्विविधं ब्रह्मतत्त्वं निरूप्य यागकर्मणि अग्नौ हवनात्मकम् अर्चनम् अमूर्तार्चनं, प्रतिमाराधनक्रमे मूर्तौ सम्पादितमर्चनं समूर्तार्चनम् इति निर्दिशति। सामान्यतः एतदेव अन्यत्र समूर्तामूर्तब्रह्मस्वरूपम्[१४]। वैखानसागमग्रन्थेष्वनेकत्र अन्यत्रापि वासुदेवात्मकस्य परमतत्त्वस्य मूर्तम् रूपं स्पष्टतया वर्णितम्। अग्रे एतस्य विषये विचारः विधास्यते।

*खिलाधिकारस्य* सप्तमोऽध्यायः भगवतः वासुदेवस्य प्रतिष्ठाविषयं वर्णयन् विमानार्चनकल्प इव अमूर्तं समूर्तं चेति ब्रह्मणः स्वरूपद्वयं निर्दिशति। तत्रोच्यते–यथा एकः विशुद्धः स्फटिकमणिः सोपाधिकः उपरागवशाद्विविधानि रूपाणि भजते तथैव सनातनः एकः विष्णुः प्रादुर्भावादिविविधैः रूपैः शतधा सहस्रधा अनेकधा वा रूपाणि स्वीकृत्य दृष्टिगोचरतामायाति। यथाग्निः इन्धनैः समृद्धः सम्यक् चकासते तथा सर्वगः विष्णुः ध्यानरूपेण इन्धनेन आकाशस्वरूपम् अन्यद्रूपं वा गृह्णाति। अर्थात् निर्गुण एव विष्णुः सगुणत्वेन कल्पितः[१५] भवति। ध्येयत्वसंकल्पपूर्वकं *विमानार्चनकल्पो*ऽपि परमं तत्त्वं ब्रह्म सगुणमुपवर्णयति[१६]। यथा भेदरहितः एक एव व्यापकः वायुः वेणुरन्ध्रभेदकारणवशात् षड्जादिरूपेण अनेकधा भिद्यते तद्वदेव तस्य एकस्य व्यापिनः ब्रह्मणः भेदः प्रतीयते। यथाकाशे शकुनीनां जले जलचराणां पादचिह्नं दृष्टिपथं नायाति तथैव स्थितमपि ब्रह्म सर्वैः न दृश्यते। केवलं तत्त्वज्ञानविदः एव तत्पश्यन्ति। यथा जनाः एकमेवाकाशं नीलपीताद्यनेकविधं मन्यन्ते तथैव भ्रान्तचित्ताः ब्रह्म अनेकविधं स्वीकुर्वन्ति वर्णयन्ति च। वस्तुतः अयमेव क्रमः सगुणस्य

साकारस्य नारायणस्य ब्रह्मणः ध्यानविषये अवधेयः स्वीकर्तव्यश्च। *खिलाधिकारम्*नुसारं ब्रह्मण एतत् सम्पूर्णं जगत् ओतप्रोतं वर्तते। तत एव सर्वं जगत् प्रवर्तते। तदेवैतत्सर्वं जगत् सम्पूर्णं जगच्च तदेवेति। इत्थं ब्रह्म चरात्मकजगद्रूपे मूर्तम् इति सर्वथा सिद्धम्। स च क्षराक्षररूपः विष्णुः ईश्वरः सम्पूर्णं जगत् पोषयति[१७]।

पूर्ण-पाद-अर्ध-त्रिपादेति हीनाधिकभावकारणात् नारायणः (परब्रह्म) पुरुष-सत्य-अच्युत-अनिरुद्ध इति नामभिश्चतुर्धा भिद्यते। यथा ब्राह्मणक्षत्रियवैश्यशूद्राः, भूर्भुवस्स्वर्महर्लोकसमाश्रिताः इष्टापूर्तिरूपयागचिह्नकल्पिताः सन्ति तथैव गुणचतुष्टयमाधृत्य पुरुषोऽपि चतुर्धा भिद्यते। एक एव अग्निः यथा आहवनीय-अन्वाहार्य-गार्हपत्य-आवसथ्येति चतुर्भिः कुण्डभेदैः भिन्नः उक्तः तथैव एकस्यैव पुरुषस्य पुरुष-सत्य-अच्युत-अनिरुद्ध इति चत्वारः भेदाः यथाक्रमं कान्ति-पुष्टि-सुख-इष्टप्रदायकाः। एते चत्त्वारः श्रौतप्रियाः श्रुतिग्राह्याः वैदिकानां कृते वरदायकाः ब्रह्मप्रियाः परब्रह्म-ब्रह्मण्यप्रियाः ब्रह्मण्याराधिताः परब्रह्मण्यप्राप्तये प्रशस्ताः उक्ताः[१८]।

*आनन्दसंहितम्*नुसारं यद्यपि स्थावरं जङ्गमं चेदं सम्पूर्णं जगत् विष्णुमयं तथापि अत्र जगतीतले तस्य विष्णोः अनेकानि रूपाणि दृष्टिपथमारोहन्ति। परमात्मनः तस्य विष्णोः तानि अर्चावताररूपाणि भक्तानां पापविनाशाय स्वीकृतानि[१९] सन्ति।

*खिलाधिकारे* हरिणा स्वीकृतैः आभूषणैरस्त्रैश्च सह विष्णोः स्वरूपध्यानप्रसङ्गेऽपि परमतत्त्वस्य नारायणस्य स्वरूपवर्णनं कृतमस्ति। तत्र तावत् कौस्तुभमणिः जगतः निर्लेपः अगुणः अमलः सुरूपः आत्मरूपः ध्यातव्यः। संस्थानवरः श्रीवत्सः प्रधानरूपः वर्णितः। विष्णोः गदा बुद्धितत्त्वस्वरूपा निर्दिष्टा। भूतादयः इन्द्रियादयश्च क्रमशः भगवतः शङ्खः शार्ङ्गश्चोक्तम्। अतित्वरितगतिशीलः अन्तरितः वायुः मनश्च विष्णोः करे स्थितं चक्रस्वरूपं ध्येयम्। सर्वभूतकारणरूपाणि पञ्चतत्त्वानि भगवतः पञ्चवर्णात्मिका वैजयन्ती माला ध्यातव्या। पञ्चज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च विष्णोः शरः उक्तः। भगवतः अतिनिर्मलः असिः विद्यामयं ज्ञानं स्वीकृतम्। रूपवर्जितं भगवतः भूषणसंस्थानम् अविद्याकर्मनाम्ना प्रसिद्धा माया मानवानां श्रेयसे उक्ता। कला काष्ठा निमेषः दिनम् ऋतुः आयनम् हायनम् च कालरूपस्य विष्णोरेव स्वरूपम्। भूर्भुवः स्वः महः जनः सत्यादयः लोकाश्च लोकमूर्तिधरस्य विष्णोः स्वरूपम्। देवमनुष्यपश्वादयः भूताः भगवतः भूतमूर्ति-धररूपा एव। ऋग्यजुस्सामाथर्वेतिः चतुर्वेदी इतिहासपुराणोपवेदाः वेदान्तः सर्वाणि वेदाङ्गानि मन्वाद्युक्तयः अशेषशास्त्राणि अनुवागादयः सर्वे काव्यालापाः अखिलगीतिकाश्च शब्दमूर्तिधरस्य भगवतः विष्णोः शरीररूपेण ध्येयाः विद्यन्ते। इत्थं परमतत्त्वभूतः नारायणः कालरूपः लोकमूर्तिधरः, शब्दमूर्तिधरादिरूपश्च वर्तते। अर्थात् सर्वेऽपि मूर्तामूर्तपदार्थाः जगति विद्यमानाः तस्य नारायणब्रह्मणः शरीररूपाः एव। एतादृशं मानसिकं भावं भावयन् गुरुः आत्मानं नारायणरूपमनुभवति[२०]। प्रकरणस्यास्यानुशीलनेन स्पष्टमायाति यत् विष्णोः अन्तरे एव सर्वाण्यपि तत्त्वानि समाहितानि सन्ति इति वैखान-सागमस्याभिप्रायः।

अनेनैतद्वक्तुं शक्यं यत् वैखानसागमे स्वीकृतं परमं तत्त्वं नारायणः अर्थात् विष्णुः मूलतः परमार्थतश्च अगुणः गुणरहित एवास्ति। सामान्यतः एतन्नारायणस्वरूपम् अद्वैतवेदान्तसम्प्रदाये स्वीकृतस्य ब्रह्मणः स्वरूपमिव निष्कलं निर्गुणं प्रतिभाति। एतदतिरिक्तम् उपर्युक्तक्रमेण सकलमपि स्वरूपमत्रागमे स्वीक्रियते परमात्मनो नारायणस्य। *खिलाधिकारे* परमतत्त्वस्य रूपाणां ध्यानप्रसङ्गे अविद्यामायारूपेण भगवतः अस्त्रभूषणसंस्थानानामुल्लेखमवलोक्य स्पष्टं प्रतिभाति यत् वैखानसागमाचार्यैः माया अविद्या चापि अङ्गीकृता वर्तते। परन्तु अत्रत्यमायाया अविद्यायाश्च स्पष्टं स्वरूपम् वैखानसागमग्रन्थेषु न कुत्रापि अन्यत्र उपलभ्यत इति कृत्वा पृथक् अनयोः विमर्शः अपेक्षितो वर्तत एव।

जगतः प्रपञ्चस्य च सृष्टिप्रक्रियाक्रमः विकासो वा वैखानसागमेऽपि अन्यान्यभारतीयदार्शनिकसम्प्रदायसमान एव। यथा सांख्यदर्शनसम्प्रदाये प्रधानादिभ्यः सृष्टिक्रमः प्रवर्तति तथैव अत्रागमसम्प्रदायेऽपि। खिलाधिकारे भगवतः ध्यानप्रसङ्गे सृष्टिक्रमसाधकानि तत्त्वानि वर्णितानि सन्ति। तद्यथा–प्रधानं, बुद्धिः, अहङ्कारः, भूतः, इन्द्रियाणि, मनः, पृथ्वी, आपः, तेजः, वायुः, आकाशः ( भूतमाला ) ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चेति सर्वाण्यपि तत्त्वानि परिगणितानि[२१]।

विष्णोः निर्गुणत्वे निर्विकारत्त्वे च सति कथं तस्य सगुणत्वं संभवति, अथ च सर्वव्यापिनः ब्रह्मणः नारायणस्य कथमेकत्र प्रतिमादौ आवाहनस्य युक्तियुक्तत्वं संगच्छते इत्येतत् प्रश्नोदये सति उच्यते मन्त्रैरावाहितः सर्वव्यापकोऽपि परमात्मा एकत्र बेरे स्थण्डिले कूर्चे कुम्भे वा स्थितः सन् भक्तान् अनुगृह्णाति पूजां च स्वीकरोति। यथा अरण्यां प्रच्छन्नः अग्निः मथनात् उत्पद्यते, व्यापकः वायुः व्यजनेन प्रत्यक्षम् अनुभूयते तथैव सर्वव्यापि ब्रह्म आवाहनानन्तरं भक्तानां हृदये बेरादौ च प्रत्यक्षं[२२] भवति इति नास्त्यत्र किमपि अयुक्तम्।

इत्थमत्र वैखानसागमग्रन्थेषूपलब्धं साक्ष्यमाधृत्य ब्रह्मणः परमतत्त्वस्य वा यत् स्वरूपमवलोकितं तन्न तावत् अद्वैतवेदान्तसिद्धान्ते प्रतिपादितं सर्वथा निर्गुणं निष्कलं शुद्धमेकं चिद्ब्रह्मस्वरूपसदृशं वक्तुं शक्यते। न वा श्रीमद्रामानुजाचार्यैः स्वीकृतं विधिवत् प्रचारितं च विशिष्टाद्वैतसिद्धान्त इव चिदचिद्विशिष्टम् अद्वैतस्वरूपं ब्रह्म वैखानसागमाचार्यैः स्वीकृतम्। प्रतिष्ठा-अर्चादिव्यावहारिकक्रियाकलापसम्पादनसौकर्यय अयमागमः परमं तत्त्वं सगुणं सकलस्वरूपं च स्वीकरोति। अन्यथा आलयार्चाराधनादिप्रक्रियाप्रवृत्तौ एव महती बाधा स्यात्। परमार्थतस्तु नारायणाख्यं परमं तत्त्वं ब्रह्म वैखानसानां नये निष्कलं निर्गुणमेव इति।

## सन्दर्भ-संकेतः

१. पारम्पर्येणाविच्छिन्न उपदेशः आगमः—महाभाष्य-त्रिपादी-टीका; १-१-१; पृ० १०; हिन्दूविश्ववि० प्रकाशनम्, वाराणसी-१९६५
२. पाञ्चरात्रागमः–पृ० २१; प्रकाशकः बिहारराष्ट्रभाषा-परिषत्; पटना-४, १९८७
३. पाञ्चरात्रपरिशोधनपरिषत्, मद्रास, १९७४
४. विमानार्चनकल्पः; पटलः ३१; तिरुपतिसंस्करणम्, १९२६
५. विमानार्चनकल्पः, पटलः २, पृ० ४
६. खिलाधिकारः, अध्याय १७; श्लो० १८-२०; तिरुपति संस्करणम्, १९६१
७. ( १ ) विमानार्चनकल्पः, पट० ३१
( २ ) खिलाधिकारः, अ० १७, श्लो० २
८. खिलाधिकारः, अ० १७, श्लो० २६-२८
९. क्रियाधिकारः, अ० ७, श्लो० २६-२७, तिरुपति संस्करणम्, १९५३
१०. क्रियाधिकारः, अ० ७, श्लो० ३१
११. आनन्दसंहिता, अ० १, श्लो० १२-२९; ईगापालेम संस्करण, १९२४
१२. कठोपनिषद्, १-३-२०
१३. ऋग्वेदः, १०-९०
१४. विमानार्चनकल्पः, पट० २; पृ० २
१५. खिलाधिकारः, १७, २२-२६
१६. विमानार्चनकल्पः, पट० २, पृ० ४
१७. खिलाधिकारः, १७, २८-३२
१८. आनन्दसंहिता, १-२९-३६
१९. आनन्दसंहिता, १, १६-१७,
२०. खिलाधिकारः, १७, ३३-४७
२१. खिलाधिकारः, १७, ३४-३७
२२. खिलाधिकारः, १७-२१

[ इति ]

# न्यायशास्त्रस्य तात्पर्यम्

□ **बाबू मिश्रः**

अथैतन्नाविदितं विदुषां यदिह संसारे प्राणभृतां प्रवृत्तिः सुखप्रेप्सां दुःखविजिहासां वोपजीवति। इदमप्यतिरोहितमेव यद्विषयसुखमश्नुवाना जना विषयव्युपरमजदुःखेभ्यो मुक्तिमधिगन्तुमशक्ता भवन्ति। नहि कोऽपि विषय इह चिरस्थायी, न वा कश्चिदिह दृश्यते सततमिष्टार्थसन्निधिस्थायी। स्वभाव एवैष संसारस्य यद्य एव विषयाः सन्निहिताः प्रियाकुर्वन्ति, त एव वियुक्ता दुःखाकुर्वन्ति। अतः केचिदिह विषयवैतृष्ण्यमासाद्य तादृशीं दशामीप्सन्ति यत्र गन्धोऽपि दुःखस्यासम्भवी। अपरे च मोहभूम्ना विषयानुबन्धिचेतसः संसारदशामेव प्रचुरं रोचयन्ते। इत्थमनेकविधमर्थमर्थयमानानां मानवानां हितसाधनैकव्रतिनो महर्षयोऽनेकविधान् निःश्रेयसलाभोपायान् प्रदर्शयितुकामा नानाशास्त्राणि निरमासिषुः। तानि च विद्योद्देशप्रकरणे अर्थशास्त्रकृता कौटिल्येन न्यायभाष्यकृता वात्स्यायनेन च भागचतुष्टये विभक्तानि **आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वतीति।** तत्रान्वीक्षिकी न्यायशास्त्रम्, त्रयी श्रौतार्थनिरूपणपराणि मीमांसादिशास्त्राणि, वार्त्ता कृषिवाणिज्यादिधनागमोपायप्रतिपादकानि शास्त्राणि, दण्डनीतिश्च राष्ट्रव्यवस्थाप्रतिपादकं राजनीतिशास्त्रम्।

तत्र प्रथमतया निर्दिष्टं न्यायशास्त्रं परमर्षिणा गोतमेन सूत्रितं वात्स्यायनोद्द्योतकरवाचस्पत्युदयनप्रभृतिभिराचार्यैः भाष्यवार्त्तिकतात्पर्यपरिशुद्ध्यादिभिरुपबृंहितञ्च। तदेतन्न्यायशास्त्रं मुख्यतया कं विषयं प्रतिपादयति? किञ्चास्य मुख्यं प्रयोजनमिति जिज्ञासायां केचिद् 'आत्मादिप्रमेयतत्त्वं विषयः प्रयोजनञ्चापवर्ग' इति जल्पन्ति। अन्ये तु शास्त्रस्यास्य विवक्षितार्थसिद्ध्यनुकूलप्रमाणादिषोडशपदार्थतत्त्वानि विषया विवक्षितार्थसिद्धिश्च फलमिति निगदन्ति।

इदमधुना भवति सुवचं यत्प्रथमपक्षे न्यायशास्त्रं प्रधानतयाऽध्यात्मविद्याकोटिमाटीकते। किन्तु तत्पक्षपोषिकां वाचोयुक्तिमनवगच्छतो मनःशुद्धिर्न जायत इति तत्पक्षपातिनामाशयो विव्रियते। तथाहि—**प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम** इति न्यायशास्त्रस्यादिमं सूत्रम्। प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसं लभ्यत इति सूत्रार्थः स्फुट एव।

तत्र प्रमाणं नाम प्रमाकरणम्। प्रमा यथार्थज्ञानम्। तच्च यथा अर्थस्तथा ज्ञानम्। अर्थो हि यद्धर्मविशिष्टस्तस्य तेन रूपेण ज्ञानम् प्रमाणत एव सम्पद्यत इति प्रमेयतत्त्वावधारणोपायतया प्रमाणमभ्यर्हिततमम्। तदुक्तं *न्यायभाष्या*दौ वात्स्यायनेन 'अर्थवत्प्रमाणमि'ति। तात्पर्यटीकाकारेण वाचस्पतिमिश्रेण च व्याख्यातम् 'अर्थवदिति नित्ययोगे मतुप्। नित्यता चाव्यभिचारिता' इति। प्रमाणस्य अर्थाव्यभिचारित्वकथनेन तस्य अर्थव्याप्यत्वमपि सूचितं भवति। चक्षुः प्रमाणम् घटश्चार्थ इत्यनयोः व्याप्यव्यापकभावः इत्थमवसेयः—घट इति प्रतीतौ द्वावर्थौ भासेते घटत्वं तदाश्रयश्च। तत्र घटस्तादात्म्यसम्बन्धेन घटत्वञ्च समवायेन यत्र वर्तते तत्र प्रमाणमपि स्वजन्यज्ञानीयविशेष्यतासम्बन्धेन वर्तते इति भवत्युपपन्नं प्रमाणस्य मिश्रोक्तार्थाव्यभिचारित्वसूचितं व्याप्यत्वम्। यज् ज्ञानं प्रमाणाभासजन्यं यथा रज्वामयं सर्प इति तत्र विशेष्यतया भासमानेऽर्थे विशेषणतावच्छेदकसम्बन्धेन सर्पत्वं नास्ति। अतस्तज्ज्ञानं न यथार्थम्। एवञ्च किं ज्ञानं प्रमाणजन्यं किं वाऽप्रमाणजन्यमिति निश्चयः किमुपाय इति जिज्ञासायां भाष्यकृताऽभाषि 'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणमिति।' तत्र प्रवृत्तिसामर्थ्यं प्रवृत्तेः साफल्यम्।

अयमाशयः—प्रमाणतोऽर्थं प्रतिपद्य यो येन प्रवृत्तोऽर्थमुपलभते स निजप्रवृत्तेः साफल्यमवधारयति। अत एव स स्वीयार्थप्रतिपत्तेः प्रमाणजन्यत्वमपि जानाति। अथ वा प्रमाणस्य सफलप्रवृत्तिजनकत्वहेतुना प्रामाण्यं निश्चिनोति। अत्र शून्यवादिनामनेकविधा आक्षेपाः भवन्ति तेषां व्यपोहाय बह्व्यो युक्तयो न्यायशास्त्रे सन्ति। किन्तु विषयान्तरसञ्चारनिरोधकामोऽहमिदानीं ततो निवर्त्ते।

अत्र त्वेतावन्मात्रं विवक्षुरस्मि यद्यदि प्रमाणतत्त्वमनिश्चितं स्यात्तर्हि ज्ञानमात्रस्यायथार्थत्वशङ्काकवलिततया न कोऽपि शास्त्रार्थः विश्वसनीयकोटौ निविशेत। अतएव सकलार्थव्यवस्थायाः प्रमाणायत्ततया सूत्रकृता प्रमाणमभ्यर्हिततममानि सर्वप्रथमञ्च तदुल्लेखोऽकारि।

प्रमेयतत्त्वं द्विविधं, मोक्षोपयोगि अतादृशञ्च। यानि मोक्षोपयोगीनि तानि सूत्रकृतैवाग्रे निर्दिष्टानि। न्यायसम्मतनिःश्रेयसविचारप्रसङ्गेऽत्र निबन्धेऽपि तदुल्लेखः करिष्यते। यानि पुनः प्रमेयसूत्रेऽनुल्लिखितानि तान्यपि द्रव्यादितत्त्वानि न्यायसम्मतान्येवेति बोध्यम्। कथमन्यथा 'तदत्यन्तविमोक्षोऽपवर्ग' इति सूत्रेण दुःखात्यन्ताभावस्यापवर्गरूपत्वोक्तिः संगच्छेत। न हि न्यायसूत्रकृताऽभावपदार्थः पदार्थविभागसूत्रे समुद्दिष्टः। न्यायभाष्यकृताऽपि प्रमेयसूत्रभाष्ये व्याहृतम्—'अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्। अस्य ( सूत्रोक्तस्य ) तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इत्यत एतदुपदिष्टं विशेषेण' इति। मन्ये, एतद्भाष्यमनुसृत्यैव सिद्धान्तमुक्तावल्यामुक्तम् विश्वनाथेन—'एते च पदार्था वैशेषिकप्रसिद्धाः नैयायिकानमप्यविरुद्धाः। प्रतिपादितश्चैवमेव *भाष्ये*' इति। एवमेव कथाङ्गभूताः संशयादिपदार्था अपि शास्त्रेऽस्मिन् प्रतिपादिताः। संशयो हि न्यायाङ्गमिति न्यायशास्त्रे सोऽपि समुद्दिष्टः। लक्षणपरीक्षाभ्यां निरूपितश्च। यः खल्वर्थो न कथमपि ज्ञातः यो वा निर्णीतस्तत्र न्यायप्रवृत्तेरभावात् सामान्यरूपेण ज्ञातेऽपि विशिष्याज्ञातेऽर्थ एव न्यायप्रवृत्तिरङ्गीक्रियते। यस्तावदर्थो येन रूपेणाज्ञातस्तदर्थे तद्रूपेण संशयो जायते। वह्निमत्त्वेनाज्ञाते विदिते हि वह्निमान्नवेति संशयो भवति। समुदिते च संशये निर्णयाय न्यायप्रवृत्तिरिति न्यायाङ्गता संशयस्य सर्वसम्प्रतिपन्ना।

न्यायो नाम प्रमाणैरर्थपरीक्षणम्। निश्चयेन ईयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति व्युत्पत्त्या न्यायशब्दः विवक्षितार्थसिद्धिसाधनभूतं पञ्चावयववाक्यम् अभिधत्ते। ते चावयवाः प्रतिज्ञाहेतूदाहरणोमनयनिगमनाख्या, एतेषां मूलभूतानि प्रत्यक्षानुमानोपमानशब्दास्तद्व्यापारभूता एव तेऽवयवाः भवन्ति। तदुक्तं वार्त्तिके समस्तप्रमाणव्यापारादर्थाधिगतिर्न्यायः। अधिगतिरिह पञ्चावयवसमुत्थमनुमानमित्यधिगन्तव्यम्। इदमत्रावश्यं वेदितव्यं यत् पञ्चावयववाक्यं विवक्षितार्थसाधकतया न्याय इत्युच्यते। तत्प्रतिपादकतया शास्त्रमप्येतन्न्यायपदव्यपदेश्यतां लभते।

अत्र तात्पर्यटीकाकारेणोक्तम्—'अर्थस्य लिङ्गस्य परीक्षणं परीक्षा' इति। कथायां प्रवृत्तो वादी स्वविवक्षितार्थसाधनाय कञ्चिद्धेतुमुपादत्ते। तस्य साध्यसाधकत्वमुपपादयितुं पञ्चावयवं वाक्यं प्रयुङ्क्ते। तेन हि हेतुत्वेनाभिमतः पदार्थः साध्यसाधकत्वेन निर्णीतो भवति। तथा च साध्यव्याप्यतया हेतुनिर्णयात्मिका हेतुपरीक्षैव न्यायः। साध्यसिद्धिश्च तत्फलम्। साध्यरूपार्थपरीक्षाया न्यायरूपत्वाङ्गीकारे तु साध्यसिद्धेर्विद्वत्प्रसिद्धं न्यायपदव्युत्पत्तिलभ्यञ्च न्यायाधीनत्वं नोपपद्येत। तदेव तत्फलमिति व्यवहारो न समीचीनः। तस्मात्प्रमाणैरर्थपरीक्षणं न्याय इति *भाष्ये* यदर्थपरीक्षणमुक्तं तद्धेतुपरीक्षणमेव न साध्यनिर्णय इति बोध्यम्।

इदञ्चात्र प्रेक्षणीयं यन्न्यायस्वरूपं प्रतिपादयता भाष्यकृता 'प्रत्यक्षागमाश्रितमनुमान'मित्यप्युक्तम्। वार्त्तिककृदुद्योतकरश्च तत्राश्रितपदस्याविरुद्धार्थकत्वं व्याचख्यौ। अतो यदनुमानं प्रत्यक्षागमयोरविरुद्धं तदेव न्यायः। अस्यैवापरं नाम अन्वीक्षेति। तद्व्युत्पादयता वार्त्तिककारेणोक्तम्—'प्रत्यक्षेणागमेन वेक्षितस्य अनु ( पश्चात् ) ईक्षणम् अन्वीक्षेति' न्यायविद्यान्वीक्षात्मकानुमाननिर्वाहाय प्रवृत्ता। अत एवेयमान्वीक्षिकीति निगद्यते।

प्रयोजनमपि न्यायप्रवृत्तेरङ्गम्, प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इत्यभियुक्तोक्तेः। तत्र न प्रवृत्तिरिति समे जानन्ति। यदधिगन्तुं परिहर्त्तुं वा जनः किञ्चित्करोति तत्प्रयोजनमुच्यते। क्रमोऽयं सार्वतैर्थिकःसम्प्रतिपन्नो यज्जीवः प्रथमं जानाति तत इच्छति तदनु यतते ततश्चेष्टते। अतः क्रियानुकूलप्रयत्नरूपा प्रवृत्तिः यदधिगमेच्छया यत्त्यागेच्छया वा संजायते, न्यायशास्त्रे तदुभयविधं प्रयोजनमुच्यते। सुखप्राप्तिः दुःखनिवृत्तिश्च मुख्यं प्रयोजनम्। तदुपायो हि गौणं प्रयोजनम्। अत्रेदमवधेयं यद्दुःखस्य प्रयोजनपदार्थत्वं न्याय एव स्फुटमुक्तम्। अन्यत्र तु पुरुषार्थचतुष्टयं प्रयोजनमिति प्रसिद्धम्। यद्यथा ग्राह्यस्य तथैव त्याज्यस्यापि प्रयोजनत्वं न्यायशास्त्र एव स्फुटमुक्तम्। अन्यत्र तु पुरुषार्थचतुष्टयं प्रसिद्धमिति समे जानन्ति।

एवमेव विवक्षितार्थसिद्ध्यनुकूलविचारोपयोगिनामन्येषामपि दृष्टान्तादिपदार्थानां निरूपणमिह न्यायविद्यायां महतारम्भेण कृतमस्तीति प्रथमसूत्रावलोकनादेव शक्यमवगन्तुम्। तेष्वेकैकमर्थतत्त्वं विपुलव्याख्यानयोग्यमास्ते।

अतः सूत्रोक्तेषु षोडशपदार्थेषु केषां तत्त्वज्ञानं साक्षात् केषां वा परम्परया निःश्रेयसे हेतुरिति विचारणीयमस्ति। तमेतं विषयमधिकृत्य न्यायभाष्यकारो वात्स्यायनो ब्रवीति—'आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगमः। तच्चैतदुत्तरसूत्रेणानूद्यत इति'। अयमेतद्भाष्याशयः—आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति नवमसूत्रे ये द्वादश पदार्था निर्दिष्टास्तेषां तत्त्वज्ञानान्निःश्रेयसमधिगम्यते।

एतदेव महर्षेर्गोतमस्य तात्पर्यमिति कुतोऽध्यवसीयत इति प्रश्ने समुदिते भाष्यकृताऽभाषि—तच्चैतदुत्तरसूत्रेणानूद्यत इति।

आत्मादिप्रमेयपदार्थस्य तत्त्वज्ञानं मोक्षसाधनमित्युत्तरसूत्रेण महर्षिणा पश्चादुक्तमिति भाष्यार्थः। उत्तरसूत्रञ्च- 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदन्तरापायादपवर्ग' इति। एतत्सूत्रं नैयायिकसम्मतं मोक्षसिद्धान्तं प्रतिपादयति। अयमभिसन्धिः—प्रथमसूत्रेण सूत्रोक्तपदार्थानां तत्त्वज्ञानस्य निःश्रेयसहेतुत्वं प्रतिपादितम्। तत्र किमेषां तत्त्वज्ञानं स्वानन्तरमेव निःश्रेयसं जनयति विलम्बेन वेति जिज्ञासायां गोतमेन निर्मितमिदं सूत्रं यदभिधत्ते तदित्थमवसेयम्- तत्त्वज्ञानान्मिथ्याज्ञाननिवृत्तिः, मिथ्याज्ञाननिवृत्तौ रागद्वेषात्मकदोषनिवृत्तिः, दोषनिवृत्तौ धर्माधर्मात्मकप्रवृत्तिनिवृत्तिः, प्रवृत्तिनिवृत्तौ च जन्मनो निवृत्तिः, तन्निवृत्तौ च दुःखनिवृत्तिः। इदानीमिदं स्फुटतयाभिहितं यत् तत्त्वज्ञानादुक्तक्रमेण निर्वाणमुक्तिर्भवति। अतः प्रथमसूत्रे 'तत्त्वज्ञानात्' इत्यत्र पञ्चमीविभक्तिः प्रयोजकत्वे, न कारणत्वे।

यद्यप्यस्मिन् सूत्रे मिथ्याज्ञानविनाशकस्य निर्देशो नास्ति तथापि 'मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् ४।२।३५' इत्यग्रिमसूत्रमनुसन्धाय भाष्यकृता 'तत्त्वज्ञानादि'ति निगदितम्।

तत्त्वज्ञानस्य मिथ्याज्ञाननिवर्त्तकत्वं यदुक्तं महर्षिगोतमेन तद् भगवता शङ्कराचार्येणापि परिगृहीतम्, सूत्रोल्लेखतः प्रागुक्तञ्च 'तथा चाचार्यप्रणीतं न्यायोपबृंहितं सूत्रमिति' (४ सू.भा.)।

इदमधुनावधारणीयं यत् तत्प्रयोजनप्रतिपादने शास्त्रकृत् युक्तिमुपदर्शयति तदेव तच्छास्त्रस्य मुख्यं प्रयोजनमिति रीत्या निःश्रेयसमेव प्रयोजनमौलीभूतं न्यायस्य।

न्यायवार्त्तिककार उद्योतकरस्तत्त्वज्ञानस्य निःश्रेयसं प्रति साक्षात्कारणत्वममत्वा न्यगादीत् यत्तत्त्वदर्शिनस्तत्त्वज्ञानानन्तरमेव यदि मोक्षस्तर्हि मोक्षदशायां 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति छान्दोग्यश्रुतिप्रामाण्यात् शरीरपातस्यावश्यम्भावित्वसिद्धौ विद्यासम्प्रदायस्यैवोच्छेदप्रसङ्गः। तत्त्वं विज्ञायैव गुरुः शिष्यमुपदिशति। यदि नाम गुरुस्तत्त्वं विज्ञाय सपद्येव संसारदशां परित्यजेत्, कस्तर्हि कमपि किमप्युपदिशेत्। एवञ्च शास्त्रसम्प्रदाय एव विलीयेत। दृश्येत हि सम्प्रदायोऽविच्छिन्न इत्यतः क्रममुक्तिरेवाङ्गीकार्या।

इदञ्चात्र चिन्तनीयं यत्प्रमेयतत्त्वज्ञानस्य येन क्रमेण निःश्रेयसहेतुत्वं स तूक्तः सूत्रकृतैव। किन्तु प्रमेयातिरिक्त पदार्थानां तत्त्वज्ञानस्य तद्धेतुत्वं कथमिति नोक्तं सूत्रकृता, न वा संशयादीनां तत्त्वज्ञानस्य निःश्रेयसहेतुत्वमनुभवपथमारोहति। एवञ्च प्रथमसूत्रे सूत्रोक्तसकलपदार्थानां तत्त्वज्ञानहेतुकस्य निःश्रेयसाधिगमस्य प्रतिपादनमसमञ्जसमिवाभाति।

तदेतत्सर्वं हृदि निधाय न्यायभाष्यकृता भाषितम् 'तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथाविद्यं वेदितव्यम्। इह त्वध्यात्मविद्यायामात्मादिज्ञानं तत्त्वज्ञानं निःश्रेयसाधिगमोऽपवर्गप्राप्तिः' इति।

इदमस्यैदम्पर्यं यदियं न्यायविद्या न त्रयीवदध्यात्मविद्यामात्रम् अपि त्वियं सकलविद्योपकारकतया तत्तद्विद्याप्रयोजनसाधिकाऽपि। आन्वीक्षिकी, त्रयी, वार्ता, दण्डनीतिरित्येतासु विद्यासु काचिदाध्यात्मिकविषयमात्रं विशदीकरोति काचित्पुनरैहिकार्थमात्रोपायतां भजति। किन्त्वियमान्वीक्षिकी विद्यान्तरेभ्यो विलक्षणतया मोक्षोपयोगिनः पदार्थान् विवृण्वती विद्यान्तरसाध्यनिःश्रेयसलाभेऽपि साहाय्यकमातनोति।

तत्र त्रयी वेदविद्या। तस्या यागसाधनानां न्यायोपार्जितत्वं श्वमार्जाराद्यनुपहतत्वञ्च तत्त्वम्। स्वर्गप्राप्तिश्च निःश्रेयसम्। वार्त्ताशास्त्रे च भूमेः सिकताद्यनुपहततत्त्वज्ञानं तत्त्वज्ञानम्। सस्यप्राप्तिश्च निःश्रेयसम्। राजनीतिशास्त्रे सामदानदण्डभेदानां देशकालानुसारेण प्रयोगस्तत्त्वम्, जयश्रीलाभो निःश्रेयसम्।

एवञ्च तत्त्वभेदेन प्रयोजनभेदेन च विद्याः पृथक्प्रस्थानाः सन्ति। किन्तु ता यत्प्रतिपादयन्ति तन्मात्रेण विमृश्यकारिणां परितोषो नोदेति, क्वचिद् यथाश्रुतार्थग्रहणे प्रमाणान्तरविरोधादिदर्शनात्। 'आदित्यो यूपः यजमानः प्रस्तर' इत्यादौ प्रत्यक्षविरोधो हि सर्वानुभवसिद्धः। वार्त्ताशास्त्रीयं 'माघे कर्षिता भूमिः स्वर्णमयं फलमाधत्ते' इति वचनमपि यथाश्रुतार्थे तात्पर्यवच्चेन्न श्रद्धेयं, सस्यस्यैव कृषकपुरुषार्थत्वात्। अतस्तत्तद्विद्यातात्पर्यं न्यायशास्त्रपरिशीलनविचारकौशलमेव। यो हि न्यायशास्त्रं परिशीलयति, स विरोधपरिहारोपायं तर्कादितत्त्वमवगच्छन् विद्यान्तरतात्पर्यमवधारयितुमीष्टे। घृताक्तो यूपः सूर्यवदुज्ज्वलो भातीत्यभिप्रायेणादित्यतादात्म्यं यूपे समारोपितम्। दर्भमुष्टिं विना वैदिकं कर्म न सम्पद्यत इति तस्या यजमानस्येव कर्मसाधकत्वमभिप्रेत्य निगदितं 'यजमानः प्रस्तर' इति। यो हि यद्वद्विराजते स तन्नाम्ना व्यपदिश्यते, यथा कविरमुकः कालिदास इति। स्वर्णस्य समृद्धिषु श्रेष्ठतया सस्यसमृद्धेरतिशयबोधनाय प्रचुरसस्यात्मके कृषिफले स्वर्णमयत्वमारोपितम्—इत्यादि दिशा शास्त्रान्तरीयवचनतात्पर्यावधारणं न्यायशास्त्रीयप्रणालीमवलम्ब्यैव कर्तुं शक्यते। अन्यथा शास्त्रान्तरार्थस्य प्रमाणान्तरबाधितत्वे शास्त्रस्यैवाप्रामाण्यं प्रसज्येत। एतत्सर्वमनुसन्धायैव भाष्यकृता निगदितम्—

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**
**आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता**॥ इति॥

एवञ्च न्यायविद्यापरिशोधितानि प्रमाण्णादीन्यवलम्ब्यैव समवधारितान्यविद्यातात्पर्यो जनो विद्यान्तरप्रतिपादिते कर्मणि प्रवर्तत इत्युपपद्यतेतरां न्यायशास्त्रस्य सर्वकर्मोपायत्वम्। यो हि यस्योपकारकः स तस्याश्रयः यथा भृत्योपकारको भृत्यस्वामीति नियमात् सर्वधर्माश्रयत्वमस्य बाढमुपपन्नम्।

इदमाकूतम्—कोऽपि कमप्यर्थं सिषाधयिषुर्विचारपद्धतिमाश्रयते। विचारप्रसङ्गे च विपरीतोऽपि पक्षः पदमाधत्ते। तत्र स्वपक्षस्थापना कर्त्तव्यकोटिमाटीकते। अतो युक्तिप्रदर्शनमावश्यकम्। युक्तयः पक्षयोरुभयोः समापतन्ति। तत्र समीचीना युक्तिः का, का वा न समीचीनेत्याद्यावश्यकविचारे प्रवृत्तस्य युक्तितत्त्वज्ञानमप्यावश्यकं भवति। तद्धि न न्यायशास्त्रमन्तरेण सुप्रापम्। न्यायविदा हि किं सदुत्तरं किमसदुत्तरम्, किं साधनं को वा साधनाभास इति सम्यग् विज्ञायते। अत एव सर्वानुग्रहकर्त्रीयमान्वीक्षिकी युक्तिविद्येति व्यवह्रियते।

ईदृशं वैशिष्ट्यमाकलय्यैव न्यायशास्त्रस्य विद्योद्देशप्रकरणे पृथगुल्लेखः कौटिल्येन वात्स्यायनेन च कृतः। अन्यथाऽस्य श्रुतिप्रतिपादितार्थमात्रनिरूपणपरत्वात् त्रय्यामन्तर्भावसम्भवे पृथग् निर्देशासङ्गतिः स्यादेव। अत एव न्यायसूत्रोक्त षोडश-पदार्थेषु प्रमाणे प्रमेये च यथासम्भवं संशयादीनामन्तर्भावसम्भवे तेषामुद्देशः किमर्थ इति विचारणायामुक्तं भाष्यकृता 'इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते, यासां चतुर्थीयमान्वीक्षिकी विद्या, तस्याः पृथक्-प्रस्थानाः संशयादयः पदार्थाः। तेषां पृथग्वचनमन्तरेणाध्यात्मविद्यामात्रमियं स्यात्' इति। *तात्पर्यटीकायां* वाचस्पति-मिश्रेणाप्युक्तम्—'सूत्रकारेण शास्त्रस्यात्यन्तिकदुःखोपरमरूपनिःश्रेयसाधिगमः प्रयोजनमुक्तम्। भाष्यकारस्तु नास्त्येव तत्प्रेक्षावतां प्रयोजनम्, यत्रान्वीक्षिकी न निमित्तं भवति'। इति।

अधुना सिद्धमियता परिकरेण यदियं न्यायविद्या आध्यात्मिकतदितरोभयविधविषयान् प्रतिपादयन्तीतीतराभ्यो विद्याभ्यो विशिष्यते। अतः प्रथमसूत्रोक्तं निःश्रेयसरूपं प्रयोजनम् सर्वविधमानवकल्याणात्मकमित्यवश्यमास्थेयम्।

किन्तु पुरुषार्थेषु मोक्षस्यैव मुख्यतया तस्यैव मुख्यप्रयोजनत्वमङ्गीकर्त्तुमुचितम्। एवञ्च प्राधान्येन मोक्षोपायं विवृण्वतीयमान्वीक्षिकी सर्वजनानुग्रहप्रवणतया शास्त्रान्तरीयसिद्धान्तेष्वपि विपक्षिवचनैः जिज्ञासूनां श्रद्धाहानिर्माभूदि-त्येतदर्थं युक्तितत्त्वोपदेशं विधत्ते। अस्याः केवलयुक्तिविद्यात्वोपगमेऽन्यशास्त्रफलैरेव फलवत्तेति नासाधारण्यं प्रयोजनस्य। अध्यात्मविद्यात्वस्याभ्युपगमे तु मोक्षफलकत्वमस्याः सिद्ध्यति। यद्यपि मोक्षप्रतिपादकत्वमुपनिषदोऽपि, तथाप्येतत्प्रति-पादितमोक्षस्य परोक्तमोक्षाद्विसदृशतया सिद्ध्यतितरामसाधारण्यम्। एवञ्च निःश्रेयसमिह द्विविधं दृष्टादृष्टभेदात्। अदृष्टांशेऽपि शास्त्रमिदमुपनिषदाद्यध्यात्मविद्योपकारकतया परम्परया हेतुः। स्वोक्तापवर्गरूपादृष्टफलांशे च साक्षात्कार-णम्। तत्रापि पूर्वोक्तक्रमस्य स्वीकृततया अपवर्गात्पूर्वजन्मापायान्तमिथ्याज्ञानादिघटनाव्यवहिते क्षणे सतस्तत्त्वज्ञानस्य नान्तरीयकव्यवधानेतराव्यवहितपूर्ववृत्तितयैव साक्षात्कारणत्वमुच्यते विद्वद्भिः। वस्तुतस्तु न्याये तत्त्वज्ञानस्योक्तविध-मपवर्गं प्रति प्रयोजकत्वमेव अथ वा तत्त्वज्ञानस्य द्वारभूता जन्मापायान्तघटनाः। अतः अपूर्वद्वारा स्वर्गादेरिव तत्त्व-ज्ञानस्यापवर्गहेतुत्वम्। तथा चास्य शास्त्रस्य परमतात्पर्यं मोक्ष एवेत्येकः पक्षः। शब्दविषया *प्रतिज्ञा*—अलौकिके हि विषये आप्तवाक्यं प्रमाणम्। तदनुसन्धानेन प्रतिज्ञा जायत इति शब्दमूलेयं प्रतिज्ञा। एतेन न्यायस्यागमानुसारित्वमपि सूचितं भवति। अनुमानं *हेतुः*—अनेन हेतोः साध्यसाधकतयोल्लेखः क्रियते। व्याप्यतया गृहीतः हेतुः। अंतः व्याप्ति-ज्ञानमस्य मूलम्। प्रत्यक्षविषय*मुदाहरणम्*—प्रत्यक्षपरिकलित एवार्थः अनेन प्रतिपाद्यते। उपमान*मुपनयः*—'तथा' पदघटित उपनयः यथापदाध्याहारमहिम्ना उपनयरूपतां प्राप्नोति। एतेनोपनयनस्य शक्तीतरविषयग्राहकत्वमपि सिद्धम्। सर्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शनं *निगमनम्*।

अथापरे प्रतिब्रुवते यन्न्यायशास्त्रे मुक्त्युपयोग्यात्मतत्त्वस्य निरूपणमतिसंक्षेपेण कृतं सूत्रकृता। न्यायभाष्यमपि सूत्रमनुधावत् स्वल्पांशेनात्मतत्त्वं बहुलांशेन च विचारपरिशुद्धिसाधकान्यर्थतत्त्वानि विवृणोति। शास्त्रव्युत्पाद्येषु पदार्थेषु च चतुर्दश विवक्षितार्थसाधकयुक्त्युपदेशेनोपयोगिनः, एकः प्रमाणरूपोऽर्थो यो मुक्तिसाधनात्मतत्त्वज्ञानाय कल्पेत। अतो न्यायशास्त्रे प्रमेयान्तर्गतोऽपवर्गः महर्षिणाऽऽचार्येण मुख्यप्रतिपाद्यविषयतया नाङ्गीकृत इति मन्तव्यम्। विद्यान्तरोप-कारमेव मुख्यं प्रयोजनमुद्दिश्य गोतमः शास्त्रमिदं निरमासीत्। आगमसिद्धार्थसाधनाय आगमविरोधियुक्त्युपमर्दनाय च प्रवृत्तमिदं शास्त्रं श्रौतार्थजिज्ञासुनाऽवश्यं परिशीलनीयम्। किन्त्वध्यात्मविद्याभिन्नविद्यायां मुमुक्षोः प्रवृत्तिर्न सम्भवति, न वा न्यायमपरिशील्य स श्रुतिविरोधनीं परप्रदर्शितां युक्तिं प्रत्याख्यातुं च शक्नुयात्, न च स्वाभिमतार्थसाधनसमर्थः स्यादिति विचिन्त्य भगवता गोतमेन निजनिर्मितशास्त्रे संक्षेपेण निरूपितमात्मतत्त्वम्। तत्र मुक्तेर्यादृक् प्रकारः प्रदर्शितः स वेदान्तविदामपि सम्मत एव। यादृशस्तु मोक्षः प्रतिपादितः तदितरत्राप्रतिपादिततया न्यायस्यासाधरणो विषयो भवन्नपि

न परमार्थो भवितुमर्हति। हठात् परमतत्त्वोपदेशो वृथेति विभाव्य परमार्थः सन्निहार्थोपदेशः क्रियत एव। एतद्वर्णितां भूमिमुपगतो हि महात्मा श्रुतिविरोधिनां वाचोयुक्तीरनङ्गीकुर्वन् श्रद्धाभरेण श्रुत्युपदेशं परिपालयिष्यतीति विचिन्त्य शास्त्रकृतात्र मोक्षमार्गः प्रदर्शितः। अतोऽस्य शास्त्रस्य परमतात्पर्यं नात्मतत्त्वप्रतिपादने किन्तु युक्तितत्त्वप्रदर्शन एवेति। अस्मिन् पक्षे न्यायशास्त्रीयमनुशीलनमपि प्रवृत्त्यर्थम् अध्यात्मविद्यात्वं बिभ्रदपि स्वीययुक्तिविद्यात्वमेव प्राधान्येन पुरस्करोति।

अपि च कस्यचिद् ग्रन्थस्य शास्त्रस्य तात्पर्यविषयीभूत एवार्थस्तस्य मुख्यः प्रतिपाद्यविषयः स्वीक्रियते। कस्य कस्मिन् विषये तात्पर्यमिति विचारणायां तात्पर्यावधारणोपायः प्राचीनैराचार्यैरुपदर्शितः—

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥**

इयमुक्तिः सर्वैराचार्यैः स्वीक्रियते। एभिस्तात्पर्यनिर्णायकैः षड्भिर्लिङ्गैर्न्यायस्यापि तात्पर्यमवधार्यम्। तथा हि उपक्रमोपसंहारयोरेकार्थे पर्यवसानं यत्रार्थे स एव तात्पर्यविषय इति स्वीक्रियते। न्यायशास्त्रे चाद्यसूत्रे निग्रहस्थानान्ताः षोडश पदार्था उक्ताः। 'हेत्वाभासाश्च यथोक्ताः' इत्यन्तिमसूत्रेऽपि हेत्वाभासानां निग्रहस्थानेष्वन्तर्भावप्रतिपादके प्रथमसूत्रोक्तपदार्थ एवोक्त इति भवत्युपक्रमोपसंहारयोरेकार्थे परिसमाप्तिः। षोडशपदार्थानां निरूपणार्थमुपक्रान्तं तदन्यतमपदार्थं निरूपयदेव परिसमाप्तञ्च। अतोऽस्य शास्त्रस्य तात्पर्यं षोडशपदार्थनिरूपण एव नापवर्गनिरूपण इति सिद्ध्यति। पूर्वमीमांसा हि धर्मविद्येति सर्वे समधिगच्छन्ति। तत्रापि 'अथातो धर्मजिज्ञासा' इति प्रथमसूत्रम् 'अन्वाहार्ये च दर्शनात्' इति चान्तिमम्। अन्वाहार्यरूपदक्षिणायां ब्राह्मणस्यैव निर्देशात् ऋत्विक्कर्मणि ब्राह्मणस्यैवाधिकार इति चरमसूत्रार्थः। अतस्तच्छास्त्रस्य यथा वेदार्थरूपधर्मे तात्पर्यं सिध्यति तथा न्यायशास्त्रस्यापि पदार्थव्यवस्थापने।

द्वितीयं लिङ्गमस्ति अभ्यासः। स चैकस्यैवार्थस्य पौनःपुन्येन कीर्तनम्। अभिप्रेत एवार्थस्तथा कीर्त्तितो भवति। अतात्पर्यविषयीभूतं वस्तु कथञ्चित् समासतः कीर्त्यते वा नाडम्बरेण। अतोऽभ्यासोऽभ्यस्तेऽर्थे तात्पर्यविषयत्वं सूचयत्येव। न्यायशास्त्रं हि पञ्चाध्यायी। तत्र प्रथमे द्वितीये चाध्याये पदार्थानामुद्देशः लक्षणं प्रमाणपरीक्षणञ्च कृतम्। पञ्चमाध्याये जातेः निग्रहस्थानानाञ्च निरूपणं विहितम्। तृतीयचतुर्थयोरध्याययोर्द्वादशानामात्माद्यपवर्गपर्यन्तानां प्रमेयाणां परीक्षा कृता। इदञ्चात्र बोध्यम् यत्तृतीयाध्यायस्य प्रथमाह्निके नव प्रकरणानि सन्ति। तत्र प्रकरणचतुष्टये देहेन्द्रियमनोभ्यो व्यक्तिरिक्तस्यात्मनो नित्यत्वं प्रतिपादितम्। अतिरिक्ते च प्रकरणपञ्चके प्रासङ्गिका एव विषया निरूपिता नात्मतत्त्वज्ञानस्य साक्षादुपकारकाः। अस्यैवाध्यायस्य द्वितीयाह्निके प्रकरणसप्तकात्मके, प्रकरणचतुष्टये बुद्धिरनित्या, क्षणिका आत्मगुणा शरीरानाश्रिता चेति प्रतिपादितम्। अतिरिक्ते चाध्यायत्रितये ये विषया उक्तास्ते नात्मतत्त्वज्ञानोपयोगिनः।

चतुर्थाध्यायेऽपि द्वित्रिष्वेव प्रकरणेषु तादृशा विषया निरूपिताः। एवञ्च चतुरशीतिप्रकरणात्मके न्यायशास्त्रे नवस्वेव प्रकरणेष्वात्मतत्त्वकथा विहिता। अत इदं स्वीकर्त्तुमुचितम् यन्न्यायाचार्येणात्मतत्त्वकथा संक्षिप्य समापिता। विस्तरेण तु प्रमाणसंशयादिपदार्था एव व्यवस्थापिताः। तस्मादभ्यासतोऽपि कथोपयोगिपदार्थनिरूपण एव न्यायतात्पर्यमिति निर्णेयम्।

अथापूर्वत्वलक्षणलिङ्गस्य कुत्र पक्षपात इति विविच्यते। अपूर्वत्वं नाम प्रमाणान्तरानधिगतत्वम्। तद्धि यस्मिन्नर्थे तत्र तात्पर्यमङ्गीकार्यम्। योऽर्थोऽन्यथा न ज्ञातः तत्रैव वाक्यतात्पर्यमिति भूतार्थः। न्यायशास्त्रे हि यादृशमात्मतत्त्वं प्रतिपादितम्। सुखदुःखादिगुणविशिष्ट एवात्मा ज्ञेयतयाऽत्र विज्ञापितः। स हि सर्वानुभवसिद्ध इति नापूर्वः। एवञ्च नेदृशेऽर्थे शास्त्रतात्पर्यं सम्भवति। 'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमि'ति सूत्रेण सुखदुःखादिविशिष्ट एवात्मा

प्रतिपादितः। कर्तृत्वभोक्तृत्वादिकमपि तन्मते वास्तविक एवात्मधर्मः। शरीरादिव्यतिरिक्ततया गृहीत एवात्मा तन्मते आत्मतत्त्वम्। अतः श्रवणमननाद्यनन्तरं यादृशमात्मतत्त्वं तन्मते द्रष्टव्यं तत्सर्वजनीनाहम्प्रत्ययगोचरान्न विशिष्यते। तदुक्तमुद्योतकरेण 'तदेवमहम्प्रत्ययविषयत्वादात्मा तावत्प्रत्यक्ष' इति [ १।१।१ ] तथा च तदात्मदर्शनं न संसारदशादर्शनतो विलक्षणमिति न्यायसम्मतात्मतत्त्वदर्शनमुद्दिश्य श्रवणमनने विदधती 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चे'ति श्रुतिर्वैयर्थ्यमासादयेदतः न्यायसम्मत आत्मा न द्रष्टव्यतया श्रुत्योपदिष्टः।

अपि च सांसारिकसुखस्य दुःखानुविद्धतया सुखं दुःखतया विभाव्य विषयवैतृष्ण्यलक्षणं वैराग्यं प्राप्तस्य जीवस्य यदात्मतत्त्वज्ञानं तस्य मुक्त्यनुगुणत्वमङ्गीकर्त्तुमुद्यतेन न्यायविद्यां मुक्तिविद्यास्थानेऽभिषेक्तुकामेन इदमवश्यं वक्तव्यं यत्तदात्मज्ञानं किमहं कर्त्तेत्यादिप्रत्ययविलक्षणमथवा तादृशमेव? यदि विलक्षणं, तर्हि न्यायसूत्रोक्तात्मनः कर्तृत्वादिना प्रतीतिर्मिथ्येति सिद्धम्। अतोऽपि न्यायस्यात्मप्रतिपादने न तात्पर्यमन्यथाऽस्य मिथ्याबोधकत्वादप्रामाण्यापत्तिः। द्वितीयपक्षे तु सततमनुभवपथमारूढस्यात्मनो दर्शनाय मननादिविधानं व्यर्थमित्युक्त एव दोषः।

किञ्च न्यायसम्मतो मोक्ष आत्यन्तिकदुःखनिवृत्तिरूपः। तच्च दुःखं यदि सत्यं तर्हि न तन्निवृत्तिसम्भवः, सत्यस्यात्मनो निवृत्त्यनभ्युपगमात्। साधनसम्पन्नस्य पुंसः कर्मानुष्ठानसहितमात्मज्ञानं सत्यस्यापि दुःखस्य निवर्त्तकमित्यपि न भणितव्यम्, ज्ञानकर्मसमुच्चयवादस्य न्यायशास्त्रे 'ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभाव' ( ४।१।५८ ) इत्येतत्सूत्रभाष्ये निराकरणात्।

तस्मान्न्यायोक्तात्मतत्त्वेऽपूर्वत्वाभावान्नानेन तात्पर्यनिर्णायकलिङ्गेन न्यायशास्त्रस्य तात्पर्यमात्मनिरूपणे बोध्यम्।

अर्थवादो नाम स्तुतिनिन्दान्यतरबोधकं वाक्यम्। तस्य कुत्र पक्षपात इति विचार्यते। तथा हि 'सेयमान्वीक्षिकी प्रमाणादिपदार्थैर्विभज्यमाना प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्' इत्याद्युक्तिः न्यायशास्त्रस्य विचारापेक्षितपदार्थज्ञानसम्पादकतया विद्यान्तरोपकारकत्वं प्रतिपादयति। *तात्पर्यपरिशुद्धा*वुदयनाचार्येणाप्युक्तम् 'तथा च विद्यान्तरफलेनैवास्याः फलवत्त्वं, न तु पुनस्साधारणं फलमस्या अस्ति' इति। 'यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स' इति *न्यायभाष्य*मपि न्यायस्य श्रुत्यर्थसाधकयुक्त्युपस्थापकतया प्रशंसामातनोति। 'तदिदं तत्त्वज्ञानं यथाविद्यं वेदितव्यम्' इत्यादि*भाष्य*मपि उक्तार्थ एवानुगुण्यं बिभर्ति।

आन्वीक्षिक्याः पृथक्प्रस्थानत्वं प्रदर्शयता भाष्यकारेण संशयादिपदार्थानां विशिष्य निरूपणस्यावश्यकता दर्शिता। ततोऽपि पदार्थनिरूपणमेव मुख्यं प्रयोजनमिति सिध्यति।

वाचस्पतिमिश्रेणाप्युक्तम्—'यद्यपि इतरा विद्याः प्रामाणिकमेवार्थमभिनिविशन्ते, तथापि एतद्विद्याप्रतिपाद्यमेव प्रमाणाद्युपजीव्य स्वे स्वे व्युत्पाद्येऽर्थतत्त्वे प्रवर्त्तन्ते न तु प्रमाणाद्यपि व्युत्पादयन्ति' इति।

किञ्च विवक्षितार्थसिद्ध्युपयोगिनो न्यायस्य संशयाद्यङ्गोपाङ्गसहितस्य व्युत्पादनमेवान्वीक्षिक्या व्यापार इत्युदयनाचार्येणाप्युक्तम् 'स च न्यायः संशयाद्यङ्गोपाङ्गैनैव व्युत्पादितो भवति। ततोऽस्याः संशयादयो विषयभूताः। तानन्तरेण निर्विषयतया विद्यैव न स्यात्' इति।

आन्वीक्षिक्याः किं प्रयोजनमित्याशङ्क्य वाचस्पतिना समाहितम्—'एतस्या एव समस्तविद्यावदातीकरणहेतुत्वात्, यथा भाष्यकारो वक्ष्यति प्रदीपः सर्वविद्यानामि'तीति। एतद्व्याख्यानं कुर्वता परिशुद्धिकृताऽप्युक्तम्—'नहि अन्या विद्याः स्वं स्वमर्थं व्युत्पादयन्त्योऽपि कथमेतदिति अश्रद्धामपनेतुमीशते विनैवान्वीक्षिकीम्' इति।

'निधये वाग्विशुद्धीनामक्षपादाय तायिने' इति तात्पर्यटीकामङ्गलश्लोकः *परिशुद्धौ* व्याख्यातः। तत्र तायिपद-व्याख्यानमस्ति'तायी तत्त्वाध्यवसायसंरक्षणक्षमकथासम्प्रदायप्रवर्त्तक' इति। तत्र यादृशी कथा तत्त्वनिर्णयसंरक्षणे समर्था तत्प्रवर्त्तकतयैवाक्षपादस्य महत्त्वमुक्तम्, नाध्यात्मविद्याप्रवर्त्तकतया।

इत्थमनेकैरर्थवादैर्न्यायविद्याया अभिमतवस्तुसिध्यनुकूलयुक्त्युपस्थापनक्षमतासमर्पणेन विद्वद्बुद्धिवैशद्यसम्पादनमेव न्यायस्य प्रयोजनमिति सिद्धम्। आत्मतत्त्वप्रतिपादनन्त्विह मुमुक्षुजनप्रवृत्त्यर्थम्। अधीतन्यायो हि श्रुतिविरोधियुक्तीरधःकृत्य पुरुषार्थराजं मोक्षमधिगन्तुमीष्टे इत्यभिहितं प्राक्।

प्रथमसूत्रोक्तं निःश्रेयसपदमपि न मोक्षमात्रार्थकम्, अर्थान्तरेऽपि तत्प्रयोगस्य दर्शनात्। *महाभारते* सभापर्वणि 'कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम्। पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं परम्।' इत्युक्तम्। तत्रनिःश्रेयसपदं लौकिककल्याणपरम्।

राजनीतितत्त्वावधारणसामर्थ्यसमर्पकतयैव नैयायिकाः प्राचीनकाले राजसभामध्ये प्रधानं स्थानमलभन्त। उक्तं हि वाल्मीकीय *रामायण* उत्तरकाण्डे (१०७/८)—हेतूपचारकुशलान् हैतुकाँश्च बहुश्रुतान्।

*ब्रह्मसूत्रशाङ्करभाष्ये* च तर्कपादादौ भगवता शङ्करेण—'यद्यपीदं वेदान्तवाक्यानामैदम्पर्यं निरूपयितुं शास्त्रं प्रवृत्तम्, न तर्कशास्त्रवत् केवलाभिर्युक्तिभिः कञ्चित् सिद्धान्तं साधयितुं दूषयितुं प्रवृत्तम् इति।' अत्रापि स्वमतस्थापने परमतदूषणे चानुकूलयुक्तेः शिक्षणमेव न्यायस्य कृत्यमिति स्फुटमुक्तं भगवता।

तस्मादान्वीक्षिक्याः पदार्थनिरूपण एव तात्पर्यं नात्मतत्त्वप्रतिपादन इत्यवश्यमास्थेयम्। मन्ये, दुर्दैवहतेऽस्मिन् देशे यदा देशोन्नतिकामनाविरहिणो जना अनध्यात्मविद्यां विद्यास्थानच्युतां चक्रुस्तदारभ्य अध्यात्मविद्यात्वमेव विद्यापद-प्रवृत्तिनिमित्तमभूत्। न्यायमञ्जर्यां तु जयन्तभट्टेन वार्ताशास्त्रं राजनीतिशास्त्रञ्च विद्यास्थानमपि नामानि। तादृशपरम्परा-प्रविष्टानामेव सम्मतं न्यायस्याध्यात्मविद्यात्वं प्रधानमित्यलं बहुना। **[इति]**

## प्रमात्वं परतो ग्राह्यम्

□ **राम सेवक झा**

मीमांसकाः ज्ञाननिष्ठप्रमात्वं ज्ञानग्राहकसामग्रीग्राह्यमभ्युपगच्छन्ति। तत्र प्रभाकरमते घटज्ञानं यथा घटं प्रकाशयति तथा स्वं स्वाश्रयमात्मानमपि प्रकाशयति। तन्मते सर्वं ज्ञानम् अयं घटो घटमहं जानामीत्याद्याकारकम्। एवञ्च ज्ञानग्राहक-चक्षुःसन्निकर्षादिघटितसामग्र्या ज्ञाननिष्ठज्ञानत्ववत्तन्निष्ठप्रमात्वमपि गृह्यते। कुमारिलमते ज्ञानमतीन्द्रियम्, तज्जन्या विषयनिष्ठज्ञानतया प्रत्यक्षया ज्ञानानुमितिर्भवति। एवञ्च तन्मते ज्ञानग्राहिका सामग्री लिङ्गपरामर्शादिघटिता, तयैव ज्ञाननिष्ठप्रमात्वं गृह्यते।

मुरारिमिश्रमते घटज्ञानं घटं प्रकाशयति, न तु स्वम्, किन्तु घटज्ञानज्ञानात्मकोऽनुव्यवसायो घटज्ञानं प्रकाशयति। एवञ्च ज्ञानग्राहिका व्यवसायादिघटिता सामग्री प्रमात्वग्राहिका।

मीमांसकानां त्वयमभिप्रायः— प्रमाणस्य परतो ग्राह्यत्वे प्रामाण्यानुमितौ तदनुमापकलिङ्गपक्षव्याप्त्यादिज्ञानेष्वपि स्वविशेष्यकप्रामाण्यानुमित्यर्थं प्रामाण्यविषयकानुमितिपरामर्शधाराया आवश्यकत्वे प्रामाण्यानुमितिपरामर्शयोरनवस्थापत्तेः किञ्चिज्ज्ञाननिष्ठप्रामाण्यमज्ञातमेव स्यात्। किञ्चिज्ज्ञाननिष्ठप्रामाण्यस्य स्वाश्रयग्राहकग्राह्यत्वाभ्युपगमे स्वाश्रयग्राहक-भिन्नाग्राह्यत्वविशिष्टस्वाश्रयग्राहकग्राह्यत्वहेतुना सर्वेषामेव प्रामाण्यानां स्वाश्रयग्राहकग्राह्यत्वं सिध्यति।

यद्यपि इष्टसाधनत्वज्ञाने प्रामाण्यनिश्चयो न प्रवृत्तिमात्रे हेतुः, कृष्यादिगोचरसकम्पप्रवृत्तौ व्यभिचारात्। नापि निष्कम्पप्रवृत्तौ, तत्र लाघवेनाप्रामाण्यज्ञानानास्कन्दितेष्टसाधनत्वनिश्चयत्वेन हेतुत्वात्। तथापि पूर्वोत्पन्नेष्टसाधनत्व-निश्चये प्रामाण्यनिश्चयाभावेतरप्रामाण्यसंशयजनकसकलकारणसमवधानानन्तरम् इदमिष्टसाधनमेव इत्यवधारणस्य निष्कम्पप्रवृत्तिकारणस्य प्रामाण्यसंशयनिवृत्तिद्वारा प्रामाण्यनिश्चयाधीनत्वेन क्वचित् प्रामाण्यनिश्चयोऽप्यपेक्ष्यते।

वस्तुतस्तु, ज्ञानग्राहकसामग्रीजन्याप्रामाण्याविषयकग्रहत्वव्यापकविषयिताप्रतियोगित्वमेव प्रमात्वे स्वतस्त्वम्। तेन नैयायिकमतेऽपि इदं ज्ञानं प्रमेति प्रमात्वानुमितिग्राहकसामग्र्या ज्ञानग्राहकत्वेन तज्जन्यज्ञानविषयत्वस्य प्रमात्वे सत्त्वेऽपि न तन्मते प्रमात्वे स्वतस्त्वसिद्धिः। इदं ज्ञानमप्रमेति अप्रामाण्यग्राहक-ज्ञानग्राहक-सामग्रीजन्यग्रहविषयत्वेऽपि प्रमात्वस्य न स्वतस्त्वहानिर्मीमांसकमते।

नैयायिकास्तु ज्ञाननिष्ठप्रमात्वं न स्वाश्रयग्राहकग्राह्यं किन्तु परत इत्यभ्युपगच्छन्ति। तेषां त्वयमाशयः— प्रामाण्यव्याप्यवत्तानिश्चयासमानकालीनज्ञानप्रामाण्ये सर्वानुभवसिद्धसंशयानुपपत्तिः प्रामाण्यस्य स्वाश्रयग्राहकसामग्री-ग्राह्यत्वे दुर्वारा, संशयं प्रति धर्मिज्ञानस्य हेतुतया धर्मिज्ञानजनकसामग्र्या प्रामाण्यग्रहेण संशयप्रतिबन्धात्। यद्यपि कोटिद्वयस्मरणकालेऽनुव्यवसायेन व्यवसायविनाशाद् व्यवसायधर्मिको मानसः संशयो न नैयायिकमतेऽपि सम्भवति, तथाप्यनुव्यवसायोपनीतव्यवसाये संशये बाधकाभावः।

ज्ञानातीन्द्रियत्ववादिनो भट्टस्य मतं न समीचीनम्, ज्ञातो घट इत्यादिप्रत्यक्षस्य ज्ञानविषयतावगाहितयोप-पत्तावतिरिक्तज्ञाततायां मानाभावात्।

प्रभाकरमतमप्यापातरमणीयमेव। स्वपूर्वकाले स्वज्ञानरूपविशेषणज्ञानाभावेनात्मांशे विशेषणतया स्वज्ञाना-सम्भवेन स्वप्रकाशवादासम्भवात्।

किञ्च घटादिप्रत्यक्षादौ पर्वतो वह्निमानित्याद्यनुमितिसामग्र्याः प्रतिबन्धकत्वस्य विषयभेदभिन्नत्वे गौरवात् वह्निमत्पर्वतादिभिन्नविषयकप्रत्यक्षादौ तादृशसामग्र्या एकमेव प्रतिबन्धकत्वं कल्प्यते लाघवात्। एवञ्च तादृश-सामग्रीकालीनेच्छाधीनपर्वतो वह्निमानिति लौकिकप्रत्यक्षादौ मितिमात्रादिमानासम्भवेन स्वप्रकाशवादासम्भवः।

अथ नैयायिकमतेन प्रामाण्यानुमितिप्रकारः प्रदर्श्यते। पूर्वं जलज्ञानं, ततः पिपासोस्तत्र प्रवृत्तिः, प्रवृत्तस्य जलाप्तिः, आप्तस्य पानम्, पानेन च पिपासानिवृत्तिः, तदनन्तरं जलज्ञाने सफलप्रवृत्तिजनकत्वेन प्रामाण्यमनुमीयते।

नच प्रामाण्यप्रसिद्धिं विना व्याप्त्यग्रहात् कथमनुमितिरिति शङ्क्यम्, यतः प्रथममप्रामाण्याभाव एव व्यतिरेकिणा साध्यते। तथा हि– अयं जलत्वप्रकारकानुभवः, जलत्वाभाववति जलत्वप्रकारको न, पिपासोपशमनसमर्थविशेष्यकत्वा-वच्छिन्नजलत्वप्रकारकनिश्चयत्वात्, यन्नैवं तन्नैवं, यथा जलाप्रमेति।

ननु प्रामाण्यवदप्रामाण्यमपि प्रथमं दुर्ज्ञेयमिति कथं तदभावानुमितिरिति चेन्मैवम्, यतो विषयबाधनिश्चयानन्तरं स्मृत्युपनीते भ्रमे वह्नित्वाभाववति वह्नित्वेन मम ज्ञानं वृत्तमित्यप्रामाण्यं मनसैव गृह्यते। यद्यप्यप्रामाण्यप्रसिद्धावपि तदभावरूपसाध्याप्रसिद्ध्या कथं व्यप्तिग्रह इत्यपि न युक्तम्, यतो यत्र भावभिन्नसाध्यव्यापकता हेत्वभावस्य गृह्यते तत्र प्रतियोगिनः साध्यस्य ज्ञानं विना तदभावज्ञानासम्भवात् साध्यप्रसिद्धिरपेक्ष्यते। यत्र तु भावव्यापकता हेत्वभावस्य तत्र भावग्रहे प्रतियोगिज्ञानानुपयोगेन न साध्यप्रसिद्ध्यपेक्षा। नच प्रवृत्त्युपयुक्तं जलत्ववति जलत्वप्रकारकज्ञानत्वरूपं प्रामाण्यमसिद्धमेवेति वाच्यम्, इह जलत्वप्रकारकं ज्ञानं जलत्ववद्विशेष्यकं, जलत्वाभाववदविशेष्यकत्वे सति सविशेष्य-कत्वात्, यन्नैवं तन्नैवं, यथा जलाप्रमेति व्यतिरेक्यन्तरात्तत्सिद्धेः।

न च प्रमाण्यज्ञानेऽप्यप्रामाण्यशङ्कया प्रामाण्यसंशयनिराकरणाय प्रामाण्यज्ञानेऽपि प्रामाण्यनिश्चयादेव प्रामाण्यनिश्चयः, पुनस्तत्राप्यप्रामाण्यशङ्कायाः प्रामाण्यनिश्चयापेक्षणेऽनवस्थेति वाच्यम्, चरमज्ञानप्रामाण्यस्य ज्ञानाभावेन कोटिस्मरणाभावेन विषयान्तरसञ्चारेण वा प्रामाण्यसंशयानवश्यम्भावात्। अन्यथा भट्टमतेऽपि प्रामाण्यस्य ज्ञानानुमितिग्राह्यत्वेन प्रभाकरमते च स्वनिष्ठप्रामाण्यस्य स्वग्राह्यत्वेऽपि स्वग्राह्यत्वस्य स्वरूपप्रामाण्याभ्यां बहिर्भूतत्वेन परग्राह्यत्वेऽनवस्था दुर्वारैव।

ननु तद्वति तत्प्रकारकज्ञानत्वरूपं प्रमात्वं ज्ञानग्राहकेण गृहीतमेवेति कथं नैयायिकमतेऽपि संशयसम्भवः। तथा हि इदं रजतमिति व्यवसायस्येदन्त्वरजतत्वविशिष्टेदं विषयकत्वे इदं रजतं जानामीत्यनुव्यवसाय एव मानम्, व्यवसायोल्लिखितप्रकारविशिष्टधर्मिणोऽनुव्यवसाये भानात्, अनुव्यवसायेन व्यवसायस्येदन्त्वरजतत्वविशिष्टविषयकत्वाविषयीकरणे व्यवसायगततादृशधर्मे प्रमात्वानुपपत्तिर्दुर्वारैव। एवं च धर्मिणि इदन्त्वरजतत्ववैशिष्ट्यमनुव्यवसायेन गृहीतमिति धर्मितावच्छेदकांशे स्वतः प्रामाण्यग्रहवद् रजतत्वविशिष्टविषयकत्वस्यापि गृहीतत्वेन स्वतःप्रामाण्यग्रहो दुर्वार इति चेदत्राहुर्मणिकृतः—

इदं रजतं च जानामीत्याकारो नानुव्यवसायस्य, बहिर्विषयके ज्ञाने मनसोऽस्वातन्त्र्यात्; किन्तु इदम् इदन्त्वेन रजतत्वेन जानामीत्याकारः, तत्रेदन्त्वरजतत्वे प्रकारिताविशेषणतया प्रकारितासंसर्गेण वा ज्ञाने भासते तत्प्रकारकज्ञानवत्त्व चात्मनि भासते। प्रकारित्वस्यानुव्यवसायाविषयत्वे प्रकारितावाचितृतीयार्थासम्भवात्। पुरोवर्त्यन्वितरजतत्वसमवायस्य तृतीयार्थत्वे व्यवसायस्येदं रजतत्वेनोल्लेखापत्तेः। एवञ्च धर्मिणीदन्त्वरजतत्वप्रकारकज्ञानविषयत्वे तादृशज्ञानवत्त्वे चात्मनोऽनुव्यवसाय एव मानमिति धर्मिणि व्यवसायस्य न निष्प्रकारकत्वम्। अतः पुरोवर्तिनि इदन्त्वरजतत्ववैशिष्ट्यं नानुव्यवसायविषय इति न प्रामाण्यं स्वतो ग्राह्यमिति।

यद्यपि उपनीतबहिर्विशेष्यको मानसप्रत्ययः सर्वसिद्ध एव तथापि तद्वत्त्वघटितप्रामाण्यसंशयात्तदाहितसंशयदर्शनिन बहिस्थयोः संशयविरोधिस्वभावपरस्परवैशिष्ट्यज्ञाने मनसोऽसामर्थ्यादित्यत्र तात्पर्यमवसेयम्।

नवीनास्तु तद्वद्विशेष्यकत्वे सति तत्प्रकारकज्ञानत्वमात्रं न तत्प्रामाण्यम्, रङ्गरजतयोरिमे रजतरङ्गे इत्यादिभ्रमसाधारण्यात्। किन्तु तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकज्ञानत्वम्। इत्थं च प्रथमानुव्यवसायेन खण्डशो दलद्वयग्रहणेऽपि अवच्छेद्यावच्छेदकभावाग्रहान्न तत् स्वतो ग्राह्यम्, द्वितीयानुव्यवसायादिना तद्ग्रहसम्भवात् तस्य परतो ग्राह्यत्वम्।

पूर्वोक्तानुमाने एतादृशप्रामाण्यस्याविषयत्वेऽपि जलत्वप्रकारकत्वरूपपक्षतावच्छेदकविशिष्टे जलत्ववद्विशेष्यकत्वरूपसाध्ये भासमानेऽसति प्रतिबन्धके पक्षतावच्छेदकसाध्ययोरवच्छेद्यावच्छेदकभावस्य गोचरत्वनियमेन जलत्वप्रकारकत्वावच्छिन्नजलत्ववद्विशेष्यकत्वभानमिति प्रामाण्यस्य परतो ग्राह्यत्वसिद्धिर्निष्प्रत्यूहेति प्राहुः।

न चानुमानस्य निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यग्रह इति तात्पर्यटीकाकृद्वाचस्पतिवचनविरोधः, प्रामाण्यस्य परतो ग्राह्यत्वादिति वाच्यम्, तस्य लिङ्गोपहितलैङ्गिकभानमतेऽनुमितेः वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्याद्याकारकतया वह्निव्याप्यधूमवति वह्निज्ञानत्वमनुमितेः प्रामाण्यव्याप्यमनुव्यवसायेनोपनयमर्यादया विषयीकृतमतो विशेषदर्शनान्न तत्राप्रामाण्यशङ्केति, प्रामाण्यनिश्चयादेवाप्रामाण्यशङ्काविरहादर्थं निश्चित्य निष्कम्पव्यवहार इत्यभिप्रायात्।

घटत्वप्रकारकज्ञाने पटत्वेन जानामीत्यनुव्यवसायाभावेन तत्प्रकारकज्ञानानुव्यवसायत्वस्य तत्प्रकारकत्वांशे ज्ञानांशे च प्रामाण्यव्याप्यत्वेन गृहीतत्वान्न तत्प्रकारकत्वांशे ज्ञानांशे च प्रामाण्यशङ्का। रजतत्वादिप्रकारकभ्रमानुव्यवसायस्यापि रजतत्वादिप्रकारकत्वाद्यंशे न भ्रमत्वमिति शम्। **[इति]**

# जयरामन्यायपञ्चाननस्य कालदेशनिर्णयः

□ के.ई. गोविन्दाचार्यः

*पदार्थमाला*द्यनेकप्रबन्धप्रणेता न्यायपञ्चाननः समस्तसंस्कृतवाङ्मयतत्त्वज्ञः दीधितिग्रन्थव्याख्याता, न्यायवैशेषिकयोरन्तिमः परिष्कर्ता, वादीभकण्ठीरवः जयरामोऽयं किमभिजनः ? कदा कुत्र जनिमलभत ? क्व वा शास्त्रमध्यैष्ट ? का वा अस्य परम्परा ? के वा भ्रातरः ? कियन्तो दायादाः ? कियत्कालं गैर्वाण्याः स्पृहणीयां सेवामकार्षीत् ? कदा वा लोकान्तरं प्राविशत् ? इत्यादिजिज्ञास्यमानविषये इतरेषामिव शृङ्खलाबद्धं किमपि प्रमाणं नोपलभ्यते यद्यपि, तथापीतस्ततोऽन्वेषणरतानामस्माकं करागतं प्रमाणं यथाकथञ्चित् निवेद्य तेन जयरामभट्टाचार्यस्य कालदेशनिर्णयं कर्तुं प्रयत्यते।

जयरामोऽयं वङ्गीयः, यतः पञ्चाननः, सार्वभौमः भट्टाचार्यः इत्यादय उपाधयः तेषामेव असाधारणाः। किं च[1] वङ्गदेशान्तर्गतनदियास्थ-कृष्णनगर इति स्थलस्य राजा रामकृष्णाख्य आसीत्। तस्य सभायां जयरामभट्टाचार्यः आस्थानपण्डितो व्यराजत इत्यस्मादपि वङ्गीय इत्यभ्यूहितुं शक्यते।

आत्मानं रामभद्रशिष्यं स्वकृत *तत्त्वचिन्तामणिदीधितिव्याख्यानगूढार्थविद्योतने* प्रारम्भे जयरामो जगाद। तथा हि—

**श्रीविश्वेशमशेषमङ्गलभवं भूयोऽभिवाद्यादरात्**
**मूर्ध्न्याधाय च रामभद्रचरणद्वन्द्वारविन्दद्वयम्।**
**गूढाख्यानघनावृता न विषयप्रोद्बोधिनी दीधितिः**
**तस्मात् श्रीजयराम एष तनुते गूढार्थविद्योतनम्॥** इति।

न्यायवाङ्मये रामभद्रनाम्ना प्रथितौ द्वौ विद्वांसावस्माकं कर्णपथमवातारिष्टाम्। तत्र प्रौढनैयायिकस्य प्रथितयशसो जगदीशभट्टाचार्यस्य गुरुः न्यायरहस्याद्यनेकग्रन्थरत्नानां रचयिता सार्वभौमाख्येनोपाधिना समलङ्कृतः एकः। तस्यैव जगदीशस्य[2] पौत्रः छात्रश्च तदीयशब्दशक्तिप्रकाशिकादिग्रन्थानां व्याख्याता सिद्धान्तवागीशाह्वयेनोपाधिना समुल्लसितः अपरः। अनयोर्द्वयोः कतरः जयरामस्य गुरुरित्यमुं प्रश्नं समाधातुं समुपस्थित एव प्रयत्नः विमर्शकाग्रेसराणाम्। दीर्घकालव्यवहितयोरुभयोरपि रामभद्रयोरन्तेवासित्वं जयरामभट्टाचार्यस्य नितरामसंभवीति वाचोयुक्तिरपि नापेक्ष्यते। अत्र न पक्षद्वयं वरीवर्ति।

तत्र[3] दिनेशचन्द्रभट्टाचार्याः 'जयरामन्यायपञ्चाननरचितायां *न्यायसिद्धान्तमालायां* गुरवस्तु इति वचनपूर्वकं यानि वाक्यानि उदाह्रियन्त तानि सर्वाण्यपि रामभद्रसार्वभौमस्य न्यायरहस्याख्ये ग्रन्थे दृश्यन्त इति तत्र गुरुशब्देन परामृष्टः रामभद्रसार्वभौम एव जयरामस्य गुरु' रिति निरणैषुः।

[4]गोपीनाथकविराजास्तु १७१४ वैक्रमे अर्थात् क्रैस्तवीये १६५७ वत्सरे वाराणसेयपण्डितैः प्रकल्पिते कस्मिंश्चित् व्यवस्थापत्रे जयरामस्य हस्ताक्षराणि साक्ष्यत्वेन दृष्टानि प्रमाणीकृत्य क्रैस्तवीये १६५७ वर्षे एव स्थितस्य तस्य जीवनकाल

इति निश्चित्य सप्तदशशताब्द्याः उत्तरार्धे स्थितस्य जयरामन्यायपञ्चाननस्य गुरुः जगदीशपौत्रः रामभद्रसिद्धान्तवागीश एव भवितुमर्हतीति; न तु षोडशशताब्द्याः चरमपादे स्थितस्य जगदीशस्य गुरुः रामभद्रसार्वभौम इति व्यवातिष्ठिपन्।

तथा च सप्तदशशताब्द्याः मध्यभागः १६२५-१६७५ जयरामस्य काल इति सिध्यति। अयमेव जयरामस्य जीवनसमय इत्यत्रानुपदं वक्ष्यमाणं प्रमाणत्रयमप्यनुकूलं भवति।

अलंकारशास्त्रमूलस्तम्भभूतस्य काव्यप्रकाशग्रन्थस्य व्याख्यातृषु अन्यतमैः प्रचण्डपण्डितैः सुगृहीतनामभिः भीमसेन दीक्षितैः[५] क्रैस्तवीये १६५५ वर्षे प्रणीते *अलङ्कारसुधासागर* नाम्नि *काव्यप्रकाशव्याख्याने* जयरामकृत *काव्यप्रकाश-व्याख्यायाः*[६] परामर्शः परिदृश्यते। तस्मात् सुव्यक्तमेतद्भवति यत् जयरामकृतकाव्यप्रकाशव्याख्यानं क्रैस्तवीय १६५५ तमवत्सरादनेकेभ्यः हायनेभ्यः प्रागेव निर्मितं, तथा प्रसिद्धिं च गतं यथा ग्रन्थकर्तुर्जीवनदशायामेवान्यैः ग्रन्थकारैः प्रामाणिकत्वेन परामर्शयोग्यं चेति। अस्य व्याख्यानस्य प्रणयनकालः क्रैस्तवीय १६४५ वत्सर इति संभावयितुं पारयामः।

यद्यपि *शब्दशक्तिप्रकाशिका*टीकाप्रारम्भे 'रामभद्रसार्वभौमविरचिता रामभद्रीटीका' इति दृश्यते, तथापि ग्रन्थान्ते पुष्पिकायां ( Colophon ) 'रामभद्रसिद्धान्तवागीशभट्टाचार्यविरचिता शब्दशक्तिप्रकाशिका प्रबोधिनी समाप्ता' इति दर्शनेन पूर्वमनवधानेन जातमिति भावयामः।

अपि च जयरामभट्टाचार्यसंदृब्धस्य *न्यायसिद्धान्तमाला*ख्यस्य न्यायग्रन्थस्य कस्याश्चिन्मातृकायाः लेखनकालः क्रैस्तवीयः १६७६ संवत्सर इति तल्लेखकेनैव निरदेशि। तथा च ग्रन्थरचनाकालः मातृकालेखनकालापेक्षया अवरतः पञ्चविंशत्या वर्षैः तावत् पूर्वतनः भवेत्। तदीयग्रन्थेषु *न्यायसिद्धान्तमालाया* एव चरमकालिकत्वं[७] मङ्गलदेवशास्त्रिभिः सप्रमाणं न्यरूपि।

[८]विश्वनाथन्यायपञ्चाननेन गुणत्वजातिसाधकमनुमानं यदुक्तं तदयं जयरामन्यायपञ्चाननः[९] *पदार्थमालायां* दूषयति। तद्दूषणं दिनकरभट्टः[१०] *मुक्तावलीव्याख्याने*ऽनूद्यार्थशः खण्डयति। एतेनासौ जयरामः विश्वनाथपञ्चाननानन्तरकालिकः तत्समकालिको वेति, दिनकरभट्टस्य प्राक्कालिक इति च सिध्यति[११]। दिनकरभट्टकृत *मुक्तावलीव्याख्यायाः* कस्याश्चित् मातृकायाः लेखनं क्रैस्तवीये १७०१ वर्षे कृतमिति लिलेख तल्लेखकः। सर्वस्याप्यस्य पर्यालोचनं पूर्वमुपन्यस्तं समयमेव द्रढयति।

एवं स्थिते 'गुरवस्तु' इति जयरामवचनं तु स्वगुरोः पितामहस्य जगदीशभट्टाचार्यस्य गुरुः रामभद्रसार्वभौम इति स्वगुरुपरम्परान्तःपातित्वात् सार्वभौमस्य स्वगुरुत्वेन निर्देशः; न तु साक्षादित्येव नेतव्यम्।

*न्यायसिद्धान्तमालाया* रचनावसरे काश्यां जयरामो न्यवसदिति[१२] सतीशचन्द्रविद्याभूषणाः तत्रात्यान्तिमपद्यमेव प्रदर्शयन्ति। तथाहि—

**[१३]सन्न्यायप्रतिपादिता प्रतिपदं सद्युक्तिमुक्तान्विता**
**दुस्तर्कोद्धतवारिदर्पशमनी विज्ञैकवेद्याशया।**
**निर्वाणाध्वविवेचिका सुमनसामन्तस्तमोनाशिनी**
**श्रीविश्वेशपदाम्बुजप्रणयिनी सिद्धान्तमालाऽस्तु मे।।** इति

**सन्दर्भ-संकेतः**

१. History of Indian Logic 477-478 pp.

२. **गुरुमिव गुरुमिह नत्वा तत्कृतशब्दशक्तिप्रकाशिकायाः।
श्रीरामभद्रसुकृती कुरुते टीकां मुदे सुधियः॥** ( शब्दशक्तिप्रकाशिका-2 p )

३-४. History of Indian Philosophy vol I p 437.

५. **संवद् ग्रहाभ्रमुनिभूज्ञाते मासि मधौ शुदि।
त्रयोदश्यां सोमवारे समाप्तोऽयं सुधोदधिः॥** ( काव्यप्रकाशसुधासागरे p 724 )

६. उक्तं च जयरामतर्कपञ्चाननैः–अथ भावसामान्यलक्षणम्। भावयति वासयति इति भावः। वासनाख्यो वर्णनीयमयी भवनयोग्य-व्यापारविषयः तदुक्तम्—'सुखदुःखादिभिभर्वैः भावस्तद्भावभावनम्' इति दिक्। ( काव्यप्रकाशसुधासागरे p 150 )

७. न्यायसिद्धान्तमालोपोद्घाते p 19.

८. मुक्तावल्यां प्रभोपेतायाम् p 651.

९. पदार्थमालायां p 208.

१०. दिनकरी 652 p.

११. History of India Philosophy 472 p.

१२. History of Indian Philosophy 473 p.

१३. न्यायसिद्धान्तमाला 174 p.

**[इति]**

# न्याये व्याप्तिस्तद्ग्रहोपायश्च

□ **उमारमणझा**

प्रदीपः सर्वविद्यानामित्यादिकौटिल्यवचनानुसारं न्यायदर्शनं सर्वविद्याप्रदीपत्वेन प्रशंसितमस्ति। तत्र प्रमाणादि-षोडशपदार्थानां तत्त्वज्ञानान्मुक्तिः भवतीति उक्तम्। षोडशपदार्थेषु प्रमाणं प्रथमः पदार्थो वर्तते। तत्र प्रत्यक्षानुमानोपान-शब्दाः प्रमाणानि इति चतुर्विधप्रमाणेषु अनुमानं द्वितीयं प्रमाणं वर्तते। अक्षपादः प्रत्यक्षनिरूपणानन्तरं लिखति—**अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टञ्चेति।**

अत्र तदिति प्रत्यक्षं परामृशति। तत्प्रत्यक्षं गृहीतव्याप्तिकस्य लिङ्गस्य पक्षे दर्शनि तत्पूर्वकारणं यस्य तत्पूर्वकं लिङ्गं प्रत्यक्षकारणकं ज्ञानं परोक्षलिङ्गगोचरं ज्ञानं येन जायते तदनुमानम्। लिङ्गपरामर्शोऽनुमानमिति। यदा प्रमाता पक्षे लिङ्गं पश्यति धूम एव अयं न वाष्पादिकमित्याकारकमसन्दिग्धं धूमादिलिङ्गदर्शनमुपैति तदा 'एकसम्बन्धिज्ञानस्य अपरसम्बन्धिस्मारकत्वात्' यत्र-यत्र धूमस्तत्र-तत्र वह्निरिति महानसादौ सपक्षे गृहीतपूर्वां व्याप्तिं स्मरति। लिङ्गदर्शनिन तां व्याप्तिं स्मरतश्चास्य तदनु नूनमेष वह्निमान् इत्याकारकं परोक्षलिङ्गगोचरज्ञानं येन उत्पद्यते तदेवानुमानं प्रमाणम्।

अनुमाने व्याप्तेः महत्त्वपूर्णं स्थानं वर्तते। लिङ्गपरामर्शोऽनुमानमित्यत्र व्याप्तिबलेनार्थगमकं लिङ्गं भवति। यथा धूमोऽग्नेर्लिङ्गं भवति। तत्र यत्र यत्र धूमस्तत्र तत्र अग्निरिति साहचर्यनियमो व्याप्तिः भवति। तस्यां गृहीतायामेव

व्याप्तौ धूमोऽग्निं गमयति। अतएव व्याप्तिबलेनाग्न्यनुमापकत्वात् धूमोऽग्नेर्लिङ्गम्। तस्य तृतीयं ज्ञानं परामर्शः। तथाहि प्रथमं तावन्महानसादौ भूयो भूयो धूमं पश्यन् वह्निं पश्यति। तेन भूयो दर्शनेन धूमाग्न्योः स्वाभाविकं सम्बन्धमवधारयति, यत्र धूमस्तत्राग्निरिति अयमेव स्वाभाविकः सम्बन्धः व्याप्तिः।

व्याप्तिग्रहाधीनजन्म हि अनुमानम्। यावल्लिङ्गस्य लिङ्गिना सह व्याप्तिर्न गृह्यते न तावदनुमानमुदेति। व्याप्तिश्च पुनस्त्रिविधा-विशेषव्याप्तिः सामान्यव्याप्तिः व्यतिरेकव्याप्तिश्चेति। धूमेन वह्नौ साध्ये यत्र यत्र धूमस्तत्र तत्र वह्निरिति हेतुतावच्छेदकसाध्यता-धूमत्व-वह्नित्वरूपविशेषमुखेन प्रवृत्ता या व्याप्तिः सा विशेषव्याप्तिः। शब्दादिना आकाशादौ साध्ये यो गुणः स शब्दाश्रयः इति हेतुतावच्छेदकसाध्यतावच्छेदकशब्दत्वाकाशत्वादिव्यापकगुणत्वद्रव्यत्वरूपसामान्य-मुखेन प्रवृत्ता या व्याप्तिः सा सामान्यव्याप्तिः। अपि च गन्धवत्त्वेन पृथिव्यामितरभेदे साध्ये यत्रेतरभेदाभावस्तत्र गन्ध-वत्त्वाभाव इति साध्याभाव-साधनाभावरूपव्यतिरेकमुखेन प्रवृत्ता या व्याप्तिः सा व्यतिरेकव्याप्तिः। तत्र विशेषव्याप्ति-कमनुमानं पूर्ववत्, व्यतिरेकव्याप्तिकमनुमानं शेषवत्, सामान्यव्याप्तिकं पुनः सामान्यतो दृष्टमिति मन्तव्यम्। उक्तञ्च—

**पञ्चलक्षणकाल्लिङ्गाद् गृहीतान्नियमस्मृतेः।**
**परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते॥**

यत्र कारणेन कार्यमनुमीयते तत्पूर्ववत्, यथा मेघोन्नत्या भविष्यति वृष्टिरिति। यत्र कार्येण कारणमनुमीयते तच्छेषवत्, यथा पूर्वोदकविपरीतमुदकं, नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा वा स्रोतसोऽनुमीयते भूता वृष्टिरिति। सामान्यतो दृष्टम्-व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति यथा आदित्यस्येति।

केशवमिश्रेण अन्वयव्यतिरेकभेदेन व्याप्तेः द्विविधमेव स्वरूपं स्वीकृतम्। तथा चोक्तम्—'अत्र पर्वतस्याग्निमत्त्वं साध्यम्, धूमवत्वं हेतुः, स च अन्वयव्यतिरेकी, अन्वयेन व्यतिरेकेण च व्याप्तिमत्वात्। तथाहि यत्र यत्र धूमवत्वं तत्र तत्र अग्निमत्त्वं यथा महानसे इत्यन्वयव्याप्तिः, महानसे धूमाग्न्योः सद्भावात्। यत्र अग्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रदे इति व्यतिरेकव्याप्तिः भवति। अन्वयव्याप्तौ यद् व्याप्यं तदभावोऽत्र व्यापकः, यच्च व्यापकं तदभावोऽत्र व्याप्य इति।'

व्याप्तिविषये आचार्यः भासर्वज्ञो न्यायसारे लिखति—'सम्यगविनाभावेन परोक्षानुभवसाधनमनुमानम्। स्वभावतः साध्येन साधनस्य व्याप्तिरविनाभावः। साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः, साधनसामान्याभावेन साध्य-सामान्याभावस्य व्याप्तिर्व्यतिरेकः।'

न्यायसूत्रकारेण अक्षपादगौतमेन व्याप्तिपदस्य उल्लेखो न कृतः। वात्स्यायनेनापि नामतः नैव उल्लेखो व्यधायि। अनुमानसूत्रव्याख्यानावसरे लिङ्गलिङ्गिनोः सम्बन्धदर्शनमित्यत्र सम्बन्धपदेन व्याप्तिरियमिति बोधः कार्यः।[१]

डा. एस.वी. रघुनाथाचार्यो लिखति—'लिङ्गलिङ्गिनोः सम्बन्धमिमं प्रथमतः वार्त्तिककारः व्याप्तिपदेन व्याज-हार।'[२]

प. बदरीनाथशुक्लेन लिखितं यत् वाचस्पतिमिश्रेण *न्यायतात्पर्यटीकायां* व्याप्तिपदस्य स्पष्टतया प्रयोगो व्यधायि। अयं च सम्बन्धः स्वाभाविकः नियतश्च यदि स्यात् तदा गमको भवति[३]। नियतः सम्बन्धो व्याप्तिरेव अनुमानाङ्गं भवितुमर्हतीति वाचस्पतिमिश्रस्याभिव्यक्तिः।

अयं लिङ्गलिङ्गिनोरविनाभावरूपः सम्बन्धः प्रतिबन्धो वा व्याप्तिरिति बौद्धानां मतम्। अयं सम्बन्धः तादात्म्य-तदुत्पत्तिभ्यामवधार्यते। तथा च कारिका—

**कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।**
**अविनाभावनियमोऽदर्शनान्न न दर्शनात्॥**

अर्थात् लिङ्गलिङ्गिनोरविनाभावनियमः कार्यकारणभावात् स्वभावाच्च इति द्वाभ्यां नियामकाभ्यां सिद्धोऽस्ति। यत्र कार्यकारणभावो भवति तत्र अविनाभावो भवति। धूमाग्न्योः कार्यकारणभावात् तत्र अविनाभावोऽस्ति।

कारिकाया अन्तिमे चरणे स्पष्टीकृतं यत् लिङ्गिनः अभावेन सह लिङ्गस्य अदर्शनं तथा च लिङ्गिनः सत्त्वलिङ्गदर्शनात् अविनाभावनियमो न भवति।

*तात्पर्यटीकाया*मस्य खण्डनं कृतं दृश्यते। तत्रोक्तम्–रसरूपयोः कार्यकारणभावः तादात्म्यसम्बन्धो वा नास्ति। तथापि रसाद्रूपानुमानं भवति। अतः रसे रूपस्याविनाभावः स्वीकार्यः। अतः रूपाभावेन रसस्य अदर्शनं रूपेण सह रसस्य दर्शनात् एव रसे रूपस्य अविनाभावोपपत्तिः भवति।

*वार्तिके* अनुमानस्य 'नान्तरीयकार्थदर्शनं तद्विदोऽनुमानम्' इति लक्षणस्य विवेचने नान्तरीयकः अविनाभावरूपेण विवेचितः।

उदयनाचार्यस्य *परिशुद्धौ* धूमवह्न्योः अनुमानाङ्गसम्बन्धः 'व्याप्तिः', 'अव्यभिचारः', 'प्रतिबन्धः', इत्यादिभिः शब्दैः स्पष्टीकृतो दृश्यते।

अतः नियतः सम्बन्धः व्याप्त्यपरपर्यायः अनुमानाङ्गं भवितुमर्हति।

जरन्नैयायिको जयन्तभट्टो लिखति—'यद्दर्शनात् यत्र यस्य प्रतीतिर्भवति, अस्ति कश्चन सम्बन्धः तयोरर्थयोः। स च सम्बन्धः तादात्म्यतदुत्पत्तिरूपः नहि संभवति।' साहचर्यमेव सम्बन्ध इति प्राचीननैयायिकानां मतम्। अयमेव सम्बन्धः अविनाभाव इत्युच्यते। *न्यायमञ्जर्याम्* अन्तर्व्याप्तिः बहिर्व्याप्तिरिति व्याप्तिविभागोऽपि कृतो दृश्यते। तथा चोक्तम्—

**अतो यद्दर्शनाद्यत्र प्रतीतिरुपजायते।**
**तयोरस्त्यर्थयोः कश्चित्सम्बन्ध इति मन्महे॥**
**तदात्मता-तदुत्पत्ती न श्रद्दधति तद्विदः।**
**साहचर्यं तु सम्बन्ध इति नो हृदयङ्गमम्॥**
**तस्मिन् सत्येव भवने न विना भवनं ततः।**
**अयमेवाविनाभावो नियमः सहचारिता[४]॥**

वैशेषिकदर्शनेऽपि[५] व्याप्तविचारोऽस्ति। साध्यसाधनयोः व्याप्तिः कणादेन 'प्रसिद्धि'रिति पदेन उक्ता दृश्यते। किन्तु अविनाभावपदेन व्याप्तिमेव उवाच प्रशस्ताचार्यः।

उदयनाचार्यः 'विधिस्तु अविनाभावग्रहणप्रकार' इति *किरणावल्या*मुक्त्वा व्याप्तिग्रहणप्रकारः विधिरित्युक्तवान्।

*न्यायमुक्तावल्यां* विश्वनाथेन व्याप्तिनिरूपणावसरे उक्तम्—

(१) **व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः[६]।**

वह्निमान् धूमादित्यत्र साध्यो वह्निः साध्यवान् महानसादिः तदन्यो जलह्रदादिस्तदवृत्तित्वं धूमस्येति लक्षण-समन्वयः।

**(२) अथवा हेतुमन्निष्ठविरहाप्रतियोगिना।**
**साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते॥**

हेतुमति निष्ठा वृत्तिर्यस्य स तथा विरहोऽभावः। तथा च हेत्वधिकरणवृत्तिर्योऽभावः तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यते। अतः हेत्वधिकरणवृत्तिर्योऽभावः तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरिति चिन्त्यम्।

अन्नंभट्टेन *तर्कसंग्रहे* यत्र यत्र धूमस्तत्र तत्र वह्निरिति साहचर्यनियमो व्याप्तिरिति लक्षणं प्रोक्तम्। अतएव साहचर्यं सामानाधिकरण्यमिति तस्य मतम्। अर्थात् हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगि साध्यसामानाधिकरण्यं व्याप्तिरिति। यथा धूमव्यापकवह्नि सामानाधिकरण्यं व्याप्तिरिति गोवर्धनो *न्यायबोधिन्यां* व्यलिखत्।

सा चेयं व्याप्तिः भूयो दर्शनग्राह्या न्यायदर्शनानुसारं द्विधा भिद्यते अन्वयव्यतिरेकभेदात्। भावयोः साहचर्यमन्वयव्याप्तिः, अभावयोः साहचर्यं व्यतिरेकव्याप्तिर्भवति। अन्वयः भावः व्यतिरेकस्त्वभावः।

अत्र *न्यायमञ्जरी*कारो जयन्तभट्टो लिखति—

**भावसामान्ययोर्यद्वत् तथैव तदभावयोः।**
**भावयोः साहचर्यं यदन्वयं तत्प्रचक्षते॥**
**व्यतिरेकं तु मन्यन्ते साहित्यं तदभावयोः।**
**इयानेव विशेषस्तु भावयोर्यादृशी ययोः॥**
**व्याप्यव्यापकता सैव व्यत्यस्ता तदभावयोः**[७]**॥**

*शास्त्रदीपिका*यामन्यत्र च कुमारिलभट्टानुयायिभिः नियतसम्बन्धः व्याप्तिरिति प्रत्यपादि[८]। हेतुसाध्ययोः नियतः सम्बन्धः संयोगः समवायः एकार्थसमवायः कार्यकारणभावश्चेत्यनुमानाङ्गमिति एतेषां मतम्।

*मानमेयोदये*ऽपि स्वाभाविकः सम्बन्धः व्याप्तिरिति उक्तम्। अत्र स्वाभाविकत्वम् उपाधिराहित्यम् इति ज्ञेयम्। उपाधिस्तु साध्यस्य साक्षात्प्रयोजकं हेत्वन्तरम् इति उक्तम्[९]।

अत्रैव *मीमांसानये* प्रभाकरानुयायिभिः अनुमानलक्षणघटकज्ञातसम्बन्धस्येति पदेनैव व्याप्तिरभिहिता। शालिकनाथमतेन[१०] अव्यभिचारो हि व्याप्तिः। एतावता निरुपाधिकसम्बन्धः व्याप्ति इति तन्मतेऽपि स्वीक्रियते।

एवंप्रकारेण कश्चन *विलक्षण*सम्बन्धो व्याप्तिः भवति यः व्याप्यव्यापकयोर्मध्ये वर्तमानो भवति। यथा पर्वतो वह्निमान् धूमवत्त्वात् इत्यत्र धूमवह्न्योः व्याप्यव्यापकभावः सम्बन्धो भवति। सर्वत्र साध्यं व्यापकं साधनं च व्याप्यमिति ज्ञेयम्।

अयमेव विलक्षणः सम्बन्धः गम्यगमकभावः, लिङ्गलिङ्गिसम्बन्धः, साध्यसाधनभावः, अविनाभावः, नियमः इत्यादिपदैरपि अभिधीयते।

सांख्ययोगे 'प्रतिबन्ध' पदेन, काणादेन 'प्रसिद्धि' पदेन जयन्तभट्टेन 'साध्याविनाभाविता'पदेन, नव्यनैयायिकै- 'र्व्याप्ति'रितिपदेन उक्तम्। व्याप्तिपदस्य प्रयोगे भाट्टानां प्राभाकराणां च मतं नैयायिकैः सह न विरुद्धमस्ति। व्याप्तिर्भूयोदर्शनजन्येति यन्न्याये उक्तं तत्रापि मीमांसकानां नास्ति विप्रतिपत्तिः। तत्र केवलं *प्रभाकरविजय*कर्त्रा नन्दीश्वरेण—'सकृद्दर्शनगम्यैव व्याप्ति'रिति प्रतिपादितम्। *प्रकरणपञ्चिकायां* शालिकनाथेन भूयोदर्शने अनास्था मनाक् सूचितेव प्रतीयते।

**व्याप्तिग्रहोपायः**

अक्षपादगौतमस्य प्रस्थाने न्यायचतुर्ग्रन्थिकायां व्याप्तिज्ञानस्यैव 'व्याप्तिग्रह' इति व्यपदेशो दृश्यते। अत्र चार्वाकाणां मते व्याप्तिज्ञानोपायाभावात् अनुमानमेव न सिद्ध्यतीति। अतएव अनुमानप्रमाण्यौपयिकव्याप्तिज्ञाननिरूपणार्थं तदुपायः प्राचीननैयायिकैः नव्यनैयायिकैश्च महता प्रयासेन प्रदर्श्यते।

*न्यायमञ्जरीकारेण* जयन्तभट्टेन व्याप्तिग्रहोपायपदं प्रथमतः प्रयुक्तम्। 'तस्मान्नियमवत् तद्ग्रहणोपायोऽप्यस्तीति सिद्धम्।'[११] तेन तत्र व्यभिचारज्ञानविरहसहकृतसहचारदर्शनस्यैव व्याप्तिज्ञानोपायत्वं स्वीकृतम्। 'व्यभिचारज्ञानविरह-सहकृतं सहचारदर्शनं व्याप्तिग्राहकम्। ज्ञानं निश्चयः शङ्का च। सा च क्वचिदुपाधिसन्देहात्, क्वचिद्विशेषादर्शनसहित-साधारणधर्मदर्शनात्; तद्विरहश्च क्वचित् विपक्षबाधकतर्कात्। क्वचित् स्वतः सिद्ध एव।' (गादा. ६२) इति गङ्गेशोपाध्यायेन *तत्त्वचिन्तामणौ* प्रत्यपादि। अर्थात् नैयायिकमते व्यभिचारनिश्चयाभावसहकृतेन सहचारदर्शनेन व्याप्तिज्ञानं भवति। अर्थात् व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिं ग्राहयति इति सिद्धम्।

*कारिकावल्यां* विश्वनाथोऽपि आह—

**व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा।**
**हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः॥**

अर्थात् व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे हेतुरिति वाच्यम्। व्यभिचाराग्रहस्य प्रतिबन्धकाभावविधया कारणत्वम्। अन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि कारणता। भूयोदर्शनं तु न व्याप्तिग्रहे हेतुः। व्यभिचारविरहे सकृद्दर्शनेनापि व्याप्तिज्ञानोदयात्। भूयोदर्शनं तु व्यभिचारशङ्काविधूननद्वारा सहकारि भवतीति मुक्तावलीकारः (पृ ७८-८०)।

म.म. केशवमिश्रोऽपि लिखति—'तथा च सत्युपाधिभावजनितसंस्कारसहकृतेन भूयोदर्शनजनितसंस्कारसहकृतेन साहचर्यग्राहिणा प्रत्यक्षेणैव धूमाग्न्योः व्याप्तिरवधार्यते'। (तर्कभाषा, ३५)

व्याप्तिग्रहः व्याप्तिज्ञानमिति भाट्टमतेऽपि स्वीक्रियते। तच्च भूयोदर्शनगम्यमिति भाट्टमतम्। 'यदि भूयो-दर्शनमात्रं तत्र कारणमित्युच्यते तर्हि मैत्रीतनयत्वश्यामत्वयोरपि सत्वात् व्यभिचारः। अतः न केवलं भूयोदर्शनं किन्तु प्रमाणोत्पत्त्यनुकूलतर्कोऽपि तत्र कारणमिति निश्चितम्।' (मानमेयोदयः, ३४)। एवं च तर्कसहकृतं भूयोदर्शनं व्याप्तिज्ञानं जनयति इति तस्य व्याप्तिज्ञानजनकत्वं सूपपादम्। तथा चोक्तं मानमेयोदये—'तदेवं तर्कसहायेन भूयोदर्शनेनैव निरुपाधिकसम्बन्धोऽवधार्यते।

**भूयोदर्शनतः शक्या दृश्योपाधिनिराक्रिया।**
**अदृश्योपाधिशङ्का तु तर्कैरेव निरस्यते॥** (मानमेयादेयः, ४६)

व्याप्तिग्रहोपायश्च व्यभिचाराग्रहः सहचारग्रहश्च। अर्थात् व्यभिचारज्ञानविरहसहकृतसहचारज्ञानं व्याप्तिग्राहक-मिति सिद्धम् (भा.चि. २५)। न केवलं भूयोदर्शनं हेतुर्भवितुमर्हति, व्यभिचारस्मरणाभावे सकृद्दर्शनेनापि व्याप्ति-ज्ञानोदयात्। व्यभिचारशङ्कानिवर्तकतया भूयोदर्शनस्य क्वचिदुपयोगः। क्वचिच्च तर्क एव व्यभिचारशङ्कानिवर्तकः।

अथ संनिकृष्टयोः महानसीयवह्निधूमयोः सहचारग्रहेऽपि अन्येषां वह्निधूमानां सन्निकर्षाभावात् सहचारप्रत्यक्षाभाव इति निखिलेषु धूमेषु कथं नाम व्याप्तिर्गृह्यत इति चेदुक्तम्—सामान्यलक्षणाप्रत्यासत्या अलौकिकसंनिकर्षवशात् निखिल-वह्निधूमसहचारप्रत्यक्षस्य निखिलधूमेषु व्याप्तिग्रहः संभवतीति न कापि अनुपपत्तिः (भा.चि. २७)।

अतः भूयोदर्शनसहकृततर्कज्ञानं व्यभिचारज्ञानविरहसहकृतसहचारज्ञानं व्याप्तिं ग्राहयतीति संक्षेपः।

व्याप्तिग्रहः व्याप्तिज्ञानम्, अव्यभिचारः व्याप्तिरिति प्राभाकरा वदन्ति। अव्यभिचारः असकृद्दर्शनगम्य इति *बृहत्याम्*मुक्तम्।

किन्तु प्राभाकरैकदेशी नन्दीश्वरः *प्रभाकरविजये* सकृद्दर्शनगम्यत्वमेव व्याप्तिलक्षणं प्रत्यपीपदत् (प्रभाकर वि., ९८)। भूयोदर्शनमनावश्यकमिति असौ लिखति—'न तत्रापि भूयोदर्शनस्य ग्राहकत्वम्। अतः न भूयोदर्शनस्य तत्त्वग्रहणे उपयोगः।'

अधुना समीक्षात्मको विचारो विधीयते। व्याप्तेः ग्रहः व्याप्तिज्ञानं भवति। तस्मिन् उपायः व्याप्तिग्रहोपायः भवति। अथवा व्याप्तेः ग्रहणं व्याप्तिग्रहणम्। तस्मिन्नुपायः व्याप्तिग्रहोपायः। यथाकथंचित् ग्रहो वा ग्रहणं वास्तु। उभयमपि ज्ञानपरमेव। नव्यन्यायग्रन्थे व्याप्तिग्रहः, व्याप्तिग्रहोपाय इति प्रयोगाः ग्रहपदघटिता एव समुपलभ्यन्ते। जयन्तभट्टस्तु न्यायमञ्जर्यां व्याप्तिग्रहणोपायइति प्रायुङ्क्त।

व्याप्तिग्रहनिरूपणावसरे नैयायिकमतमेव भाट्टैः प्राभाकरैश्च स्वीकृतम्। केवलं नन्दीश्वर एव भूयोदर्शनमनावश्यकमिति अवोचत्। नैयायिकैरपि भूयोदर्शनस्य व्याप्तिनिश्चये न कारणत्वमभ्युपगतम्। किन्तु व्यभिचारशङ्काविधूननार्थमेव तदङ्गीकृतम्। व्यभिचारास्मृतौ तैरपि भूयोदर्शनापेक्षां विनैव सकृद्दर्शनेनैव व्याप्तिग्रहः क्वचिद्भवतीति उक्तम् (मुक्ता. ७६७)। अत्र भूयोदर्शनं नाम भूयस्सु स्थानेषु साध्यसाधनसहचारदर्शनम्, भूयसां साध्यानां साधनानां सहचारदर्शनं, साध्यसाधनसहचारविषयकबहुत्वदर्शनं चेत्यभिप्रायः। कदाचित् भूयो दर्शनादपि शङ्का नापगच्छति। तत्र बाधकतर्कः विपक्षे प्रदर्शनीयः। यत्र शङ्कैव नास्ति तत्र न तर्कस्यापि अपेक्षेत्यवगन्तव्यम्। एवं तर्हि भूयोदर्शनविषये कुत आग्रह इति चेत् उच्यते, तस्य व्याप्तिनिश्चयं प्रति अकारणत्वे क्वचित्तत्प्रयोजकमिति तस्मिन् आदर इति दिनकरभट्टः (७६८)। अतः भूयोदर्शनमपि आवश्यकमेव। एवं च भाष्याद्युक्तरीत्या व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनमेव व्याप्तिग्राहकमिति सिद्धान्तः। अत्र नैयायिकमतमेव भाट्टैः प्राभाकरैश्च स्वीकृतमिति तत्तद्ग्रन्थपरिशीलनेन निश्चीयते। सामान्यलक्षणाप्रत्यासत्या च निखिलवह्निधूमसहचारप्रत्यक्षस्य सुलभतया प्रत्यक्षेणैव व्याप्तिग्रहः सुलभ इति विज्ञेयम्। व्याप्तिग्रहोपायविषये प्राचीनन्यायग्रन्थापेक्षया नव्यन्यायग्रन्थेषु विस्तरेण प्रतिपादनं दृश्यते इति दिक्।

## सन्दर्भ-संकेतः


१. 'तत्पूर्वक'मित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनं लिङ्गदर्शनञ्चाभिसम्बध्यते। लिङ्गलिङ्गिनोः सम्बन्धयोर्दर्शनेन लिङ्गस्मृतिरभिसम्बध्यते स्मृत्या लिङ्गदर्शनेन चाप्रत्यक्षोऽर्थोऽनुमीयते॥—न्या.भा. १.१.५।

२. न्यायमीमांमादर्शनयोः प्रमाणविचारः। पृ. १२२।

३. तात्पर्यटीका, पृ. ३०१।

४. न्यायमञ्जरी, पृ. १२१।

५. वैशेषिकदर्शनम्, ३.१.१५।

६. न्यायमुक्तावली।

७. न्यायमञ्जरी, पृ., १२३।

८. शास्त्रदीपिका, पृ., ७०।

९. मानमेयोदयः, पृ., २६।

१०. ऋजुविमलापञ्चिका-बृहती, ९५।

११. न्यायमञ्जरी, पृ. १२२-१२३।


[इति]

# दिक्काल-निरूपणम्

□ डॉ० देवनारायण झा

सुविदितमेवास्ति यत् किमपि विप्रतिपत्तिवाक्यमधिकृत्य शास्त्रे कश्चन विचारः प्रवर्तते तर्हि न्यायसङ्गतम् भवति। अत एव महामहोपाध्याय-गोकुलनाथोपाध्यायैः दिक्कालनिरूपणग्रन्थे प्रथमतः दिक्कालौ न परमात्मतदात्मानाविति प्रतिज्ञावाक्यं, विधिवाक्यं, विप्रतिपत्तिवाक्यं वा प्रदर्शितम्। तत्र विधिकोटिः महानैयायिकस्य रघुनाथशिरोमणेः, निषेधकोटिस्तु पण्डितप्रवरस्य गोकुलनाथोपाध्यायस्य। अस्तु, जानन्त्येव विद्वांसो यत् कस्यचिद् वस्तुनः सिद्धिः कथं भवति–इति जिज्ञासायां 'प्रतीतिव्यवहाराभ्यामर्थसिद्धिः' इदमेवोत्तरं भवति जिज्ञासानिवृत्तये। यदि दिक्कालौ, आकाशो मनो वा ईश्वरात्मकत्वं भजते तर्हि नवद्रव्याणीत्यत्र पञ्चैव द्रव्याणि स्युः। एवञ्च प्रतीतिव्यवहारबलात् आकाशः ईश्वरः दिक्कालौ, ईश्वरात्मकाविति साधनीयौ भवेताम्। परञ्च विचार्यताम् यदि दिक्कालौ ईश्वरादभिन्नौ स्याताम् तर्हि ईश्वर सकाशादेवातीतादिव्यवहारः स्यात्। यद्यपि ईश्वरः कार्यमात्रं प्रति साधारणकारणमस्ति, तथापि तत्स्वीकारेणैव अतीतादीनां यो व्यवहारो भवति स न स्यात्। यतो हि अत्र घटः, इदानीं घटः, अयं ज्येष्ठः, अयं कनिष्ठः, इदं दूरम्, इदं समीपम् इत्यादिव्यवहारेषु किमपि अन्यत्कारणमवश्यमेव कल्पनीयं भवति। परञ्चैतद्विषये इदमवश्यमेव वक्तव्यं भवति यद् दीधितिकारः महान् नैयायिक आसीत्। तेनैव उक्तम् 'अस्य तु किमपि रहस्यं केचन विज्ञातुर्महन्ति सुधियः इति'। एतद् वाक्येन इदं ज्ञातं भवति यद् दीधितिकारोऽन्तःप्रविष्टः नैयायिकः आसीत्। गोकुलनाथोपाध्यायोऽपि नैयायिकप्रवर एव आसीत्। तर्हि अनयोर्मध्ये मतवैमत्यं कथं सञ्जातमिति। अत्र विषये, वयं मन्यामहे- भवतु नाम दीधितिकारो महानैयायिकः परञ्च दिक्कालौ परमात्मतदात्मानौ–इति पक्षस्तु तन्मते वेदान्तमतमेवाधिकृत्य प्रवर्तितः। एकः पक्षः वेदान्तमधिकृत्य, अपरस्तु न्यायमधिकृत्य। उक्तञ्च सूत्रकारैः—'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः' इति। एतद् वादमधिकृत्य दिक्कालनिरूपणग्रन्थे विचारः प्रवर्तितः इति सम्यक् प्रतिभाति। अस्तु, घटो भविष्यतीति वाक्यात् न तावदभावमात्रस्य बोधो भवति। अपितु उक्तवाक्यात्, प्रागभावस्यैव बोधो भवति। अर्थात् घटो भविष्यतीति वाक्यात् घटः प्रागभावप्रतियोगीत्येव ज्ञातं भवति। घटो ध्वस्तः इतिवाक्यादपि न अभावमात्रस्य बोधो भवति। किन्तु घटो नष्ट इति वाक्यात् घटः नाशप्रतियोगी–इत्येव बोधो भवति। तथैव–अत्र घट इति वाक्यात् साधारणतया एतद्देशवृत्तिर्घटः इत्येव बोधो भवितुमर्हेत्। एतद्देशो न तावन्महादेशः, अपितु खण्डदेश एव। नहि कोऽपि पुरुषः महादेशमधिकृत्य अत्र घटः इति वाक्यं प्रयुङ्क्ते। एवं इदानीं घटः इति वाक्यादपि एतत् कालवृत्तिर्घटः इत्येव बोधो भवति। नहि महाकालमधिकृत्य कोऽपि पुरुषः इदानीं घटः तदानीं घटः इत्यादिकं वाक्यं प्रयुङ्क्ते। तत्र को हेतुरिति विचारणीय एव। नहि एतत्प्रतीतौ–अर्थात्, अत्र घटः, इदानीं घटः, इत्यादिषु प्रतीतिषु विषयतया महादेशस्य महाकालस्य वा प्रयोजनम् अस्ति। तर्हि अस्यां स्थितौ न्यायमते, अर्थात् उपाध्यायमते महादेशस्य महाकालस्य वा कथं सिद्धिः स्यात् इति विचारणीयो विषयः। अत एव परापरत्वबुद्धेः यत् असाधारणं कारणं स कालः इति नैयायिकैरभ्युपगम्यते। अर्थात् परापरत्व-साधनार्थं महाकालस्य परमावश्यकत्वमस्ति। तथा चात्र अनुमानाकारस्तु नैयायिकैः प्रत्यदर्शि। तथाहि परापरत्वे असमवायिकारणसंयोगजन्ये भावत्वे सति कार्यत्वाद्

घटवत् इत्यनुमानेन महाकालस्य सिद्धिर्भवति। अत्रायं भावः देवदत्ताद् यज्ञदत्तः ज्यायान् इति यज्ञदत्ते कालकृतं परत्वं तच्च कथमित्यत्र युक्तिमाह पूर्वक्रिया स्वसमवायिसंयुक्तसंयोगसम्बन्धेन यथा देवदत्ते तथा यज्ञदत्तेऽपि तिष्ठति। तथा हि स्वं पूर्वक्रिया तत्समवायी सूर्यः तत्संयुक्तो महाकालः तस्य महाकालस्य यथा सूर्ये संयोगस्तथा मांसपिण्डरूपे यज्ञदत्ते देवदत्ते च। अतः किंप्रयुक्तं वैलक्षण्यम्। एकस्मिन् मांसपिण्डे ज्येष्ठत्वम्, अपरास्मिन् च मांसपिण्डे कनिष्ठत्वम् इति प्रश्ने इदमेवोत्तरं भवति यत् यत्र मांसपिण्डे बहुतरसूर्यक्रियया सह संयोगः तत्र ज्येष्ठत्वम्। यत्राल्पतरसूर्य क्रियया सह मांसपिण्डस्य संयोगः तत्र तत्र कनिष्ठत्वम्। एवञ्च परापरत्वबुद्धेरसाधारणं कारणं कालं विना अयं ज्येष्ठः, अयं कनिष्ठः इति व्यवहारो न स्यात्। परञ्च विचार्यताम्, यथा मध्ये विभुरूपः एकः महाकालः कल्प्यते तथा आकाश एव कथं न कल्पितो भवति। परञ्च कथनमिदमधुना न समीचीनं प्रतिभाति, यतोहि शक्तिग्रहस्तु व्याकरणादितः प्रथितो विद्यते। तथाहि—

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥ मु० श०**

इति शक्तिग्राहकेषु प्रमाणेषु शब्दप्रयोगात्मकस्य व्यवहारस्य सर्वापेक्षया प्राधान्यमस्ति। शब्दात्मकं व्यवहारमधिकृत्य न मानवा एव पशवोऽपि व्यवहारं कुर्वन्ति, तदनुसारं प्रवर्तन्ते चेष्टन्ते च। स शब्दः कुत्र तिष्ठति, तस्य किं कारणम्, स नित्यो वाऽनित्यो वा इत्यादिप्रश्नान् अधिकृत्य शास्त्रेषु दार्शनिकैः बहु विचारः कृतः। अत्र सर्वेषामैकमत्यं विद्यते यत् किं नाम आकाशत्वम्? इति प्रश्ने उत्तरं भवति यत् शब्दाश्रयत्वमाकाशत्वमिति। एवञ्च उपर्युक्तपर्यालोचनया शब्दः द्रव्यसमवेतः गुणत्वाद् इत्यनुमानात् पूर्वं शब्दे गुणत्वं साधनीयं भवति। नहि शब्दस्य गुणत्वं विना शब्दे द्रव्यसमवेतत्वं साधयितुं कोऽपि प्रभवेत्। अत एव विश्वनाथपञ्चानप्रभृतिभिः तार्किकप्रवरैः शब्दो गुणः चक्षुर्ग्रहणायोग्य बहिरिन्द्रियगाह्यजातिमत्त्वात् इत्यनुमानेन शब्दे गुणत्वं साधितम्। ततः शब्दः द्रव्यसमवेतः गुणत्वाद्, इत्यनुमानेन शब्दे गुणत्वं साधितम्। अनेनानुमानेन शब्दे द्रव्यसमवेतत्वस्य भवतु नाम सिद्धिः परन्तु द्रव्यपदेन किं द्रव्यं ग्राह्यं भवति। द्रव्यं मूर्तम् अमूर्तञ्च, किं वा विभुः, अविभुश्च द्विविधं भवति। तथा च शब्दो न स्पर्शवत् विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकप्रत्यक्षत्वात्, सुखवत् इत्यनुमानेन पृथिव्यादिचतुष्टयस्य शब्दाधिकरणत्वं सिद्धं भवति। एवञ्च मूर्तपदार्थे अर्थात् पृथिव्यादिचतुष्टये शब्दो न समवायेन तिष्ठति–इति सिद्धं भवति। यदि शब्दस्याधिकरणं विभुः स्यात् अर्थात् अमूर्तं स्यात् तर्हि अमूर्तपदेन आकाशत्वेन ग्रहीतुं शक्येत। यतो हि उक्तं मुक्तावलीकारैः—शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात् रूपवत्। शब्दो न आत्मविशेषगुणः बहिरिन्द्रियग्राह्यत्वात् इत्याद्यनुमानेन परिशेषानुमानेन आकाश एव शब्दाश्रयः सिद्धो भवति। अत एव आकाशस्य शब्द एव विशेषगुणः। तादृशविशेषगुणाश्रयत्वेन न वा दिशः न वा कालस्य सिद्धिर्भवति।

अथवा आकाशस्य पार्थक्यपरिचयविषये परार्थानुमानमुच्यते। शब्दो द्रव्यसमवेतः जन्यसत्त्वादगुणत्वाद् वा। इत्यनुमानप्रयोगे न्यायघटकतया वक्तव्ये उदाहरणे प्रतिभासमानाया व्याप्तेः परिचयानन्तरमुपनयदशायाम् यदा द्रव्यसमवेतत्त्वाव्याप्यजन्यसत्त्ववान् शब्दः, इत्याकारकपरामर्शविसरे शब्दे मूर्तसमवेतत्त्वम् बाधिततया ज्ञातं भवति। अतः निगमनान्तरं शब्दो विभुसमवेतः इत्यनुमितिः सुशका। परन्तु यावत् पर्यन्तं विभुमधिकृत्य जिज्ञासितविधेयविशेषणं स्फुटं न भवति तावत् पर्यन्तं तर्करसिकाः पूर्वोक्तानुमितेः पूर्णतां न मन्यन्ते। अतः पूर्णतार्थम् तार्किकाः युक्तिम्, लाघवम्, गौरवञ्च कुत्र कथमिति परिशीलयितुं चेष्टन्ते। तत्रेयम् अवधारणा यद् शुद्धव्यापकतावच्छेदकावलीढयत् किञ्चित्धर्मिव्यावृत्तो यो धर्मः पर्यवसितविधेयतावच्छेदकावच्छेदेन गृह्यते स धर्मः विधेयविशेषणतयाभासते–इति युक्तिः स्मृतिपथं

गच्छति। तदनुसारं शुद्धव्यापकतावच्छेदकद्रव्यसमवेतत्वकुक्षौ द्रव्ये यदा इतरपरिशेषानुमानेन विधेयतावच्छेदैकतया विभुत्वं प्रतिभाति तदा शब्दे विभुसमवेतत्वं सिद्ध्यति। अनन्तरश्चोक्तविधेयघटकविभुत्वावच्छेदेन द्रव्यसमवेतत्त्वघटक-तावच्छेदकद्रव्यत्वावच्छिन्नधर्मिव्यावृत्तो यो धर्मः स्यात् स एव उपर्युक्तानुमितौ साध्यघटकतया भासमानः विभौ निर्णीतो भवति। यद्यत्र विभौ परमात्मत्वं भासते–इत्युच्यते तर्हि तत्परमात्मत्वं विभुत्वावच्छेदेन नास्ति। जीवात्मनि परमात्मत्वा-भावात्। अतः उक्तानुमितौ साध्यघटकतया विभौ परमात्म तादात्म्यं न भवति। यदि च विभुत्वावच्छेदेनात्मत्त्वं विधेय-विशेषणतया मन्यते तर्हि अपि विभौ आत्मा अभेदेन भातुं नार्हति आत्मनां बहुत्वगौरवात्। अतः उपर्युक्तानुमाने विधेयतया प्रतिभातः विभुः ईश्वरात्मनः अतिरिक्तःसिद्धः। अस्मादेव कारणात् स विभुः आकाशत्वेन सिद्ध्यति। एवञ्च शब्दः आकाशविभुसमवेतः इति सिद्धम् भवति। **[इति]**

# मण्डन-संन्यास-समीक्षा

□ **वैद्यनाथ झा**

अद्वैतवेदान्तस्येतिहासे शङ्कराचार्य-मण्डनमिश्रमहोदययोर्नाम सुविख्यातमस्ति। एवं मण्डनमिश्रग्रन्थानां ब्रह्मसूत्र-शाङ्करभाष्यस्य च व्याख्याता वाचस्पतिमिश्रोऽपि सुप्रसिद्ध एव। तत्र मण्डनमिश्रस्य आद्यशङ्कराचार्यात् शास्त्रार्थे पराजयेन संन्यासग्रहणं सुरेश्वरनाम्ना प्रख्यातिश्चेति शङ्करदिग्विजयादिग्रन्थेषु माधवाचार्यादिभिः प्रतिपादितम्। तदिदं प्रतिपादनं ग्रन्थविरोधः, युक्तिविरोधः, परम्पराविरोधः, इतिहासविरोधश्चेति चतुर्भिः प्रकारैः खण्डितं भवति। तद्यथा—

**१. ग्रन्थविरोधः**

मण्डनमिश्रस्य *ब्रह्मसिद्धिः*, शङ्कराचार्यस्य ब्रह्मसूत्र*शाङ्करभाष्यम्;* सुरेश्वराचार्यस्य *नैष्कर्म्यसिद्धिः, तैत्तिरीय-भाष्यवार्तिकम्, बृहदारण्यकभाष्यवार्तिकं* च; वाचस्पतिमिश्रस्य **भामती** (शाङ्करभाष्यस्य टीका)— इत्येते ग्रन्थाः सन्ति तावदद्वैतवेदान्ते प्रसिद्धाः। एतेषां ग्रन्थानामनुशीलनेन मण्डनशङ्करयोः सिद्धान्ते भूयान् भेदोऽवगम्यते। द्वित्राणि उदाहरणानि तावदिह दीयन्ते—

(क) शङ्करमतानुसारम् अविद्या(माया) परमेश्वरस्य (ब्रह्मणः) अव्यक्तनाम्नी बीजशक्तिः, या परमेश्वर-मेवाश्रित्य सन्तिष्ठते। अनयैव च स जगतः सृष्टिं करोति। तदिदमुक्तं भगवता शङ्करेण **तदधीनत्वादर्थवत्** (१।४।३) इति ब्रह्मसूत्रव्याख्यायाम्—

**अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया** इति।

**ब्रह्मसिद्धि**ग्रन्थे मण्डनमिश्रः परं जीवमेव अविद्याया आश्रयं मनुते, यतो जीव एवाविद्यया कलुषितो भवति, न तु ब्रह्म; तस्य विशुद्धनित्यप्रकाशरूपत्वात्। तथा च मण्डनः—

**यत्तु कस्याविद्येति? जीवानामिति ब्रूमः। ...उक्तमेतद् जीवानामविद्याकलुषितत्वम्, न ब्रह्मणः; तद्धि सदा विशुद्धनित्यप्रकाशमनागन्तुकार्यम्**[1]। इति।

भामत्यां वाचस्पतिमिश्रोऽपि अविद्याया जीवाश्रितत्वमेव स्वीकरोति—

**जीवाधिकरणाप्यविद्या निमित्ततया विषयतया चेश्वरमाश्रयत इतीश्वराश्रयेत्युच्यते, न त्वाधारतया; विद्यास्वभावे ब्रह्मणि तदनुपपत्तेः[२]।**

अयमाशयः—अविद्याया आधारः (आश्रयः) वस्तुतो जीव एवास्ति, नचेश्वरः; विद्यास्वभावत्वात्। परं सा (अविद्या) निमित्ततया (प्रेरकतया) विषयतया चेश्वरमाश्रयते—इति हेतोः सा शङ्करेण 'परमेश्वराश्रया' इत्युक्तेति।

(ख) भगवतः शङ्करस्यानुसारं 'तत् त्वमसि' सति महावाक्यश्रवणेनैव शिष्यस्य (जीवस्य) ब्रह्मणा एकत्वं संजायते, तदर्थं श्रवणमननादिसाधनानां नास्त्यपेक्षा।

परं मण्डनमते उक्तमहावाक्योपदेशानन्तरमपि विशुद्धज्ञानार्थम् उपासना (महावाक्यार्थानुशीलनम्, अभ्यासः) परमावश्यकी एव; यतः साधारणवाक्येन समुत्पन्नं शाब्दज्ञानं परोक्षरूपं भवति। अतो विशुद्धज्ञानलाभाय उपासना आवश्यकी एव।

तदुक्तं मण्डनमिश्रेण *ब्रह्मसिद्धौ*—

**परोक्षरूपं शाब्दज्ञानं, प्रत्यक्षरूपः प्रपञ्चावभासः।··· उपासनादिना साक्षात्कृतात्मतत्त्वस्य तु विरोधात् सन्नपि प्रपञ्चावभासो नात्मसंस्पर्शी···। नित्यश्चात्मतत्त्वप्रकाशः, तत्र न पुनर्विपर्ययावकाशोऽस्ति। शाब्दं तु प्रमाणाधीनं क्षणिकं ज्ञानं, तत्र पुनरपि विपर्ययावकाशः।**[३] इति।

सुरेश्वराचार्यः परम् *नैष्कर्म्यसिद्धौ* (पृ० ३८) *बृहदारण्यकभाष्यवार्तिके* च मण्डनमतमिदं खण्डयति—

**अन्येतु पण्डितम्मन्याः सम्प्रदायानुसारतः।**
**विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा॥**
**तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम्।**
**विज्ञाय वस्त्वसंसर्गि प्रज्ञां कुर्वीत यत्नतः॥**[४] इति

अत्र प्रतिपक्षिणं प्रत्येव प्रयोक्तुमुचितेन 'पण्डितम्मन्य'शब्देन मण्डनमतस्य खण्डनं क्रियते सुरेश्वरेणेति हेतोर्नैतयोरेकत्वं कथंचिदप्यौचित्यमञ्चति।

(ग) *न्यायरत्नदीपावली*कारेण आनन्दानुभवाचार्येण हि विश्वरूप-प्रभाकर-मण्डन-वाचस्पति-सुचरित-मिश्र-महोदयाः वैदिकधर्मस्याचार्याः व्याख्यातारश्च 'शिष्टाग्रणी'शब्देन सहैव समुल्लिखिताः। तद्ग्रन्थदर्शनेन मण्डनविश्वरूपयोः स्पष्टतया पार्थक्ये सिद्धे मण्डनस्य 'विश्वरूप'नाम्ना समुल्लेखोऽसंगत एव *शङ्करदिग्विजया*दिग्रन्थेषु माधवाचार्यादीनाम्। तेन च विश्वरूपस्यैव (न मण्डनस्य) संन्यासग्रहणोत्तरं सुरेश्वरेति संज्ञा समभवदित्यवसीयते।

अयं हि तदीयो ग्रन्थः—

**किञ्च प्रसिद्धप्रभावैर्विश्वरूप-प्रभाकर-मण्डन-वाचस्पति-सुचरितमित्रैः शिष्टाग्रणीभिः परिगृहीतस्य कथं द्वेषमोहाभ्यां विनाऽपलापसंभवः।··· गृहस्थावस्थायां विरचिते च विश्वरूपग्रन्थे दर्शितवाक्यपरिग्रहो दृश्यते। न चासौ ग्रन्थः संन्यासिना विरचितः। तथा हि 'परिव्राजकाचार्यसुरेश्वरविरचिते'ति ग्रन्थे नाम लिखेत्, लिखितं तु 'भट्टविश्वरूपविरचिते'ति॥**[५]

( घ ) मण्डनमिश्रविरचित*ब्रह्मसिद्धि*ग्रन्थस्य सम्पादकेन[६] विद्यावाचस्पति म.म. श्रीकुप्पुस्वामी-शास्त्री-महोदयेनापि तद्भूमिकायां मण्डन-सुरेश्वरयोरेकत्वस्य विशदसमीक्षां विधाय व्यक्तमुक्तं यत्—

( १ ) ब्रह्मसिद्धिग्रन्थ-रचयिता मण्डनमिश्रः न खलु शङ्करस्य शिष्यः कदापि बभूव, न च स कदाचिदपि संन्यासी समभवत्। स हि सुरेश्वरादन्य एव सुधीरासीत्।

( २ ) सुरेश्वरस्यैव गृहस्थावस्था-नाम विश्वरूप इत्यासीत्, स हि तदानीं कुमारिलभट्टस्यासीत् शिष्यः। स एव च पश्चात् शङ्कर-शिष्यतामङ्गीकृत्य 'सुरेश्वर' इति नाम्ना संन्यासी समभूत्। पश्चाच्चायमेव, मण्डनमिश्रमहोदयेन *ब्रह्मसिद्धि*ग्रन्थे निर्दिष्टं व्याख्यातं चाद्वैतसिद्धान्तं स्वस्य वार्तिके *नैष्कर्म्यसिद्धौ* च खण्डयामास इति[७]।

इतिहासदृष्ट्यापि मण्डनसुरेश्वरयोरस्ति महत् पार्थक्यम्, तच्च 'इतिहासविरोध'-नामके अंशे प्रतिपादयिष्यते।

तदेवं मण्डनसुरेश्वरयोः पार्थक्ये सिद्धे शङ्करमण्डनयोः शास्त्रार्थस्य, तत्पराजयजन्य-मण्डनस्वीकृतसंन्यासग्रहणस्य च कल्पना सुदूरमपास्ता भवति।

## २. युक्तिविरोधः

( क ) युक्त्या विचारणायां शङ्करमण्डनयोः शास्त्रार्थः, तत्र मण्डनस्य पराजयश्च न सिद्ध्यतः। तथा हि यदा शङ्करेण प्रयागे त्रिवेणीनगरे तुषानले देहं दाहयन् कुमारिलः स्वभाष्यस्योपरि वार्तिकनिर्माणार्थं प्रार्थितः[८], स्वदेहस्य दग्धप्रायत्वात् तेन च ( कुमारिलेन ) स्वशिष्यस्य सर्वशास्त्रविशारदस्य मण्डनस्य[९] समीपे तदर्थमेव ( वार्तिक-निर्माणार्थमेव ) स ( शङ्करः ) प्रेषितः, तदा मण्डनेन सह शङ्करकृतशास्त्रार्थकल्पनायाः कोऽवसरः? का च वा तत्संगतिः?; एवं च युक्त्या शास्त्रार्थः खण्डितो भवति; शास्त्रार्थे च खण्डिते तत्र मण्डनस्य पराजयः तत्संन्यासस्वी-कारश्चापि न सिद्ध्यतः।

( ख ) यदि शङ्करमण्डनयोः शास्त्रार्थः समजनि, तत्र च शङ्करेण मण्डनः पराजितः, तदा शास्त्रार्थदिनादारभ्यैव उत्तरभारतेऽपि ( मिथिलायामपि ) शङ्करमतमेव संमान्यं संजातम्, मण्डनमतं च समूलमुन्मूलितमभूदिति युक्त्या सिद्ध्यति। ततश्च शङ्करात् ( सप्तमशतकान्तिमभागात् ) शतवर्षादप्यधिके उत्तरकाले ( नवमशताब्द्यां ) समुत्पन्नेन वाचस्पतिसदृशेन वाचस्पतिमिश्रेण शाङ्करभाष्यस्यैव टीकायां स्वभामत्यां कृतं मण्डन-सिद्धान्तसमर्थनं[१०] कथंकारं संगतं भवितुमर्हति? एतेन च समर्थनेन मिथिलायामपि वाचस्पतिमिश्रपर्यन्तं मण्डनस्यैव सिद्धान्तः प्रचुरप्रचारः समासीदिति सिद्ध्यति। तेन वाचस्पतिमिश्रात् पूर्वमेव ( सप्तमशताब्द्यां ) मण्डनस्य शास्त्रार्थे पराजयः युक्त्या खण्डितो भवति; तेन च तस्य संन्यासग्रहणवर्णनमपि माधवादीनामाचार्याणां सर्वथा अकाण्डताण्डवायितं सिद्ध्यति।

( ग ) मण्डनमिश्रस्य सकलग्रन्थानां टीकाकारः सातिशयसमादरणीयो दार्शनिकशिरोमणिः वाचस्पतिसमो वाचस्पतिमिश्रः ईदृशस्य मण्डनसंन्यासग्रहणरूपस्य ऐतिहासिकपरिवर्तनस्योल्लेखं कस्मिन्नपि स्वग्रन्थे न नाम कुर्यादिति कथं भवितुं शक्नोति? अस्वाभाविकत्वात्। न केवलं वाचस्पतिमिश्रेण एव, अपितु मण्डनादुत्तरकाले समुद्भूतेषु दिगन्तविख्यातेषु शङ्करमिश्र-पक्षधरमिश्र-नरहरि-गङ्गेशोदयन-बच्चाझा-( धर्मदत्त )-बालकृष्णमिश्रादिषु मैथिलाचार्येषु न केनापि अस्योल्लेखः कृतः। तस्मादिदं वर्णनं कपोलकल्पितमेवेति पर्यवस्यति।

**३. परम्पराविरोधः**

मिथिलायां हि सर्वोऽपि व्यवहारः धर्मशास्त्रानुसारमेव प्रचलति। अत एव यत्र स्मृतिद्वये विरोधो दृश्यते, तत्र मिथिलाव्यवहारानुसारमेव धर्मस्य निर्णयः कर्तव्यतयोपदिष्टः—'धर्मस्य निर्णयो ज्ञेयो मिथिलाव्यवहारतः' ( बृ० या० ) इति। मिथिलायां च गृहस्थस्य संन्यासग्रहणम्—

**अश्वालम्भं गवालम्भं संन्यासं पलपैतृकम्।**
**देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्॥**

*इति देवलस्मृत्या*

**अग्न्याधेयं गवालम्भं संन्यासं पलपैतृकम्।**
**देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्॥**

*इति व्यासस्मृत्या*[११] च स्पष्टतया निषिद्धत्वात् अश्रुतपूर्वमदृष्टचरं च।

अत्र च स्मृतौ कलियुगे संन्यासग्रहणनिषेधः, वचनस्वारस्यविचारणया, केवलं गृहस्थस्य प्रतीयते। अत एव बाल्यावस्थायामेव आद्यशङ्कराचार्यस्य, तच्छिष्याणां पद्मपादादीनामाचार्याणां, विद्यमानानां प्रसिद्धमठ-प्रधानपदासीनानां शङ्कराचार्याणां च संन्यासस्वीकारो न दोषाय।

**४. इतिहासविरोधः**

इतिहासदृष्ट्यापि मण्डनसुरेश्वरयोर्नैकत्वमञ्चति। तथा हि प्रसिद्धानां म.म. गङ्गानाथझा, म.म. डा० उमेश मिश्र, डा० शीतांशुशेखर बागची प्रभृति विपश्चिदपश्चिमानाम्, म.म. डा० पी० वी० काणे[१२], डा० एस० दासगुप्त, आचार्य बलदेव-उपाध्यायादीनामितिहासकाराणां[१३] च मतेन मण्डन-सुरेश्वरयोर्भृशं भिन्नत्वाद् नैकत्वं कथमपि संभवति। एतयोर्भिन्नत्वे सिद्धे मण्डनस्य शङ्करेण सह शास्त्रार्थस्य तत्संन्यासग्रहणस्य च कल्पना सुदूरमपास्ता भवति।

तदेवं वचननिचय-पर्यालोचनया दृढतममिदमभिधातुं शक्यते यत् शङ्कर इव मण्डनोऽपि अद्वैतवादस्य सुप्रसिद्ध एवासीदाचार्यः, किन्तु स स्वकीये अद्वैतवेदान्तग्रन्थे *ब्रह्मसिद्धौ* शङ्कराद् भिन्नरीत्या अद्वैतसिद्धान्तस्य समर्थनं करोतीति हेतोः नास्त्यनयोर्मतैक्यम्[१४]।

तत्र मण्डनो न जातु शङ्करस्य शिष्यो भूत्वा संन्यासं च स्वीकृत्य सुरेश्वराचार्योऽभवदिति कारणात् मण्डन सुरेश्वरयोरेकत्वकथनं मण्डनसंन्यासग्रहणवर्णनं च कथंचिदपि नौचित्यमञ्चति; न च वा मण्डनमिश्रः कदाचिदपि 'विश्वरूपे'ति संज्ञामास्वादयदिति मण्डनमिश्रस्य 'विश्वरूप'नाम्ना; *शङ्करदिग्विजये*माधवाचार्येण, *श्रीमदाद्यशङ्कराचार्य-चरिते* ( संक्षिप्तशङ्करदिग्विजये ) जयमङ्गलाचार्येण, अन्यैश्च आनन्दगिरिप्रभृतिभिः शङ्करसम्प्रदायाचार्यैः *शङ्करविजया*-दिग्रन्थेषु, कृतः समुल्लेखो निराधार एव। एवं च शङ्करमण्डनयोः शास्त्रार्थकल्पनापि कपोलकल्पनैवेति पर्यवस्यति। अन्ते च—

**आचार्यमण्डनं नौमि विद्वन्मण्डलमण्डनम्।**
**पद-वाक्य-प्रमाणानां पारावारीणतां गतम्॥**

इति स्वकीयश्लोकेन मिथिला-मही-मण्डल-मण्डनं मण्डनमिश्रमभिवाद्य—

**तत्त्वस्पृशः खण्डितभेदवादिनो विनिःसृताः पण्डितषण्डमण्डनात्।**
**ध्वान्तच्छिदो मण्डन-वक्त्र-पङ्कजाज्जयन्ति वाचः श्रुति-नीति-मण्डनाः॥**

इति ब्रह्मसिद्धौ तद्वचसैव समापयितुं निबन्धममुमभ्यर्थये।

**सन्दर्भ-संकेतः**

१. ब्रह्मसिद्धिः, पृ० १०, १२
२. ब्रह्मसूत्रस्य ( १।४।३ ) व्याख्यायां भामतीग्रन्थः
३. ब्रह्मसिद्धिः, पृ० १३४
४. बृहदारण्यकभाष्य-वा०, पृ० १८५२
५. मण्डनमिश्रविरचित-ब्रह्मसिद्धि-भूमिकायाम् अयमंशः समुद्धृतः। ( द्र० बलदेव-उपाध्यायप्रणीत-'श्रीशंकराचार्य'-ग्रन्थस्य पादटिप्पणी, पृ० १७६ )।
६. अयं ग्रन्थः मद्रास गवर्नमेण्ट मैन्युस्क्रिप्ट सिरीज नं० ४, मद्रासतः १९३७ ईस्वीयेवर्षे प्रकाशितः।
७. द्र० बलदेव-उपाध्यायः—'श्रीशंकराचार्य', पृ० १७८, तथा 'ब्रह्मसिद्धि'–भूमिका।
८. 'उज्जीवयामि करजाम्बुकणो क्षणेन भाष्येऽपि मे रचय वार्तिकमङ्ग! भव्यम्।' ( माधव—शङ्करदि० ) इति कुमारिलभट्टं प्रति शङ्करः प्राह।
९. 'सर्वासु शास्त्रसरणीषु च विश्वरूपो मत्तोऽधिकः प्रियतमः स मदाश्रयेषु'।—( माधव—शंकरदि० ) इति मण्डन-विशिष्टवैदुष्यविषये शङ्करं प्रति कुमारिलस्योक्तिः।
१०. द्र० ब्रह्मसूत्रस्यं ( १।४।३ ) व्याख्यायां भामतीग्रन्थः।
११. स्मृतिमुक्ताफल ( पृ० १७६ ) ग्रन्थे समुद्धृतं व्यासवचनमिदम्। यतिधर्मसंग्रहमतानुसारमपि कलियुगे संन्यासो वर्जितोऽस्ति। ( द्र० धर्मशास्त्र का इतिहास, पी० बी० काणे, पृ० ५०१ )
१२. द्र० धर्मशास्त्र का इतिहास, पी० बी० काणे।
१३. आचार्य बलदेव उपाध्यायस्य, श्री शंकराचार्य-ग्रन्थः, ( पृ० १७८-१७९ )।
१४. अत एव शङ्कराचार्यशिष्यैः सुरेश्वरादिभिरपि मण्डनस्य खण्डनं क्रियते स्व-स्व-ग्रन्थेषु इति ध्येयम्।

**[ इति ]**

# नासतो विद्यते भावः

□ कीर्त्यानन्द झा

सत्त्वं यत्र तिष्ठति तत्सदिति, यत्र न तन्नास्ति तदसदिति कथ्यते। अत्र यथा 'घटोऽयम्, घटोऽयम्' इत्यनुगतव्यवहारबलाद् घटत्वं जातिरिति सिद्ध्यति, तथैव 'द्रव्यं सत्, गुणः सन्, कर्म सत्' इत्यनुगतव्यवहारबलाद् द्रव्यादित्रिकवृत्तिसत्तासामान्यं सिद्ध्यतीति तार्किका आमनन्ति। अत्र किञ्चिद् विचार्यते— यदि 'द्रव्यं सत्, गुणः सन्, कर्म सत्' इत्यनुगतव्यवहारबलाद् द्रव्यादित्रये सत्ता जातिः सिद्ध्यतीत्युच्येत, तदा 'सामान्यं सत्, विशेषः सन्, समवायः सन्' इत्यनुगतव्यवहारबलात्सामान्यादिष्वपि सत्ता सिध्येत्।। यदि 'द्रव्यं सत्' इत्यादिप्रतीतिरन्या 'सामान्यं सत्' इत्यादिप्रतीतिरन्येति ब्रूयात्तदा 'द्रव्यं सत्' इत्यादिप्रतीतिरन्या 'गुणः सन्' इति प्रतीतिरन्येत्यपि वक्तुं प्रभवेत्। यदि 'द्रव्यं सत्' इति प्रतीतेः 'गुणः सन्' इति प्रतीतेश्च द्रव्यत्वगुणत्वाभ्यां परस्परवैलक्षण्येऽपि सत्त्वांशमादाया-वैलक्षण्यं सुतरामेव सिद्धमित्युच्येत तदा 'द्रव्यं सत्' इति प्रतीतेः 'सामान्यं सत्' इति प्रतीतेश्च द्रव्यत्वसामान्य-त्वाभ्यां परस्परवैलक्षण्येऽपि सत्त्वांशमादायावैलक्षण्यं स्यादेव। इतोऽपि द्रव्यादित्रिकवृत्तिः सत्ता नैव सिद्ध्यति।

यदि कार्यतावच्छेदकतया कारणतावच्छेदकतया वा सत्ताजातिं प्रसाध्य तस्याश्च 'द्रव्यं सत्, गुणः सन्, कर्म सत्' इति प्रतीतिविषयतामात्रं स्वीक्रियेत, तदपि न विचारसहम्। तथाहि समवायेन सत्त्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन कारणत्वमिति कार्यकारणभावपक्षे कार्यतावच्छेदकतया सत्ता नैव सिध्यति कार्यमात्रवृत्तिधर्मस्यैव कार्यतावच्छेदकत्वेन स्वीकृतत्वात्, सत्तायाश्च गगनादिवृत्तित्वेन कार्यतानवच्छेदकत्वात्। जन्यत्वे सति सत्त्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन कारणत्वमिति पक्षेऽपि गगनादौ सत्तायाः सिद्धिं विना जन्यत्वस्याव्यावर्तकतया सत्यन्तपदोपा-दानं निरर्थकमेव स्यात्। यदि प्रागभावावृत्तिप्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्येन सतः कारणत्वेन कारण-तावच्छेदकतया सत्ता जातिः सिध्यतीत्युच्यते तदा गगनादेरपि तादात्म्येन गगनादौ विद्यमानत्वात्तत्र ध्वंसापत्तिरेव दोषः स्यात्। यद्यपि कालिकसमवायोभयसम्बन्धस्य कारणतावच्छेदकसम्बन्धत्वेन स्वीक्रियमाणत्वे सतः शब्दादेर्गगनादौ विद्यमानत्वेऽपि कालिकेन तत्राविद्यमानत्वान्न तत्र ध्वंसापत्तिरूपदोष आपद्यते, तथापि महाकाले महाकालगत-सङ्ख्यापरिमाणादेरुक्तोभयसम्बन्धेन सत्तया तत्र च ध्वंसापत्तिरूपो दोषः स्यादेव। यद्यपि महाकालान्यत्ववैशिष्ट्यस्य कालिकसम्बन्धे विशेषणीयत्वे पूर्वोक्तदोषो नापद्यते, परञ्च तदपि न विचारसहम्। यतो हि प्रागभावे ध्वंसोत्पादनाय प्रागभावावृत्तिप्रतियोगितासम्बन्धेन ध्वंसं प्रति प्रागभावत्वेन कारणत्वस्यावश्यकत्वाद् घटादावपि ध्वंसोत्पादनाय घटादिवृत्तिप्रतियोगितासम्बन्धेन ध्वंसं प्रति घटत्वादिना कारणत्वस्य स्वीकारेणैव सर्वसामञ्जस्यात् पूर्वोक्तकार्यकारणभावो निर्युक्तिक एव भवति। एवञ्च कारणतावच्छेदकतयाऽपि सत्ता जातिर्नैव सिध्यति।

किञ्च यदि 'द्रव्यं सत्, गुणः सन्, कर्म सत्' इति प्रतीतिर्द्रव्यादित्रिकमात्रवृत्तिसत्त्वं कल्पयतीत्युच्यते तदा वैपरीत्येन 'सामान्यं सत्, विशेषः सन्, समवायः सन्' इति प्रतीतिः सामान्यादित्रिकमात्रवृत्तिसत्त्वं कथं न कल्पयेदित्यपि वक्तुं शक्यम्। एवं सति सामान्यादावेव सत्त्वं तदभाव एव द्रव्यादावित्येव स्यात्। यदि सामान्यादौ सामान्याभावान्न तत्र सत्ताजातिसम्भव इत्युच्येत, तदा 'द्रव्यं सत्' इत्यादिप्रतीतिरपि सत्त्वं विषयीकरोति नतु सत्ताजातिमित्यपि वक्तुं शक्यं भवेत्।

किञ्च तार्किकमते सामान्यत्वं नित्यत्वे सत्यनेकसमवेतत्वरूपम्, एवञ्च नित्यत्वादिघटिते सामान्ये प्रत्यक्षप्रमाणस्यासामर्थ्यात्तत्प्रमाणं सत्ताजातिं साधयितुमशक्तमेव। अनुमानादिकमपि व्याप्त्यादिग्रहसापेक्षत्वेन साध्यप्रसिद्धिं विना तां साधयितुमशक्तमेव। एवञ्च द्रव्यादित्रये सत्ताजातेर्निर्वाहकविरहात् त्रयाणामसत्त्वमेव सिध्यति। यद्येवं ब्रूयाद् द्रव्यादीनामसत्त्वे तान्यधिकृत्य यस्तावल्लोके कार्यकारणभावः प्रवर्तते तस्य विलोपः स्यादिति। परञ्चेदमपि न विचारसहम्। यतो हि कार्यकारणभावोऽपारमार्थिक एव, स च व्यवहारकाले भवितुमर्हत्येव। अत एवाशामोदकतृप्तानामुपार्जितमोदकतृप्तानाञ्च समानरसवीर्यविपाकापत्तिरूपदोषो न प्रसरति, तत्तत्कार्यं प्रति तत्तद्व्यावहारिकपदार्थविशेषस्य कारणत्वेन स्वीकृतत्वात्। यथा हि तार्किकमते द्रव्यादित्रये सत्त्वाविशेषेऽपि न सर्वस्मात् सर्वकार्यापत्तिस्तथैव वेदान्तिमते द्रव्यादीनामसत्त्वेऽपि न सर्वस्मात् सर्वकार्यापत्तिः।

यदि समवायस्वप्रतियोगिकसमवायप्रतियोगित्वस्वप्रतियोगिकसमवायतादात्म्यान्यतमसम्बन्धेन सत्तावत्त्वभावत्वमिति सम्बन्धभेदं स्वीकृत्य द्रव्यादाविव सामान्यादावपि सत्त्वं स्वीक्रियते, अथवा स्वरूपभेदं स्वीकृत्य 'द्रव्यं सत्' इत्यादि प्रतीतौ सत्तासामान्यं 'सामान्यं सत्' इत्यादिप्रतीतौ चास्तित्वविषयत्वेन स्वीक्रियेत, तदा सम्बन्धभेदादिकल्पने गौरवमेव तार्किकमते स्यात्।

यदि 'सामान्यं सत्' इत्यादिप्रतीतेरिव 'द्रव्यं सत्' इत्यादिप्रतीतेरस्तित्वस्यैकरूपस्य विषयत्वं स्वीक्रियते, नातः सम्बन्धभेदः स्वरूपभेदश्च प्रसज्यते। परञ्च नित्यद्रव्यस्यात्मादेः समवायेन, गुणादीनाञ्च संयोगेनावृत्तित्वेन सर्वसाधारणैकास्तित्वस्य विरहादुक्तकथनमपि सर्वथा हेयमेव। यदि कालिकसम्बन्धेनास्तित्वं स्वीक्रियेत तदा सर्वेषां जन्यपदार्थानामेककालावृत्तित्वेन निरूपककालभेदेनास्तित्वरूपवृत्तित्वस्यापि भेदः सुतरामेव सिद्धेत्। यदि महाकालवृत्तित्वमेवास्तित्वं स्वीक्रियेत तदा 'इदानीमस्ति तदानीमस्ति' इत्यादिप्रतीतावुपाधिविशेषस्य सूर्यक्रियादेरेव विषयत्वसत्त्वान् महाकालस्याविषयत्वाच्चोपाधिभेदेन विभिन्नमेवास्तित्वम्। एवञ्चैकाकारप्रतीतेरेकरूपविषयनिर्वाह्यत्वेन सत्तायाः सम्बन्धभेदस्यास्तित्वस्य च स्वरूपभेदस्य कल्पनापेक्षया सर्वत्र 'सत् सत्' इत्येकाकारप्रतीतिनिर्वाहायैकमेव सद् वस्तु स्वतःस्फुरणरूपं सर्वेषां पदार्थानामवभासकं स्वतादात्म्याध्यासात्सर्वत्र सद्व्यवहारोपपादकमवगन्तव्यमिति वेदान्तसिद्धान्तः।

अत्र प्रसङ्गे मधुसूदनपादैरुक्तश्लोकव्याख्यानावसर उक्तम् 'विषयस्याननुगमेऽपि प्रतीत्यनुगमे जातिमात्रोच्छेदप्रसङ्गादिति'। अत्र किञ्चिद् विचार्यते—समवायेन संयोगादिकं प्रति तादात्म्येन द्रव्यत्वेन कारणत्वमिति कार्यकारणभावबलात्कार्यतावच्छेदकतया संयोगत्वादिकं कारणतावच्छेदकतया च द्रव्यत्वं जातित्वेन सिध्यत्येव। यद्यपि कारणत्वस्याखण्डोपाधित्वपक्षे तस्यावच्छेदके नास्ति किमपि प्रमाणम्, तथाप्यवच्छेदकाभावे दुग्धार्थी यदपूर्वगवादौ प्रवर्तते तस्य प्रवृत्तिः कारणताया नियामकत्वेन निर्णीतगोत्वादिकं विना कथं स्यादिति विचारपथमवश्यमेवाध्यास्ते। यदि गवादिनिष्ठकारणत्वस्य बोधकं सास्नादिकमेवेति मन्यते तदाऽवयवसन्निवेशरूपस्य सास्नादिकस्य प्रतिव्यक्तिभिन्नतया तच्च पूर्वगवादिनिष्ठकारणत्वस्य निर्णायकं कथं स्यादिति शङ्का चात्रावशिष्यत एव। यदि सास्नादौ कश्चित्तदवयवविशेषोऽनुगतत्वेन कल्प्यते, तदापि तस्यावयवविशेषस्य नियतव्यञ्जकत्वेन पदार्थान्तरमवश्यमेव कल्पनीयं भवेदित्यनवस्था एव स्यात्। अतश्चानवस्थादोषभियाऽवश्यमेव कारणतावच्छेदकतया गोत्वादिकं कारणताया नियामकत्वेन स्वीकार्यमेवेति तार्किकाणां कथनं वदतो व्याघातरूपदोषाद्धेयमेव। यतो हि यदि सास्नादिकमननुगतं तदा भवन्मते गोत्वादिजातेस्तद्व्यञ्जकं कथं स्यात्। यदि तत्र कश्चिद्धर्मविशेषोऽनुगतत्वेन स्वीक्रियते, तदा तस्यापि नियतव्यञ्जकस्य वक्तव्यताऽऽपद्येत इति तार्किकमतेऽप्यनवस्था सुतरां सिद्धैव।

किञ्च भवतु नाम कारणता सावच्छिन्ना, तथापि तदवच्छेदकतयाऽन्यतमत्वमेव सिध्यति। अन्यतमत्वञ्च भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वम्। एवञ्च भेदकूटान्तर्गतापूर्वगोव्यक्तिभेदस्य प्रत्यक्षाविषयत्वेन 'गौर्गौः' इत्यनुगताकारप्रात्यक्षिकप्रतीतेरविषयत्वमेव सिध्यति। यदि जातिकल्पनापेक्षया तादृशभेदकल्पने गौरवमित्युच्यते, तर्ह्यखण्डोपाधिरूपां तादृशभेदव्यक्तिं स्वीकृत्य तस्या अवच्छेदकत्वकल्पने न गौरवमिति वक्तुं शक्यत एव। वस्तुतः परमेश्वरज्ञानस्य नित्यस्यैकस्य सर्वव्यक्तिषु विषयत्वमेकरूपं प्रकल्प्य तस्यावच्छेदकतयाऽनुमितिविषयत्वं स्वीकार्यम्। एवञ्च तार्किकमतेऽनुगताकारप्रात्यक्षिकप्रतीतिनिर्वाहायानुगतविषयस्यावश्यकत्वमस्त्येव। अतश्च तार्किकमतेऽपि 'द्रव्यं सत्, सामान्यं सत्' इत्यादिप्रतीतावेकमेव सद्रूपं वस्तु विषयत्वेन कल्पनीयम्। एवञ्चोक्तप्रतीतौ द्रव्यादिषु न सत्त्वं नाम धर्मः, अपि तु सति धर्मिणि द्रव्याद्यभिन्नत्वमेव भासते, तच्चाध्यासिकम्। अत्रायं विमर्शः– यथैकं सुवर्णं कुण्डलात्मकं विधाय पुनः कटकात्मकं विदधाति तत्र यत्कुण्डलं सुवर्णमासीत् तदेव कटकमपि तथैव सदात्मना द्रव्यगुणयोरभेद एव पारमार्थिकः, तस्य कालत्रयानुवर्तित्वात्, द्रव्यगुणादिभेदस्य वाचारम्भणमात्रत्वात्। एवञ्च 'घटः सन्, पटः सन्' इत्यादिप्रतीतौ ज्ञानानन्दात्मकं सद्रूपं ब्रह्मैव भासते, सति ब्रह्मणि सर्वेषां सत्तातादात्म्याध्यासादिकं मनसा समालोच्य मधुसूदनपादैरुक्तम् 'यत्कालतो देशतो वस्तुतो वा परिच्छिन्नं तदसत्' इति। अत्र कालतः परिच्छिन्नत्वं ध्वंसप्रतियोगित्वम्, देशतः परिच्छिन्नत्वमत्यन्ताभावप्रतियोगित्वम्, वस्तुतः परिच्छिन्नत्वञ्चान्योन्याभावप्रतियोगित्वम्।

अत्र कश्चिद् विमर्शः प्रस्तूयते— यदि देशतः परिच्छिन्नत्वं समवायसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगित्वरूपं तदाऽत्मन्यतिव्याप्तिः स्यात्, आकाशादेरिव तस्य कुत्राप्यसमवेतत्वात्। यदि प्रतियोगितावच्छेदकसम्बन्धः संयोगः स्वीक्रियते तदा प्रकृतमते देशतः परिच्छिन्नत्वमाकाशादावसिद्धमेव, आकाशादीनां सर्वभूतसंयोगित्वनियमात्। यदि संयोगसम्बन्धावच्छिन्नामूर्तनिष्ठात्यन्ताभावप्रतियोगित्वं विवक्ष्यते तदाऽमूर्तेषु यथाऽऽकाशो न तिष्ठति तथैवात्माऽपि नेत्यात्मन्यतिव्याप्तिस्तदवस्थैव। यदि सर्वसम्बन्धित्वाभावरूपं तद्विवक्ष्यते तदा शुद्धे ब्रह्मण्यतिव्याप्तिः, उपहितात्मन एवोपादानत्वात्साक्षित्वाच्च। एवं स्वोपहितचिद्भास्यत्वसम्बन्धेन सर्वसम्बन्धिन्यज्ञानेऽव्याप्तिः स्यात्। एवं ध्वंसप्रतियोगित्वरूपं कालतः परिच्छिन्नत्वमप्याकाशादावसिद्धमेव, तार्किकैस्तेषां नित्यत्वाभ्युपगमात्। एवमन्योन्याभावप्रतियोगित्वरूपं वस्तुतः परिच्छिन्नत्वमप्यात्मन्यतिव्याप्तम्, तस्य च घटादिनिष्ठान्योन्याभावप्रतियोगित्वादिति।

अत्रोच्यते— अत्यन्ताभावेऽन्योन्याभावे च स्वसमानसत्ताकत्वं विशेषणीयम्। एवञ्चात्यन्ताभावीयप्रतियोगितायामन्योन्याभावीयप्रतियोगितायाञ्च समवायसम्बन्धावच्छिन्नत्वस्य संयोगसम्बन्धावच्छिन्नत्वस्य वा निवेशे नात्र पूर्वोक्तदोषः प्रसरति। एवञ्च प्रपञ्चधर्मिकात्यन्ताभावस्य व्यावहारिकत्वेनात्मनश्च पारमार्थिकत्वेनात्मरूपप्रतियोगितासमानसत्ताकात्यन्ताभावस्याप्रसिद्धत्वान्नात्मन्यतिव्याप्तिः। व्यावहारिकस्याविद्याकाशादेः पारमार्थिकाभावपक्षे स्वाधिकसत्ताकात्यन्ताभावप्रतियोगित्वमेव तद् विवक्षणीयम्। एवञ्च व्यावहारिकाविद्याकाशादिरूपप्रतियोग्यधिकसत्ताकपारमार्थिकात्यन्ताभावप्रतियोगित्वस्याविद्याकाशादौ सत्त्वान्न तत्राव्याप्तिः। अत एव च प्रातिभासिकशुक्तिरूप्यादिरूपप्रतियोग्यधिकव्यावहारिकात्यन्ताभावप्रतियोगित्वस्य शुक्तिरूप्यादौ सत्वान्न 'विमतं मिथ्या परिच्छिन्नत्वाच्छुक्तिरूप्यादिवत्' इत्यनुमाने दृष्टान्तासिद्धिः। एवम् 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तै० आ० ८।२१) इति श्रुतिप्रामाण्यादाकाशादौ ध्वंसप्रतियोगित्वरूपं कालपरिच्छिन्नत्वं नाव्याप्तम्। अत्र तार्किकैः परमाण्वादेर्ध्वंसप्रतियोगित्वरूपकालपरिच्छेदानभ्युपगमाद्देशपरिच्छेदस्य पृथगभिधानं सङ्गच्छते। परमाण्वादौ च सर्वदेशावृत्तित्वेनात्यन्ताभावप्रतियोगित्वस्य सत्त्वात्।

अत्र किञ्चिद् विचार्यते—कालपरिच्छेदस्य देशपरिच्छेदव्याप्यत्वेन स्वीकाराद् कालपरिच्छेदकथनेनैव सर्वसामञ्ज-स्यात् देशपरिच्छेदस्य पृथगभिधानं कथं सङ्गच्छते, एवमन्योन्याभावप्रतियोगित्वरूपवस्तुपरिच्छेदकथनेनैव निखिलप्रपञ्च-स्यासत्त्वे बाधकाभावात् देशकालपरिच्छेदयोः पार्थक्येन कथनं कथं सङ्गच्छत इति विचारपथमवश्यमेवायाति।

किञ्च यदि देशकालपरिच्छेदयोः परस्परव्याप्यव्यापकभावरूपं सामनैयत्यं स्यात्। स्याच्च नियमेनैकसत्त्वेऽपरस्य वैयर्थ्यम् किन्तु परमाण्वादौ देशपरिच्छेदस्य कालपरिच्छेदव्याप्यताविरहेण तयोः सामनैयत्याभावेऽपि पाकज-रूपरसादितत्प्रागभावानां समनियतानां वैयर्थ्यं स्यादेव। यदि प्रामाणिकत्वान्न तेषां वैयर्थ्यमित्युच्येत, तदा देशकाल-परिच्छेदयोः सामनैयत्येऽपि न तयोरेकसत्त्वेऽपरस्य वैयर्थ्यमित्यपि वक्तुं शक्यम्। एवं 'सर्वं प्रमेयम्' इत्याकारक-जन्यज्ञानविषयत्वस्य केवलान्वयित्वेन सर्वदेशवृत्तितया देशापरिच्छिन्नत्वेऽपि कालपरिच्छिन्नतया कालपरिच्छिन्नत्वे देशपरिच्छिन्नत्वव्याप्यताकथनमपि मधुसूदनपादानां कथं सङ्गच्छत इत्यपि विचारसरणिमनुगच्छति।

अत्रोच्यते 'यत्कालतो देशतो वस्तुतो वा परिच्छिन्नं तदसत्' इत्यत्र यत्कालपरिच्छिन्नत्वं प्रतिपाद्य देशपरिच्छिन्नत्वमुक्तं तत्परमाण्वादीनां कालपरिच्छिन्नत्वासंग्राह्यत्वेन तत्सङ्ग्रहायैव। अत्र यदि देशपरिच्छिन्नत्वमुक्त्वा कालपरिच्छिन्नत्वस्योक्तिः स्यात् तदा कालपरिच्छिन्नत्वस्यावश्यमेव वैयर्थ्यं स्यात्, किन्तु मधुसूदनपादैस्तथा नोक्तम्। एवमाकाशादौ देशपरिच्छिन्नत्वस्येव कालपरिच्छिन्नत्वस्य तार्किकमते विरहाद्वस्तुपरिच्छेदस्य पृथगभिधानं सङ्गच्छते। अत्रापि यदि वस्तुपरिच्छिन्नत्वस्य कथनं देशपरिच्छिन्नत्वकथनात्प्राक् स्यात्, स्याच्च देशकालपरिच्छिन्नत्वकथनात्प्राक् तदैकस्योभयोर्वा वैयर्थ्यं स्यात् किन्तु मधुसूदनपादैस्तथा नोक्तम्।

किञ्च यद्यपि मधुसूदनपादैः 'यत्कालतो वस्तुतो देशतो वा परिच्छिन्नं तदसदिति', 'यद्वस्तुतः कालतो देशतो वा परिच्छिन्नं तदसदिति' वा वक्तुं शक्यम्, तथापि त्रयाणामेवासत्त्वप्रयोजकतया समानत्वेनैकस्यानुक्तौ मधुसूदनीव्याख्याकारनिष्ठन्यूनत्वरूपदोषः स्यात्। तच्च न्यूनत्वमनभिधानानुमिताबोधवत्त्वरूपम्।

एवं सर्वं प्रमेयमित्याकारकजन्यज्ञानविषयत्वस्य ज्ञानासमानकालीनत्वपक्षे गगनादेरिव कालापरिच्छिन्नत्वम्, ज्ञानसमानकालीनत्वपक्षे च ज्ञानाभावकाले तस्य सर्वदेशवृत्तित्वस्याभावेन देशपरिच्छिन्नत्वमपि तत्रास्त्येव। अतश्च कालपरिच्छिन्नत्वस्य देशपरिच्छिन्नत्वव्याप्यता निराबाधैव। तथा च 'देशपरिच्छेदोऽपि पृथगुक्तः' इत्यस्य देशपरिच्छिन्नत्वस्य कालपरिच्छिन्नत्वाव्याप्यतया कालपरिच्छिन्नत्वमात्रोक्त्या देशपरिच्छिन्नत्वेन संग्राह्यपरमाण्वा-दीनामसङ्ग्रहेण न कालपरिच्छिन्नत्वमात्रोक्तौ देशपरिच्छिन्नत्वस्य गतार्थतेत्यर्थः सङ्गच्छते।

वस्तुपरिच्छेदस्त्रिविधः—सजातीयभेदः, विजातीयभेदः, स्वगतभेदश्चेति। तत्र सजातीयभेदो वृक्षस्य वृक्षान्तरात्, विजातीयभेदः शिलादेः, स्वगतभेदश्च वृक्षगतपत्रपुष्पादेश्च। परञ्च सति ब्रह्मणि नास्ति तादृशः कोऽपि भेदः। तथा चोक्तं विद्यारण्यस्वामिना 'तथा सहवस्तुनो भेदत्रयं प्राप्तं निवार्यते। ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमादिति' (प० २।२१)॥ भगवती श्रुतिरपि 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्युपक्रम्य 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्युपसंहरन्ती सदेकं सजातीयविजातीयस्वगतभेदशून्यं सत्यमेकं प्रतिपादयति। तथा चोपर्युक्तपर्य्यालोचनयोक्तश्लोकस्य भगवतोच्चरितस्यैवम्भूतोऽर्थः सङ्गच्छते—असतस्तादृश-परिच्छिन्नस्य भावः पारमार्थिकता त्रिकालाबाध्यत्वरूपा वा स्वाधिकसत्ताकपरिच्छेदशून्यत्वरूपा वा न विद्यते। सतो ब्रह्मणोऽभावो विनाशो वा न विद्यते। उभयोरपि सदसतोर्दृष्टोऽन्तः नियतरूपता 'सत्सदेव, असदसदेव' एवम्भूता तत्वदर्शिभिर्वस्तुयाथार्थ्यदर्शनशीलैर्विद्वद्भिर्दृष्टो निर्णीतः, न तु कुतार्किकैः। किन्त्वर्थकस्तुशब्दः परमत-निराकरणाय प्रयुक्त इति। [इति]

# अद्वैतवेदान्ते विवरणप्रस्थानस्य महत्त्वम्

□ वसन्थ एम०

पद्मपादाचार्येण विरचिते *पञ्चपादिका*नाम्नि ग्रन्थे प्रकाशात्मयतिना *पञ्चपादिकाविवरणम्* इत्येवंरूपेण यः टीकाग्रन्थो रचितः स एव विवरणप्रस्थानस्य आधारः। पञ्चपादिकाविवरणे समुपलब्धान् भौतिकसिद्धान्तान् आश्रित्य यो विचारप्रवाहः प्रवर्तितः स एव 'विवरणप्रस्थानम्' इति नाम्ना प्रथितोऽभूत्।

पञ्चपादिका नाम ग्रन्थः सम्प्रति चतुःसूत्रीपर्यन्तमेव उपलभ्यते। किन्तु ग्रन्थस्य अन्तः स्यात् एतत् प्रतीयते यत् असौ ग्रन्थः समस्तं शारीरकभाष्यम् आश्रित्य रचितः आसीदिति। यतः उपलभ्यमाने अंशे एतादृशाः उल्लेखाः दृश्यन्ते। उदाहरणतया पञ्चपादिकायाः प्रथमे वर्णके पद्मपादाचार्येण एतद् लिखितं यद् बौद्धानाम् अर्थक्रिया-कारित्वरूपसिद्धान्तस्य खण्डनं सुगतमतस्य परीक्षायाः समये अग्रे विशेषरूपेण करिष्यते। बौद्धमतस्य खण्डनं ब्रह्मसूत्रे द्वितीयाध्यायस्य द्वितीये पादे अस्ति। अतः तावत्पर्यन्तं तु पञ्चपादिका आसीत् एव इति अनुमातुं शक्यते। एवमेव इदमपि कथयितुं शक्यते यद् पञ्चपादिका समस्ते ब्रह्मसूत्रे रचिता आसीत् इति।

अत्रायं प्रश्नः उदेति यत् यदि पद्मपादेन समस्ते ब्रह्मसूत्रभाष्ये स्वीयो ग्रन्थो रचितः स्यात् तर्हि ग्रन्थस्य नाम पञ्चपादिका इत्येतत् कथं कृतम्। अस्य उत्तरमिदमस्ति यत् शारीरकभाष्यप्रक्रियायाः पञ्च भागाः वर्तन्ते। तद्यथा—पदच्छेदः, पदार्थोक्तिः, विग्रहः, वाक्ययोजना, आक्षेपः, समाधानं चेति पञ्चसु भागेषु भाष्यप्रक्रियायाः विभक्तत्वात् पद्मपादेन स्वग्रन्थस्य नाम 'पञ्चपादिका' इति कृतम्।

पञ्चपादिकाविवरणस्य भूमिकायां *श्रीरामशास्त्रिमहाभागः* कथयति यत् 'पचि' धातोः अर्थः 'विस्तृतम्' इति तथा 'पद्लृ' धातोरर्थः ज्ञानमिति। एवंप्रकारेण पञ्चपादिका इत्यस्यार्थो भवति स ग्रन्थः यस्मिन् विस्तरेण भाष्यार्थस्य प्रतिपादनं दृश्यते। अतः पञ्चपादिका इति नामाश्रित्य एतद् न मन्तव्यं यत् ग्रन्थः पञ्चपादपर्यन्तमेव सीमित इति। अद्यापि एतादृशः पञ्चपादिकाग्रन्थः उपलभ्यते यस्मिन् इक्षत्यधिकरणस्य किंचिद्भागपर्यन्तं पञ्चपादिकाव्याख्यान-मुपलभ्यते। भामत्यां वैश्वानराधिकरणे तथा च दहराधिकरणे पञ्चपादिकामतस्य खण्डनम् उपलभ्यते। अतः एतद् स्पष्टं अस्ति यत् वाचस्पतिना कल्पतरुकारेण च पञ्चपादिकायाः अधिको भागो दृष्ट आसीत् इति।

एवं प्रकारेण सामान्यतः इदं स्वीकर्तुं शक्यते यद् पञ्चपादिकाग्रन्थः समग्रे शारीरकभाष्ये लिखितः आसीत् न तु चतुःसूत्रीपर्यन्तमेव। किन्तु एष ग्रन्थः अधुना पञ्चपादपर्यन्तमेव उपलभ्यते। *प्रबोधपरिशोधिनी, तात्पर्यद्योतिनी, पञ्चपादिकादर्पणम्, पञ्चपादिकाविवरणम्, ऋजुविवरणम्, विवरणतात्पर्यटीका, विवरणभावप्रकाशिका, तत्त्वदीपनम्, विवरणोपन्यासः* एते विवरणप्रस्थानस्य प्रमुखाः ग्रन्थाः सन्ति।

पञ्चपादिकामधिकृत्य प्रकाशात्मयतिना पञ्चपादिकाविवरणम् व्यलेखि। अस्य आविर्भावानन्तरम् अद्वैतवेदान्ते विवरणनाम्ना एकं नूतनं प्रस्थानम् आरब्धम्।

विवरणकारः प्रकाशात्मयतिः प्रतिबिम्बवादं समर्थयति। तस्य मतानुसारम् यथा जले व्यापकरूपस्य आकाशस्य प्रतिबिम्बः दृश्यते, तथैव देहधारिषु प्राणिषु ब्रह्मणः प्रतिबिम्ब एव 'जीव' इत्युच्यते। पञ्चपादिकाव्याख्याने प्रवृत्तो विवरणनामा ग्रन्थः बहुत्र इष्टसिद्धिकारस्य विमुक्तात्मनः मतमपि प्रतिपादयति।

प्रकाशात्मयतिभिः पञ्चपादिकाविवरणप्रणयनकालात् प्रागेव अद्वैतवेदान्तेषु बहवः प्रस्थानभेदाः अभूवन्निति तत्र नानामतोदाहरणादेव अनुमीयते। अत एव ते बहून् मतभेदान् संक्षेपतो निर्दिश्य क्वचिदेव स्वमतं निस्सन्दिग्धतया आविरकार्षुः।

प्रकाशात्मयतिः अवच्छेदवादं निराकृत्य अविद्याप्रतिबिम्ब एव जीव इति स्वपक्षं स्थापयति। मनननिदिध्यासनयोः अङ्गत्वं च विहितं श्रवणं प्रति इति वाचस्पतिमतं क्वचिदंशे त्यक्तमिव तथापि आत्माश्रिता अविद्याव्यवहारे जीवाश्रितैव लक्ष्यते।

भामतीमतानुयायिभिः ये सिद्धान्ताः प्रवर्त्तिताः तैः सह उपर्युक्तानां विवरणानुमतसिद्धान्तानां यो भेदोऽस्ति तस्य निरूपणमत्र संक्षेपतः क्रियते।

जीवब्रह्मणोः सम्बन्धविषये विवरणानुयायिनः प्रतिबिम्बवादं स्वीकुर्वन्ति। तेषाम् एष सिद्धान्तः अस्ति यद् अविद्यायाः आश्रयो ब्रह्म तथा विषयोऽपि ब्रह्म एव। विवरणप्रस्थानानुसारं मूलाविद्या एकैव। ते एतद् प्रतिपादयन्ति यद् शुद्धं ब्रह्म एव अखण्डाकारवृत्तेः विषयः। ते कर्मणां विद्यार्थत्वं प्रतिपादयन्ति। ब्रह्मसाक्षात्कारे शब्द एव करणम् इति विवरणानुयायिनः अभिप्रयन्ति। ते श्रवणादौ विधिरस्ति इत्यभिप्रयन्ति। तदनुसारं श्रवणमनननिदिध्यासनानां मध्ये श्रवणस्याङ्गित्वमन्येषां च अङ्गत्वमिति।

पञ्चपादिकाकारः पद्मपादाचार्यः अपि शङ्कराचार्यवत् माया-अविद्या-अव्याकृत-अग्रहणप्रभृतिशब्दानां पर्ययत्वेन प्रयोगं करोति। विवरणकारः प्रकाशात्मयतिः माया-अविद्ये पर्ययत्वेन निर्दिशति। अत्रैतत् ज्ञातव्यं वर्तते यद् शंकरोत्तरवेदान्ते जीवेश्वरयोः भेदप्रतिपादनार्थम् अविद्यामाययोरपि भेदः निरूपितः। विवरणे अविद्यायाः भावरूपत्वं स्वीक्रियते। प्रकाशात्मयतिः मूलाविद्यायाः एकत्वं स्वीकरोति न तु नानात्वम्। तस्या एकत्वे स्वीकृते सत्यपि विवरणकारः मूलाविद्यायाः अवस्थाभेदानङ्गीकृत्य जीवानां नानात्वमुपपादयन्ति। विवरणप्रस्थाने अविद्यायाः आश्रयः विषयश्च ब्रह्म इति प्रतिपाद्यते। वस्तुतः प्रकाशात्मयतेः मतानुसारम् आश्रयविषययोः भेदस्यापेक्षैव नास्ति। यतः एकस्मिन् एव वस्तुनि अविद्या-आश्रयत्व आवरणत्वपरकम् उभयमेव कार्यं सम्पादयति। यथा अन्धकारः आश्रयस्य कृते आवरणस्य कृते च वस्तुद्वयं नापेक्षते। तथैवाज्ञानमपि आश्रयार्थम् आवरणार्थं च वस्तुद्वयं नापेक्षते।

मिथ्याज्ञाननिमित्तः (अध्यासः) इति भाष्यवाक्ये 'मिथ्या च तदज्ञानं च मिथ्याज्ञानम्' इति वाक्यम् मिथ्येति अनिर्वचनीयता उच्यते, अज्ञानस्य इति जडात्मिका अविद्याशक्तिरिति प्रतिपादितम् पञ्चपादिकायाम्। अस्य व्याख्यानं प्रकाशात्मयतिः एवं करोति—**तत्र अज्ञानम् इत्युक्ते ज्ञानाभावमात्रमुक्तं स्यात् मिथ्या इत्युक्ते भ्रान्तिज्ञानं स्यात्, तदुभयव्यावृत्त्यर्थं निरूप्य पदार्थौ दर्शयति 'मिथ्या च तदज्ञानं च' इत्यादिना।**

कोऽयं जीवो नाम इत्यस्मिन् विषये विवरणकारः कथयति, ब्रह्मैव अविद्याप्रतिबिम्बितमिति वदामः। जीवब्रह्मणोः अभेदप्रतिपादनार्थमेव एतदुच्यते यद् जीवः ब्रह्मणः प्रतिबिम्बः वर्तते इति। तद्यथा—

**एक एव हि भूतात्मा भूते भूते व्यवस्थितः।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥**

अस्य मतस्य व्याख्यानं कुर्वता पद्मपादाचार्येण एतदुक्तं यत् **तत्त्वमसि इति महावाक्यं प्रतिबिम्बस्थानीयस्य जीवस्योपदिश्यते।** (पञ्चपादिका, प्रथमवर्णकम्, पृ० १०८)। पञ्चपादिकाकारस्य पद्मपादस्य मतं विवृण्वन् प्रकाशात्मयतिः यद् कथयति तदपि अवधेयं वर्तते—**अमूर्तस्य चाकाशस्य साभ्रनक्षत्रस्य जले प्रतिबिम्बवद् अमूर्तस्य ब्रह्मणोऽपि प्रतिबिम्बसम्भवात्** (पं:पा.वि., पृ० २८९)।

मुक्तजीवस्य स्वरूपविषये प्रतिबिम्बवादिनामपि आन्तरिकः मतभेदः अस्ति। संक्षेपशारीरककारस्य सर्वज्ञात्ममुनेः मतानुसारम् ईश्वरः जीवश्च उभौ एव ब्रह्मणः प्रतिबिम्बौ। मुक्तावस्थायां च प्रतिबिम्बभूतः जीवः बिम्बभूतशुद्धचैतन्ये अवस्थीयते।

किन्तु प्रकाशात्मयतेः मतानुसारं जीवः ईश्वरश्च उभौ प्रतिबिम्बरूपौ न स्तः। बिम्बभूतस्य चैतन्यस्य प्रतिबिम्बः जीवः तथा बिम्बस्थानीयं चैतन्यम् ईश्वरः। अत एव मुक्तिदशायां जीवः ईश्वररूपताम् आप्नोति न तु शुद्धब्रह्मरूपताम्। यावत्पर्यन्तं सर्वेषां जीवानां मुक्तिः न भवति तावत्पर्यन्तं मुक्तः कश्चित् जीवोऽपि ईश्वररूपतामाप्नोति न तु ब्रह्मरूपताम्। विवरणकारः प्रकाशात्मयतिरपि—'तस्य तावदेव चिरम्' अस्याः छान्दोग्यश्रुतेरनुसारं तत्त्वज्ञानानन्तरमपि देहेन्द्रियाणां किञ्चित्कालपर्यन्तमवस्थानं भवतीति स्वीकरोति। तद्यथा—**'प्रारब्धकर्मवतस्तस्य तत्त्वदर्शनं सशरीरस्येव सम्भवति। व्यासादीनाञ्च सशरीराणामेव अपरोक्षदर्शनं श्रूयते** (ब्र.सू.शा.भा. ४.१.१५)। शङ्करप्रवर्त्तितस्य जीवन्मुक्तेः सिद्धान्तस्य भामतीकारेण विवरणकारेण तथा वार्तिककारेणापि समर्थनं कृतम्। श्रवणमनननिदिध्यासनानामङ्गाङ्गित्वविषये विवरणमतानुयायिनामेतत् कथनमस्ति यद् मनननिदिध्यासनाभ्यां सहकृतेन श्रवणेन आत्मसाक्षात्कारः सम्भवति। तद्यथा—मनननिदिध्यासनाभ्यां फलोपकार्यङ्गिभ्यां सह श्रवणं नाम अङ्गि विधीयते। सर्वथा तावद् मनननिदिध्यासनाभ्यां अङ्गभूताभ्यां सह श्रवणविधिरस्त्येव। विशिष्टशब्दावधारणं प्रमेयावगमं प्रति अव्यवधानेन कारणं भवति प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात्।

विवरणप्रस्थानानुसारं यज्ञादिकर्मणामुपयोगः विद्योत्पत्तौ (ज्ञानोत्पत्तौ) वर्तते। तथाहि नित्यनैमित्तिकानुष्ठानेन संस्कृतस्य आत्मना यदि श्रवणमनननिदिध्यासनादीनि ज्ञानसाधनानि सम्पद्यन्ते तदा संस्कारकर्मणि सहकारिविशेषात् आत्मज्ञानमवतारयन्ति।

विवरणकारः प्रकाशात्मयतिः श्रवणे नियमविधिं स्वीकरोति। **तत्तु समन्वयात्** इत्यस्य सूत्रस्य भाष्ये शङ्करेण श्रवणादौ विधेः निषेधः कृतः, न तु श्रवणविधेः। किन्तु भामतीकारः वाचस्पतिमिश्रः श्रवणमनननिदिध्यासनेषु विध्यभावं मनुते। **आत्मेत्येवोपासीत** इत्यत्रापि विधिर्न, अपि तु विधिसरूपः वर्तते। एवमेव **आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यः** इत्यत्र श्रूयमाणः दर्शनविधिरपि विधिर्नापि तु विधिसरूपः।

विवरणकारः प्रकाशात्मयतिः आत्मसाक्षात्कारभूते न प्रसंख्यानस्य न च मनसः करणत्वं स्वीकरोति। तस्य मतानुसारं 'तत्त्वमसि' इत्यादि महावाक्यानि शब्द एव ब्रह्मसाक्षात्कारस्य करणम्। तस्य मतानुसारं **तं त्वौपनिषदम् वेदान्तविज्ञानसुनिश्चितार्थाः** इत्याद्याः श्रुतयोऽपि एतद् प्रतिपादयन्ति यत् वेदान्तवाक्यानां श्रवणातिरिक्तस्यान्यस्य कस्यापि साधनस्य ब्रह्मसाक्षात्कारे उपयोगित्वं नास्ति। ते शब्दापरोक्षवादं समर्थयन्ति। तथाहि—**इन्द्रियस्य यथा अपरोक्षज्ञानजनकत्वमेवं शब्दस्यापि तद्विरुद्धम्, अपरोक्षार्थविषयत्वस्य शब्दज्ञानेऽपि सत्वात्** (वि.भा.प्र., पृ. ४०३)। अतः विवरणानुयायिनां मतानुसारं शब्दः अपरोक्षवादस्य हेतुः। एवंप्रकारेण च महावाक्यश्रवणमेव आत्मसाक्षात्कारस्य करणम् न तु मनः। मनसः करणत्वस्य निषेधः **यन्मनसा न मनुते** इत्यादि श्रुतिष्वपि उपलभ्यते। **मनसैवानुद्रष्टव्यम्** इत्यादिश्रुतिषु मनसः या करणता निरूपिता सा शब्दस्य सहकारिरूपेणैव वर्तते। वार्त्तिककारः सुरेश्वराचार्यः अपि आत्मसाक्षात्कारं प्रति उपनिषद्वाक्यानां करणत्वं स्वीकरोति न तु मनसः। **[इति]**

# कालिदासस्तत्पृष्ठभूमिश्च

☐ अनन्तलाल ठाकुरः

## [१]

महाकविः कालिदासो भारतीयसंस्कृतेः सर्वोत्तमं रत्नम्। तस्य कृतिषु सर्वं तत् सुविन्यस्तं दृश्यते यद् यद् भारतवर्षस्यादर्शभूतं वस्तुजातं कृत्स्नस्य संसारस्य कृते। तस्य विषयसंकलनस्य स्वग्रन्थे विषयाणां यथोपदेशं परिवेषणस्य च रहस्यं स्वयमेव तेन कविसार्वभौमेन प्रकटीकृतं कुमारसम्भवे पार्वतीरूपनिर्माणमुत्प्रेक्षामुखेन वर्णयता—

**सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन।**
**सा निर्मिता विश्वसृजा प्रयत्नादेकत्र सौन्दर्यदिदृक्षयेव॥** [१।४९]

इत्यत्र कालिदासोऽपि प्रजापतिरिव कृत्स्नस्य भारतीयसभ्यतायाः रिक्थजातस्य सम्यक् संकलनेन तेषां सुचारुसन्निवेशेन निर्मितवान् स्वीयान् रुचिरान् काव्यप्रबन्धान् असाधारणेन नैपुण्येन प्रयत्नप्राग्भावेन चेति न तिरोहितं विशेषदृशाम्।

वैचित्र्यमयी भारतीया प्रकृतिः, भारतभूमण्डलस्य भारतीयेतिहासस्य च समृद्धान्युदाहरणानि ऋषीणां भूतार्थदृष्टयः उपनिषदामुदात्ततमाध्यात्मिकी जिज्ञासा दार्शनिकप्रस्थानेषु भूतविज्ञानेषु च निहितमौलतत्त्वगवेषणे निष्ठा अतीत-कविधौरेयाणां प्रतिच्छाया परम्परा च तत्कृतिषु सञ्जीविता इव दृश्यन्ते। तस्य विषयसम्भारः सर्वतः समायाति। महता प्रयत्नेनालङ्कृत्य वस्तुनो विन्यासोऽसाधारणनैपुण्येन तेन विहितः, येन भारतीया समृद्धिः भारतीयजातीयकविश्च सममेवात्मप्रकाशं विदधतः।

भारतवर्षे चतुर्वर्गापरनामकानां धर्मार्थकाममोक्षाणामनुसारेण प्राचीनशास्त्राणां चतुर्धा विभागः स्वीक्रियते। कालिदासस्तेषां समेषामधीतिरासीत्। धर्मसूत्रेष्वापस्तम्बाश्वलायनगौतमवसिष्ठकृतीनां, मनुयाज्ञवल्क्यपराशरधर्मसंहितानां, नरसिंहमार्कण्डेयपद्मवामनविष्णुस्कन्दहरिवंशमहापुराणानां च प्रभावोऽस्मिन् लक्ष्यीकृतो विशेषविद्भिः। कालिदासकृतिष्वितिवृत्तेषु रामायणस्य महाभारतस्य चाध्ययनं कालिदासस्य विशेषोल्लेखमर्हति। रघुवंशप्रारम्भे कालिदासः पूर्वकविभ्यो नतिनिवेदनं करोति। तेषु बाल्मीकेः स्थानं मुख्यमित्यनुमातुं शक्यते रघुवंशादौ बाल्मीकिवचसां तद्भावनानाञ्चातिसूक्ष्माणां सम्यगनुसरणात्। रघुवंशे च स्वयमेव महर्षिरन्यतमः कथापुरुषो रामायण इव। मेघदूते विरहिणी यक्षवधूः सीतानुकरणेन समालिखिता। तत्रालकावर्णने बाल्मीकिकृतस्य लङ्कावर्णनस्य उत्तरकुरुवर्णनयोश्च बाल्मीकिव्यासकृत्योरादर्शत्वं निश्चप्रचमेव। रघुवंशस्य कुमारसम्भवस्य च नामकरणविधौ रामायणस्यानुसरणं कालिदासस्येत्यनुमीयते[१]। **विमानमिव सिद्धानां तपसाधिगतं दिवि** [रामायणं १।५।१९] तथा **महीतले स्वर्गमिव प्रकीर्णम्** [रामायणं ५।१।६] मेघदूतस्य **शेषैः पुण्यैर्हृतमिवः दिवः कान्तिमत् खण्डमेकम्** [१।३०] इत्येतस्य मूलम्। रामायणे विश्वामित्रस्य तपश्चर्यावर्णनम् [१।६३।२३] कुमारसम्भवगतपार्वतीतपस्यावर्णनस्यादर्शभूतम्। रामायणस्थो **वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश** [६।५।७] इति श्लोकः—

**आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः।**
**पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति।।** [ २।४४ ] इति

यक्षविलापोक्तेर्मूलम् इति ध्येयम्।

शकुन्तलागतस्य **तूलराशाविवाग्निरिति** श्लोकांशः ( १।१० ) **तूलराशिमिवानल** इति रामायणोक्तेरनुवादः। रामायणे [ ६।८५।७ तथा ७।५७।४ ] रघुवंशे [ १४।४० ] **लोकापवादो बलवानिति** श्रीरामोक्तितः समानमुपलभ्यते। तथैव रामायणस्थो बाल्मीकेर्वर्णनापरः श्लोकपादः **शोकः श्लोकत्वमागतः** इति [ २।२।४० ] रघुवंशेऽपि **श्लोकत्वमापद्यत यस्य शोकः** इति [ १४।७० ] रूपं परिगृह्य समायाति।

कालिदासीये मेघदूते नायिका यक्षपत्नी बाल्मीकीयरामायणस्य सीताया आधारेण विनिर्मिता। उभयोर्भाषासाम्यमलङ्करणसाम्यं च तुलनीये। तथा हि—

**तां जानीथाः परिमितकथां जीवितं मे द्वितीयं**
**दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्।**
**गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां**
**जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम्।।** [ उ० मे० २२ ]

तुलनीयं—

**हिमहतनलिनीव नष्टशोभा व्यसनपरम्परया निपीड्यमाना।**
**सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना।।**

[ रामायणे सुन्दरकाण्डे १६।३० ]

अन्यत्र च मेघदूते—

**रुद्धापाङ्गप्रसवमलकैरञ्जनस्नेहशून्यं**
**प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्।**
**त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्याः**
**मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति** ।। [ २।३२ ]

तुलनीयं—

**तस्याः शुभं वाममरालपक्ष्मराजीवृतं कृष्णविशालशुक्लम्।**
**प्रास्पन्दतैकं नयनं मृगाक्ष्याः मीनाहतं पद्ममिवाभिताम्रम्।।**

[ रामायणस्य सुन्दरकाण्डं २९।२ ]

रघौ पुनः जनकपुरं समागतयो रामलक्ष्मणयोर्वर्णनविधौ कालिदासः—

**तौ विदेहनगरीनिवासिनां गां गताविव दिवः पुनर्वसू।**
**मन्यते स्म पिबतां विलोचनैः पक्षपातमपि वर्त्मनां मनः।।** [ ११।३६ ]

इत्ययं श्लोकः आर्षरामायणस्थं—

**प्रविशन्नाश्रमपदं व्यरोचत महामुनिः।**
**शशीव गतनीहारः पुनर्वसुसमन्वितः॥** [ १।२९।२४-५ ]

इति श्लोकं स्मारयति।

रघौ—

**काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेशयोः।**
**हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव॥** [ १।४६ ]

इति सुदक्षिणा दिलीपवर्णनम्—

**स रामः पर्णशालायामासीनः सह सीतया।**
**विरराज महाबाहुश्चित्रया चन्द्रमा इव॥** [ ३।७०।३४ ]

इति रामायणीयं पद्यं समनुहरति।

पुनः रघुवंशे—

**आसारसिक्तक्षितिवाष्पयोगान्मामक्षणोद् यत्र विभिन्नकोशैः।**
**विडम्ब्यमाना नवकन्दलैस्ते विवाहधूमारुणलोचनश्रीः॥** [ १३।२९ ]

इति श्लोकः—

**पद्मकोशपलाशानि द्रष्टुं दृष्टिर्हि मन्यते।**
**सीताया नेत्रकोशाभ्यां सदृशानीति लक्ष्मण॥** [ ४।१।७१ ]

रामायणीयस्य श्लोकस्य सादृश्यं विगाहते।

अत्रैव रघुवंशे—

**स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श।**
**अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम्॥** [ २।२७ ]

इति पद्ये कालिदासः रामायणगतस्य—

**लोध्रासु गिरिपृष्ठेषु सिंहकेसरनिष्ठुराः।** [ ४।१।७६ ]

इति श्लोकस्योपमानोपमेयविपरिवृत्त्यानुवादं कृतवान्।

कुमारसम्भवे—

**विधिना कृतमर्धवैशसं ननु मां कामवधे विमुञ्चता।**
**अनपायिनि संशयद्रुमे गजभग्ने पतनाय वल्लरी॥** [ ४।३१ ]

इति श्लोकः—

**ततस्तु तारा व्यसनार्णवप्लुता मृतस्य भर्तुर्वदनं निरीक्ष्य सा।**
**जगाम भूमिं परिरभ्य बालिनं महाद्रुमं छिन्नमिवाश्रिता लता॥** [४।२३।३२]

इति रामायणीयं श्लोकं स्मारयति।

**बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः।**
**कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः॥** [१४।८४]

रघुवंशीयोऽयं श्लोकः अंशतः—

**ततो गृहीत्वा रामस्तु शुभान्याभरणानि च।**
**अभवद् वाष्पसंरुद्धो नीहारेणेव चन्द्रमा॥** [४।६।१६]

इति रामायणश्लोकस्यानुकरणम्।

विक्रमोर्वशीयगतः—

**नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः**
**सुरधनुरिदं दूराकृष्टं न नाम शरासनम्।**
**अयमपि पटुर्धारासारो न बाणपरम्परा**
**कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी॥** [४।१]

इति श्लोकः—

**नीलमेघाश्रिता विद्युत् स्फुरन्ती प्रतिभाति मे।**
**स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी॥**
**सूर्यप्रभेव शैलाग्रे तस्याः कौशेयमुत्तमम्।**
**असिते राक्षसे भाति यथा विद्युदिवाम्बरे॥** [४।२८।१२-३]

इति श्लोकयुग्मकमनुहरति।

पुनश्च—

**शुकोदरश्याममिदं स्तनांशुकं कथं········नवशाद्वलमिदम्?**

इति विक्रमोर्वशीयगतं वाक्यं रामायणगतौ—

**बालेन्द्रगोपान्तरचित्रितेन विभाति भूमिर्नव शाद्वलेन।** [४।२८।२४]

**सशक्रगोपाकुलशाद्वलानि··················**
**गजाः ·सुरम्याणि वनान्तराणि।** [४।२८।४१]

इति श्लोकांशौ स्मारयति।

शाकुन्तलगतश्च—

**तुरगखुरहतस्तथा हि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु।**
**पतति परिणतारुणप्रकाशः शलभसमूह इवाश्रमद्रमेषु॥** [ १।२९ ]

इति श्लोकः

**तदुग्रशासने भर्तुर्विज्ञाय हरिपुङ्गवाः।**
**शलभा इव संछाद्य मेदिनीं संप्रतस्थिरे॥** [ ४।४५।२-३ ]

इति रामायणश्लोकानुवाद इवाभाति।

पुनश्च,

**वैदेहि पश्या मलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम्।**
**छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम्॥** [ १३।२ ]

इति रघुवंशश्लोकः रामायणगतस्य—

**स नलेन कृतः सेतुः सागरे मकरालये।**
**शुशुभे सुभगः श्रीमान् स्वाती पथमिवाम्बरे॥** [ ६।२२।७० ]

इति श्लोकस्योपस्थापनम्।

अशोकवनिकायां हनुमान् राक्षसीभिः समावृतां सीतां—

**ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम्।** [ ५।१५।१९ ]

इति बाल्मीकिवचनं मेघदूते पुनरस्यैव प्रतिध्वनिः यक्षप्रियावर्णने—

**प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः।** [ २।२६ ]

इति नातिकथनमपेक्षते।

विक्रमोर्वशीये चतुर्थेऽङ्के नायिकाप्रवृत्तिगवेषणपरस्य पुरूरवसः पर्वतसविधे कृतः प्रश्नः—

**सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी।**
**रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया॥** [ ४।५१ ]

अरण्यकाण्डान्तर्गतस्य सीतान्वेषणपरायणस्य रामचन्द्रस्य पर्वतान्तरसविधे कृतस्य प्रश्नस्याक्षरिकोऽनुवाद इति नातिकथनमपेक्षते। तथा हि बाल्मीकिवचनम्—

**कच्चित् क्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी।**
**रामा रम्ये वनोद्देशे मया विरहिता त्वया॥** [ ३।६४।२९-३० ]

रघौ कालिदासः 'तीरनिखातयूपां सरयूं' स्मरति। रामायणे च बाल्मीकिः 'सरयूं यूपमालिनीं' समुपस्थापयति। [ बा. रा. ६।१२३।५४ ]

[२]

महर्षिकृष्णद्वैपायनवेदव्यासात् कालिदासेन स्वकाव्यकृतीनां कृते नैतिकी धार्मिकी च पृष्ठभूमिर्लब्धा। चातुर्वर्ण्यस्य, आश्रमचतुष्टयस्य, चतुर्वर्गस्य, ऋणचतुष्टयस्य च स्तम्भचतुष्टयभूतस्य भारतीयसंस्कृतेः सूक्ष्मवर्णनविधौ संवादो दरीदृश्यते तत्रभवता व्यासेनात्र भवतः कालिदासस्य। अस्माभिः कतिचन वाचिकनिदर्शनानि संगृह्यन्ते। कुमारसम्भवे षष्ठसर्गे शङ्करसविधे—

**या नः प्रीतिर्विरूपाक्ष त्वदनुध्यानसंभवा।**
**सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम्॥** २१॥

इति हिमालयोक्तिः महाभारतान्तर्गतोद्योगपर्वणि न्यस्तस्य

**या मे प्रीतिः पुष्कराक्ष त्वद्दर्शनसमुद्भवा।**
**सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम्॥** [५।८९।२४]

इति विदुरवचनस्य प्रतिच्छाया।

भावगतसाम्यस्य वस्तुगतसाम्यस्य शब्दगतसाम्यस्य चासंख्येषूदाहरणेषु कानिचिदेवात्र समाह्रियन्ते।

**प्रतिपद्य यदा सूनुर्धरणीरेणुगुण्ठिता।**
**पितुराश्लिष्यतेऽङ्गानि किमस्त्यभ्यधिकं ततः॥** [महाभा. १।७४।५३]

इति शकुन्तलावचनम् अभिज्ञानशाकुन्तले—

**अङ्काश्रयप्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति।** [७।१७]

इत्यस्य दुष्यन्तवचसो बीजम्।

**अवाप्तमात्मनो मेने स राजा चक्षुषः फलम्।** [महाभा. १।७०।२९]

इति व्यासोक्तिः—

**माधव्य! अनवाप्तचक्षुःफलोऽसि येन त्वया दर्शनीयं न दृष्टम्।** [शा. २।७]

इति शाकुन्तलावस्थितस्य दुष्यन्तवाक्यस्य बीजम्।

तथैव शाकुन्तलगता—

**रूपोच्चयेन मनसा विधिना कृता नु।** [२।९]

इति पंक्तिः भारतगतां—

**लोकं निर्मथ्य धात्रेदं रूपमाविष्कृतं कृतम्।** [१।७०।३२]

इति पंक्तिं स्मारयति। एतदर्थकः कुमारसम्भवगतः—

**सर्वोपमाद्रव्यसमुच्चयेनेति** । [१।४९]

श्लोकः प्रागेवास्माभिर्दृष्टचरः।

**त्वमेव भर्ता न च विप्रयोग** इति रघुवंशगतं [ १४।६६ ] श्रीरामं प्रति सीतावचनं **त्वमेव भविता भर्ता** इति महाभारतगतं [ १।१८०।२८ ] पाण्डुं प्रति कुन्तीवचनमनुहरति।

**हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः** [ शाकु० ६।२८ ] इति कालिदासवचनं **हंसः क्षीरमिवाम्भसः** इति [ १।७४।९१ ] भारतवचनानुकारि।

**यतः सतां सन्नतगात्रि सङ्गतं मनीषिभिः साप्तपदीनमुच्यते** इति [ ५।३९ ] कुमारसम्भवगता पंक्तिः **प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः** इति [ ३।२९७।२६ ] **मैत्री सतां साप्तपदं वदन्ति** इति [ १२।१०२।८ ] च भारत-पंक्तियुगलनिर्भरेति द्रष्टव्यम्।

तथैव **शालप्रांशुर्महाभुजः** इति रघुवंश [ १।१३ ] गतविशेषणयुगलं **शालस्कन्धो महाबाहुरि**ति भारत [ ५।१२६।१५ ] गतविशेषणयुगलानुहारीति मन्तव्यम्।

**तूलराशिमिवानल** इति [ ७।२१।२४ ] महाभारतपंक्तिः **तूलराशाविवाग्निरि**ति शाकुन्तल [ १।१० ] वचनस्य मूलम्। एतेन प्रागुक्तरामायणवचनेन तूलराशाविवाग्निरित्येव शाकुन्तलगतः समीचीनः पाठः न तु पुष्पराशाविवाग्नि-रित्यनुमातुं शक्यते।

मेघदूते कुरुक्षेत्रवर्णनावसरे कालिदासेन—

**राजन्यानां सितशरशतैर्यत्र गाण्डीवधन्वा**
**धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि।** [ १।४८ ]

इति वाक्यखण्डः प्रयुक्तः। तत्संवादि भारतवचनं तावत्—

**ततः क्रुद्धो महाबाहुर्धार्यमाणः शरैर्भुवि।**
**शिरांसि रक्षिणां पार्थः कायेभ्योऽपाहरच्छरैः॥ ६॥**
**उद्भ्रान्तनयनैर्वक्त्रैः संबद्धौष्ठपुटैः शुभैः।**
**सकुण्डलशिरस्त्राणैः वसुधा समकीर्यत॥ ७॥**
**पुण्डरीकवनानीव विध्वस्तानि समन्ततः।**
**विनिकीर्णानि योधानां वदनानि चकाशिरे॥ ८॥** [ म. भा. ७।४९ ]

**क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः।** [ २।५३ ]

इति रघुवंशश्लोकार्धः

**क्षताद् यो वै त्रायतीति स तस्मात् क्षत्रियः स्मृतः।** [ १२।३०।१३८ ]

इति भारतश्लोकार्धमनुहरति।

**प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः।**
**निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः॥** [ १।३९ ]

इति रघुवंशश्लोकः

**तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः।**
**क्रमेण सुप्तामनुसंविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत्॥** [२।२४]

इति च रघुवंशश्लोकः

**जघन्यशायी पूर्वं स्यादुत्थाय गुरुवेश्मनि॥ १७॥**
**नाभुक्तवति चाश्नीयादपीतवति नो पिबेत्।**
**नातिष्ठति तथासीत नासुप्ते सति प्रस्वपेत्॥ २३॥** [महा० १३।१४३]

इति भारतपंक्तित्रितयं स्मारयतः।

**जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः।** [४।४२]

इति रघुवंशश्लोकार्धः

**बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत् प्रभुः।** [७।१७३।७]

इति भारतवाक्यस्य प्रतिच्छविः।

**राज्यमस्मै न्यवेदयदिति।** [रघुवंशः १५।७०]

इति कालिदासीयं वचनं महाभारतोक्तं

**राज्यं चास्मै न्यवेदयदिति।** [२।८०।३६]

वचनस्य पुनरुक्तिरिति बोध्यम्।

कालिदासस्य ग्रन्थेषु तत्कालसुविज्ञातयोस्तथागतबुद्धमहावीरयोः प्रत्यक्षः प्रभावो न दृश्यत इति किमपि वैचित्र्यावहमेतत्। न तयोः प्रत्यक्षः प्रभावः कालिदासकृतिषु इति तथ्यम्। कालिदासः खलु वेदेतिहासपुराणानुसारी। स्वाभाविकस्तस्य मनुबाल्मीकिवेदव्यासानुसरणम्। अश्वघोषकाव्ययोः प्रभावः कालिदासकाव्येषु विशेषविद्भिः दृष्टचरः। अभिज्ञानशाकुन्तलनाटकस्य नान्दीश्लोकस्तु ईश्वरवादविरोधकान् बौद्धजैनान् प्रति प्रच्छन्नस्तिरस्कार इति प्रतिभाति।

सुघोराद् ऋग्वेदीयरुद्रात् घोरशिवरूपधरयजुर्वेदीयरुद्रमाध्यमेन सर्वशङ्करस्य कालिदासीयशङ्करस्य रूपकल्पनविधौ बौद्धजैनादर्शयोः परोक्षप्रभावोऽनुमीयतेऽस्माभिः। तिर्यक्प्राणिषु उद्भिज्जेषु च कालिदासस्य सहानुभूतिस्तु तस्य स्वकीयैव। कालिदासीयनायका रघुरामदुष्यन्तपुरूरवःप्रभृतयः दुःखितेषु कृपालवोऽपि वेदविद्वेषिजनं प्रति विद्विष्टा दृश्यन्ते। अशिक्षितः कालिदासधीवरोऽपि अनुकम्पामृदुकस्य श्रोत्रियस्य पशुमारणकर्मणि दारुणत्वमुदाहरति। महाभारते धर्मव्याधोऽहिंसायाः सार्वत्रिकत्वं न सम्भवतीति निर्वर्ण्य तत्र यावच्छक्यमहिंसाचरणं कर्तव्यमिति निर्धारयति। तथा हि—

**अहिंसायां तु निरता यतयो द्विजसत्तम।**
**कुर्वन्त्येव हि हिंसां ये यत्नादल्पतरो भवेत्॥** [म० भा० ३।२०४।२४]

इति तद्वचनं विवेच्यम्। सर्वथा अहिंसानुसरणविधौ तु श्वासप्रश्वासानुपपत्तिः, आत्मघातश्चेति तत्रत्य सिद्धान्तः। नैष्ठिकवैदिकेषु अप्रतिविधेयपञ्चसूनाजनितप्रायश्चित्तविधानं वरीवर्तीत्यप्यत्र विवेचनीयम्।

## [ ३ ]

कौटिलीयार्थशास्त्रेऽपि सुतरां निष्णात आसीत् कालिदास इति तद्ग्रन्थालोचनातः परिज्ञायते। अर्थशास्त्रीय पारिभाषिकशब्दानां च कालिदासग्रन्थेषु सुप्रचुरः प्रयोगः। तत्र केषाञ्चन व्यवहारोऽत्र शृङ्गग्राहिकया प्रदर्श्यते। अस्ति तावत्—**क्रिया हि वस्तूपहिता प्रसीदतीति** रघौ [ ३।२९ ] कालिदासप्रयोगः। अर्थशास्त्रे पुनः **क्रिया हि द्रव्यं विनयति नाद्रव्यमिति** सूत्रं [ १।५ ] दृश्यते।

**सर्वः सगन्धेषु विश्वसिति द्वावप्यत्रारण्यकौ** इति शाकुन्तले शकुन्तलां मृगपोतकं चाधिकृत्येयं दुष्यन्तस्योक्तिः। अस्या मूलमपि अर्थशास्त्रे [ १।८ ] अनुसन्धेयम्। **न त्यजन्ति सगन्धत्वादमानुषेष्वपि चैतद् दृश्यते। गावो हि असगन्धं गोगणमतिक्रम्य सगन्धेष्वेवावतिष्ठन्ते** इति।

रघौ कुलगुरोर्वसिष्ठस्याथर्वक्रियानिष्णातस्य सकाशे रघोः दैवमानुषापत्प्रतिहन्तृत्वनिवेदनम्—

**अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः।**
**अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः॥** [ १।५९ ]

**दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम्॥** [ १।६०॥

अत्र **पुरोहितं दैवमानुषीणामथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत तमाचार्यं शिष्यः पितरं पुत्रः भृत्यः स्वामिनमिव चानुवर्तेत।** [ अर्थशास्त्रं १।९ ] इति कौटिल्यवचनमनुसन्धेयम्।

शाकुन्तले **तपः षड्भागमक्षय्यं ददत्यारण्यका हि नः।** [ २।१४ ] इति दुष्यन्तोक्तिः **उञ्छषड्भागमारण्यका अपि निर्वपन्ति** इति कौटिल्योक्त्यनुसारिणीति ध्येयम्।

रघोर्जन्मोत्सवे **कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथगर्भमर्मणीति** [ रघु० ३।१२ ] इति कालिदास-प्रयोगः। तत्र कौटिल्यनिर्देशः— **आपन्नसत्त्वायां कौमारभृत्यो गर्भमर्मणि प्रजनने च वियतेत** [ अर्थ० १।१७ ] पुनस्तत्र जातकार्यसम्पादनविधौ कालिदासवाक्यं **स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते।** [ रघु० ३।१८ ] इत्यत्र कौटिल्यनिर्देशः **प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात्** [ १।१७ ] इति।

शाकुन्तले पञ्चमाङ्के राज्ञ उक्तिः—**विज्ञाप्यतामुपाध्यायः सोमरातः अमून् आश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति। अहमप्यत्र तपस्विदर्शनोचितप्रदेशे स्थितः प्रतिपालयामि। वेत्रवति ! अग्नि-शरणमार्गमादेशय इति।** अथ चानन्तरमुपाध्यायस्य आश्रमिकानुद्दिश्य समाह्वानम्—**भोस्तपस्विनः, असावत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति पश्यतैनमिति।** एतयोराधारः कौटिल्यार्थशास्त्रे [ १।१९ ]

**अग्न्यागारगतः कार्यं पश्येद् वैद्यतपस्विनाम्।**
**पुरोहिताचार्यसखः प्रत्युत्थायाभिवाद्य च॥**

**तपस्विनां तु कार्याणि त्रैविद्यैः सह कारयेत्।**
**मायायोगविदां चैव न स्वयं कोपकारणात्॥**

इत्यत्रानुसन्धेयः।

शाकुन्तले द्वितीयेऽङ्के—**एसो वाणासणहत्थाहिं जवणीहिं वणपुप्फमालाधारिणीहिं परिवुदो इदो एव्व आअच्छदि पिअवअस्सो** [ एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृतः इत एवागच्छति प्रियवयस्यः ] इति विदूषकोक्तिः। अत्र कौटिल्यनिर्देशः– ( १।२१ ) **शयनादुत्थितः स्त्रीगणैर्धन्विभिः परिगृह्येत** इति।

अत्रेदमवधेयम्— इमे खलु यवना भारतीया आसन्। मनौ दशमाध्याये ( ४३-४ ) महाभारते चानुशासनपर्वणि पतितक्षत्रियेषु यवनानां सन्निवेशो द्रष्टव्यः। चक्रवर्तिक्षेत्रविजिगीषूणां पाण्डवानामार्यावर्ते दाक्षिणात्ये च यवनजयः सभापर्वणि व्याख्यातः। अभारतीयानां यवनानां जयप्रसङ्गो नासीत् पाण्डवानामिति निश्चप्रचम्।

कुमारसम्भवे औषधिप्रस्थस्थापने रघौ च मथुरास्थापने अभिष्यन्दवमनस्य चर्चा कालिदासेन कृता। तथा हि—

**( क ) स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम्।** [ ६।३७ ]

**( ख ) या सौराज्यप्रकाशाभिर्बभौ पौरविभूतिभिः।**
**स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता॥** [ १५।२९ ]

मूलमस्याभिष्यन्दवमनस्य कौटिलीयार्थशास्त्रे मृग्यम्। तथा हि तत्र **भूतपूर्वमभूतपूर्वं वा जनपदं परदेशावाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्।** [ १।२१ ]

शाकुन्तले षष्ठेऽङ्के दायाधिकारचर्चा समायाति। तथा हि **समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः। अनपत्यश्च किल तपस्वी। राजगामी च तस्यार्थसञ्चयः** इत्येतदमात्येन लिखितम् [ २२ श्लोकादनन्तरम् ]; अत्रार्थशास्त्रमनुसन्धेयम् **अदायकं राजा हरेत् स्त्रीवृत्तिप्रेतकार्यवर्जमन्यत्र श्रोत्रियद्रव्यात्** [ ३।५ ]; अत्रार्थे मनूक्तिः—

**अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः।**
**इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः॥** [ ९।१८९ ]

कालिदासचित्रितो दिलीपो**ऽधृष्यश्चाभिगम्यश्चे**ति रघुवंशोक्तिः [ १।१६ ] कुमारसम्भवगतो नगराजो हिमाचलश्चाभिगम्यः यथा **अद्य प्रभृति भूतानामभिगम्योऽस्मि शुद्धये** [ ६।५६ ]। अधृष्यत्वमभिगम्यत्वं च गुणविशेषौ। अर्थशास्त्रे [ ५।७ ] आभिगामिकगुणानां समेषां सङ्कलनं कृतम्। तथा हि **महाकुलीनो दैवबुद्धिसत्त्वसम्पन्नो वृद्धदर्शी धार्मिकः सत्यवाक् अविसंवादकः कृतज्ञः स्थूललक्ष्यो महोत्साहोऽदीर्घसूत्रः शक्यसामन्तो ? दृढबुद्धिचक्षुः परिषत्को विनयकाम** इत्याभिगामिकगुणाः।

धनञ्जयकृते दशरूपके नायकलक्षणे [ ३।२२ ] **अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान्** इति प्रयोगो दृश्यते। तत्र धनिककृतावलोकस्तावन्मुद्रितग्रन्थेषु यत्रेतिवृत्ते **'सत्यवागसंवादकानीतिशास्त्रप्रसिद्धाभिगामिकगुणैर्युक्त** इति विपर्यस्तो दृश्यते। अत्र नीतिशास्त्रपदेन कौटिलीयार्थशास्त्रपरामर्श इति ज्ञेयम्। तदनुसारेण प्रस्तुताया धनिकपंक्तेः विशुद्धं स्वरूपं **सत्यवागविसंवादकादिनीतिशास्त्रप्रसिद्धाभिगामिकगुणैर्युक्त** इत्याकारं भवेदिति।

मुद्रितमुद्राराक्षसे **चन्द्रगुप्तादपरक्ताः कुमारमाभिरामिकगुणयोगादाश्रयणीयमाश्रयामहे** इत्यत्रापि कुमारमाभिगामिकगुणयोगादिति पाठकल्पना श्रेयसीति मन्यामहे।

मृगया तावत् कामजव्यसनेषु प्रथमत्वेन मनुना पठिता निश्चिता च ( ७।४५-७ )। कालिदासः पुनर्मृगयाप्रशंसनपर इति दृश्यते। तथा हि शाकुन्तले द्वितीयेऽङ्के—

**मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः**
**सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।**
**उत्कर्षः स च धन्विनां यदिषवः सिद्ध्यन्ति लक्ष्ये चले**
**मिथ्यैव व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः॥** [ २।५ ]

अत्र श्लोके आद्यं पंक्तित्रितयमर्थशास्त्रगतायाः मृगयाप्रशंसायाः गद्यग्रथितायाश्छन्दोबद्धरूपमात्रम्। तथा हि **मृगयायां तु व्यायामः श्लेष्मपित्तमेदःस्वेदनाशः। चले स्थिरे च काये लक्ष्यपरिचयः। कोपभयस्थानेषु हि तेषु च मृगाणां चित्तज्ञानमनित्य** यानं चेति ( ८।३ )। अत्र कालिदासस्य कौटिल्यानुसरणं स्पष्टम्।

'वैतसी वृत्तिः' कालिदासेन समुल्लिखिता रघुवंशे—

**आत्मा संरक्षितः सुम्हैर्वृत्तिमाश्रित्य वैतसीम्।** [ ४।३५ ]

एतस्या वैतसीवृत्तेर्विवेचनमर्थशास्त्रे समायाति। **बलीयसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वैतसं धर्ममातिष्ठेत्** [ अर्थ० १२।१ ]

महाभारते राजधर्मपर्वणि त्रयोदशाधिकशततमेऽध्याये सरित्समुद्रसंवादे वेतसीवृत्तिर्व्याख्याता वर्तते। नदीवेगेन तीरजा वृक्षाः समुन्मूलिताः समुद्रपर्यन्तं प्रवाहिताश्च भवन्ति, कुतो वेतसस्तथैव नायातीति समुद्रप्रश्ने गङ्गायाः प्रतिवचनमत्र प्रासङ्गिकम्।

**तिष्ठन्त्येते यथास्थानं नगा ह्येकनिकेतनाः।**
**ते त्यजन्ति ततः स्थानं प्रातिलोम्यान्न वेतसः॥८॥**
**वेतसो वेगमायातं दृष्ट्वा नमति नापरे।**
**सरिद्वेगेऽव्यतिक्रान्ते स्थानमास्थाय तिष्ठति॥९॥**
**कालज्ञः समयज्ञश्च सदावश्यश्च नोद्धतः।**
**अनुलोमस्तथा स्तब्धस्तेन नाभ्येति वेतसः॥१०॥**
**मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च।**
**ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम्॥११॥**

**भीष्म उवाच**

**एवमेव यदा विद्वान् मन्यतेऽतिबलं रिपुम्।**
**संश्रयेद् वैतसीं वृत्तिमेतत् प्रज्ञानलक्षणम्॥१४॥**

मन्ये वैतसीयं वृत्तिः राजनीतिक्षेत्रे पितामहस्य भीष्मस्यैवावदानम्।

'दण्डोपनतचरित'मिति किमपि वस्तु कालिदासेन प्रस्तुतम्। दण्डबलेन वशीभूतस्य राज्ञो व्यवहारस्तेनाभीष्ट इति बोध्यम्। रघुवंशे—**तस्मिन् दण्डोपनतचरितं भेजिरे लोकपाला** (१७।८१) इति कालिदासप्रयोगः। एतस्य परिधारणार्थमर्थशास्त्रमेवाश्रयणीयम्। तत्रोक्तम्—

**संयुक्तचेलवत्सेवी विरुद्धः शङ्कितादिभिः।**
**वर्तेत दण्डोपनतो भर्तर्येवमवस्थितः॥ [अर्थ० ७।१५]**

**रात्रिन्दिवविभागेन यदादिष्टं महीक्षिताम्।**
**तत् सिषेवे नियोगेन स[अतिथिः]विकल्प पराङ्मुखः॥** [रघुवंशे १७।४७]

**अनेनैवोपायेनेति नियोगः। अनेन वान्येन वेति विकल्पः।**
**अनेन चान्येन चेति समुच्चयः।** [अर्थ० ९।७]

नियोगो विकल्पः समुच्चयश्चेति तन्त्रयुक्तयः। तन्त्रयुक्त्यनुसारेण चार्थशास्त्रं विरचितम्। तथा हि—

**एवं शास्त्रमिदं युक्तमेताभिस्तन्त्रयुक्तिभिः।**
**अवाप्तौ पालने चोक्तं लोकस्यास्य परस्य च॥** [अर्थ० १५।१]

### रघुवंशे

**कामं प्रकृतिवैराग्यं सद्यः शमयितुं क्षमः।**
**यस्य कार्यः प्रतीकारः स तन्नैवोपपादयेत्॥** [१७।५५]

अत्राह कौटिल्यः—

**क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम्।**
**विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम्॥**
**तस्मात् प्रकृतीनां क्षयलोभविरागकारणानि नोत्पादयेत्।** [अर्थ० ७।६]

रघुवंशे—

**शक्येष्वेवाभवद् यात्रा तस्य शक्तिमतो यतः।**
**समीरणसहायोऽपि नाम्भःप्रार्थी दवानलः॥** [१७।५६]

अत्राह कौटिल्यः—

**विजिगीषुः शक्त्यपेक्षः षाड्गुण्यमुपयुञ्जीत। समज्यायोभ्यां सन्धीयेत।**
**हीनेन विगृह्णीयात्।** [७।३]

साहित्यशास्त्रे वात्स्यायनीयकामशास्त्रीयप्रभावः सर्वजनविदितः। कालिदासग्रन्थेष्वपि तत्प्रभावः टीकाकाराणां समालोचकानां च मनोयोगमाकृष्टवान्।

**रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्।**
**वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोरथस्य॥** [कुमारसम्भवम् ७।७७]

किञ्चित् परिवर्तनमुखेन विषयोऽयं रघुवंशेऽपि व्यवहृतः।

**आसीद्वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी।**
**तस्मिन् क्षणे तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोरथेन।।** [रघु० ७।२२]

अत्र वात्स्यायनसम्मतिः—

**कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः खिन्नमुखी च भवति।**
**पुरुषस्तु रोमाञ्चितो भवति। एभिरनयोर्भावं परीक्षेदिति।**

शकुन्तलायाः पतिगृहयात्रावसरे पित्रा कण्वेन प्रदत्ता उपदेशपरम्परा कालिदासेन अनवद्ये सुप्रसिद्धे श्लोके निबद्धा। स हि श्लोकः—

**शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने**
**भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।**
**भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी**
**यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः।।** [शाकुन्तलम् ४।१७]

अत्र श्लोके आद्यपादत्रितयं वात्स्यायनीयकामसूत्रात् प्राप्तमिति निश्चप्रचम्। तथा हि कामसूत्रे वात्स्यायनोक्तयः—

**श्वश्रूश्वशुरपरिचर्या, भोगेष्वनुत्सेकः, परिजनदाक्षिण्यम्,**
**नायकापचारेषु किञ्चित्कलुषता नात्यर्थं विवदेत्** इति।

काव्येषु अश्वघोषस्य, नाटकेषु भासादीनां भरतनाट्यशास्त्रस्य च, अन्यत्रापि आयुर्वेदस्य गन्धर्ववेदस्य धनुर्वेदस्य वृक्षायुर्वेदस्य अन्येषां च शास्त्राणां स्वल्पाधिकः प्रभावः कालिदासग्रन्थेषु विद्यते। व्यक्तीकृतं च तत्सर्वं कालिदाससमालोचकैः। अस्माभिस्तु पठनपाठनावसरे ये प्रभावा लक्ष्यीकृतास्त एवात्रोल्लिखिताः।

अत्रेदमवधेयम्। **नास्त्यचौरः कविजनो नास्त्यचौरो वणिग्जनः** इति प्रसिद्ध आभाणकः। कालिदासस्य सौन्दर्यसङ्कलनं दोषायेति न मन्तव्यम्। विश्वस्मिन्नपि विश्वे शास्त्रेषु च सन्त्युपमाद्रव्याणि तेषां संग्रहो यथायथं प्रयत्नपूर्वको विनिवेशश्चेति तस्य कृत्यमिति प्रागेवास्माभिः प्रतिपादितम्। गृहीतवस्तूनां सुष्ठु सन्निवेशविधौ, तत्रापि स्वमनीषया सौन्दर्यातिरेकविधानं च तस्य स्वकीयो गुणः। तत्रायमतिशेते परान् इत्यत्र नास्ति सन्देहलेशोऽपि। चक्षुषा सौन्दर्यपानमिति रामायणे महाभारते च बहुधा प्रदृश्यते। इन्द्रियेण केनचिदिन्द्रियान्तरस्य कृत्यसम्पादनप्रदर्शनं सहृदयहृदयाकर्षकं भवेदेव। विषयोऽयं कालिदासेन स्वीकृतः। तत्स्वीकारे तु तस्य वैयक्तिकगुणप्राग्भावसन्निवेशो विशिष्य द्रष्टव्यः। तथा हि—

**पपौ निमेषालसपक्ष्मपंक्तिरुपोषिताभ्यामिव लोचनाभ्याम्।**

अत्र निमेषालसपक्ष्मपंक्तियोगेन उपोषिताभ्यामित्यस्य योगेन च आहृतविषये सौन्दर्यातिरेकयोगोऽनुभववेद्यः समेषाम्। अनेनातिरेकेण कालिदासोऽतिशेते परानिति नातिकथनमपेक्षते। **[इति]**

# अलङ्कार-लक्षणम्

□ शशिनाथ झा

काव्ये शब्दार्थौ समलङ्क्रियेते अनेनेत्यलङ्कार इति व्युत्पत्त्या शब्दाश्रितः शब्दालङ्कारोऽर्थाश्रितोऽर्थालङ्कारः। अलङ्करणमलङ्कार इति भावव्युत्पत्त्या काव्यशास्त्रपर्यायोऽलङ्कारः। तत्र प्रथमव्युत्पत्त्या निष्पन्नस्यालङ्कारस्य लक्षणं सर्वप्रथमं दण्डिना कृतम्—**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षत** इति[१]। तदनुसारं काव्यशोभायाः कर्त्तारोऽलङ्काराः काव्यशास्त्रे प्रधानं स्थानं लभन्ते। एवमेव वामनाचार्येणापि—**काव्यं ग्राह्यमलङ्कारात्, सौन्दर्यमलङ्कारः** इति सूत्रितम्[२]। एतेन अलङ्कारस्य विषयोऽतिव्यापको भवति।

सरस्वतीकण्ठाभरण-रत्नदर्पणकार-रत्नेश्वरमिश्रमतेन—**शोभानिर्वृतिहेतुर्विच्छित्तिरलङ्कारः** (३-१) इत्येव लक्षणम्। तत्र 'शोभाकर' शब्दस्थाने 'हेतु' पदं प्रयुज्यालङ्कारस्य प्राधान्यं न स्वीकृतम्, उक्तिविच्छित्तिरेवालङ्कार इति-प्रतिपादितम्। **वैचित्र्यमलङ्कार** इत्यपि प्राचां लक्षणम्[३]। तेन चमत्कारोत्पादकमेवालङ्कार इति व्यापकं लक्षण-मायाति।

परवर्त्तिभिराचार्यैरलङ्कारः शोभावर्धक एव कथितो, न तु शोभाकारकः। तेनास्य व्यापकताल्पीकृता भवति। मम्मटाचार्येणालङ्कारस्य लक्षणमित्थं प्रदर्शितम्—

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः**[४] ॥

अत्र 'हारादिवलङ्कारा' इत्येव लक्षणम्, इतरत्तु स्वभावकथनपरम्। जातुचिदिति कथनेनैव तस्योपलक्षणता स्वतःसिद्धा भवति। इदमलङ्कारलक्षणं गुणनिरूपणप्रसङ्गे गुणालङ्कारयोः पार्थक्यप्रदर्शनायोक्तम्। तत्र पूर्वार्धेऽलङ्काराणां परम्परया (शब्दार्थशोभासम्पादनद्वारा) रसोपकारकत्वं, तदपि न नियतरूपेणेत्युक्तम्। तेन साक्षान्नियतर-सोपकारकगुणेभ्योऽलङ्काराणां पार्थक्यं सूचितं भवति। उत्तरार्धेनालङ्कारलक्षणं भेदपुरस्सरं निगदितम्। तस्यायं भावः—यथा कण्ठाद्यङ्गोत्कर्षद्वारेण शरीरिणोऽप्युपकारका हारादयोऽलङ्कारा लोके भूषणशब्देन निगदितास्तथैव काव्ये शब्दार्थोत्कर्षद्वारेण रसस्याप्युपकारका अनुप्रासोपमादयोऽलङ्काराः साहित्यशास्त्रे प्रथन्ते। यत्र रसोपकारसम्भवस्तत्र तमुपकुर्वन्ति, यत्र च न सम्भवस्तत्र उक्तिवैचित्र्यमात्रपर्यवसायिनो भवन्ति, यथा हारादयोऽपि सुन्दर्या अङ्गानामुत्कर्षकाः, कुरूपायाश्चाङ्गे दृष्टिवैचित्र्यायैवेति[५]। ततश्च गुणातिरिक्ताः काव्यशोभातिशायिनोऽलङ्कारा[६] इत्येव निर्दुष्टं लक्षणं, सर्वबोधजनकञ्च।

एवमेव विश्वनाथकविराजोऽपि अलङ्कारस्वरूपमाह—

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्** ॥

—साहित्यदर्पणम्, १०-१।

अत्रापि शोभातिशायिनो धर्मा अङ्गदादिवदलङ्कारा इत्येव मुख्यतो लक्षणम्, अस्थिरत्वेन रसोपकारकत्वमिति गुणात्पार्थक्यबोधकमेव।

अत्र पदार्थसूक्ष्मताकलनपटवो नैयायिकादयः स्वशास्त्रीयं काठिन्यं साहित्येऽमलेऽपि निक्षिपन्ति, तत्सूक्ष्मतायाञ्च साहित्यं विदूरीकृत्य स्वनिर्मितं लक्षणमपि कलुषीकुर्वन्ति। तथाहि—काव्यप्रकाशीयमलङ्कारलक्षणं तैरित्त्थं परिष्क्रियते—**रसोपकारकत्वे सति रसावृत्तित्वम्, तथात्वे सति रसानियतस्थितिकत्वम्, अनियमेन रसोपकारकत्वं वेति त्रितयमलङ्कारत्वम्**—( जयरामभट्टाचार्याद्यनुसारि–काव्यप्रकाशबालबोधिनीव्याख्यानम् )। तदेतत् क्रमेण कामिन्यां कमले कलशे चातिव्याप्तम्—इति साहित्यदर्पणच्छाया[७]। तथाहि—कामिनी शृङ्गाररसस्यालम्बनविभावभूतापि गुणवत्तद्धर्माभावात् तदवृत्तिरिति। एवं कमलमुद्दीपनविभावभूतमपि रसाभाववति जलादौ विद्यत इति रसेन सह तस्यानियतस्थितिकत्वम्। कलशोऽपि कुचस्मारकतया कदाचिदेव शृङ्गारमुपकरोतीति। न च समुदितं त्रितयमप्येकमेव लक्षणमिति विचारेणापि निस्तारः, कामिन्यादावतिव्याप्तितादवस्थ्यात्।

*कुवलयानन्दचन्द्रिकाया*मपि निर्दुष्टालङ्कारलक्षणमुपन्यस्तम्[८]—**अलङ्कारत्वञ्च रसादिभिन्न-व्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम्।** एतमन्ते वाच्य-लक्ष्ययोरेवालङ्कारता। व्यङ्ग्यार्थे रसवदादीनामेवालङ्कारता। उपमादीनां व्यङ्ग्यत्वदशायां तत्प्राधान्येऽलङ्कारध्वनिः, अप्राधान्ये तु वस्तुमात्रम्। एतल्लक्षणस्यापि पूर्वोक्त-कामिनी-कमल-कलसादिष्वतिव्याप्तिः। तथाहि—अर्थसामान्यत्वेन कामिन्यादौ सत्यन्तं दलं संघटत एव, अपरदलमपि तथैव। अर्थविशेषरूपः कामिन्यादिः सामान्येन ज्ञातः सन् आनन्दकरो रसिकानाम्। किञ्च रसोपकारकत्वप्रतिपादनमप्यलङ्काराणां न विचारसहम्, अर्थादिद्वारा तथा प्रतिपादने तु अर्थादेरेव साक्षाद् रसोपकारकत्वेऽलङ्काराणां कुलालपित्रादिवदन्यथासिद्धत्वम्।

एवमेव अन्यैरपि विद्वद्वरेण्यैः निर्दुष्टमलङ्कारलक्षणं वाग्जालाडम्बराकलितं प्रदर्शितम्। तत्र पण्डितमधुसूदन शास्त्रिमहोदयै रसगङ्गाधरभूमिकायां[९], पं० रङ्गेश्वरनाथ मिश्रवर्यैश्च विश्वमनीषा-पत्रिकायां[१०] निर्दुष्टमलङ्कारलक्षणमित्थं प्रपञ्चितम्—

**अपराङ्गीभूत-रसभावादिभिन्न-व्यङ्ग्यभिन्नत्वे सति अनुप्रासोपमादिविशिष्ट-शब्दार्थान्यतरनिष्ठसमवायसम्बन्धावच्छिन्नचमत्कारनिष्ठ-कार्यता-निरूपित-समवायसम्बन्धावच्छिन्न-तादृशज्ञाननिष्ठकारणतानिरूपित-विषयितासम्बन्धावच्छिन्नावच्छेदकतानिरूपितालङ्कारीय-स्वरूपसम्बन्धावच्छिन्नावच्छेदकत्वम् अलङ्कारत्वम्** इति।

अत्र वक्तव्यम्—अलङ्कारलक्षणे उद्देश्यतयाऽलङ्कारशब्दप्रयोगो नोचितः। तद्विशेषाणामनुप्रासोपमादीनामुल्लेखस्तु सुतरामसङ्गतः। किञ्च स्वशास्त्रीयाचार्याणां लक्षणानुसारि सुबोधलक्षणप्रदर्शनमेव पाण्डित्यमुपयोगि च।

पण्डित मधुसूदनशास्त्रिभिः काव्यप्रकाशीयलक्षणे '*उपकुर्वन्ति* इत्यशुद्धम् *उपस्कुर्वन्ति* इत्येव वाच्यम् भूषणार्थे सुपोऽनिवार्यत्वात्' इत्युक्तं, तन्न तस्य उत्कर्षयन्तीत्यर्थात्, भूषणार्थविवक्षाभावात्।

पं० रामगोविन्दशुक्लैः[११] काव्यप्रकाशानुसारि लक्षणमित्त्थं प्रदर्शितम्—**साक्षात् परम्परया वा रसाद्युत्कर्षजनकत्वे सति शोभातिशायिकाव्यधर्मत्वमलङ्कारत्वम्। रसवदाद्यलङ्काराणां स्वरूपसम्बन्धेन, अनुप्रासोपमादीनां परम्परासम्बन्धेन रसभावाद्युत्कर्षजनकत्वम्।**

व्यङ्ग्योपमादि-वारणाय तत्तदलङ्कारलक्षणे प्रस्फुटं, वाच्यमित्यादिपदनिवेशः कृतो मान्यैः काव्यशास्त्रीयाचार्यैः। प्राचीनैस्तु व्यङ्ग्यभिन्नत्वनिवेशो न क्रियते। व्यापकरूपेणैवालङ्कारस्य क्षेत्रं स्वीक्रियते।

महामहिमोपाध्याय-पण्डित-कृष्णमाधव-झा-शर्मभिस्तु अलङ्कारलक्षणमित्थं[१२] परिष्कृतम्—

**अलङ्कारत्वञ्च रसादिभिन्न-व्यङ्ग्यभिन्नत्वे सति समवायसम्बन्धावच्छिन्न-चमत्कृतित्वावच्छिन्नजन्यतानिरूपितसमवायसम्बन्धावच्छिन्न-ज्ञानत्वावच्छिन्न-जनकतानिरूपित-विषयत्वसम्बन्धावच्छिन्नावच्छेदकता-निरूपितावच्छेदकतावत्त्वम्** इति।

लक्षणमिदं निर्भ्रान्तिसूक्ष्मविचारसरणिमाश्रित्य प्रस्तुतमस्ति। नात्र पूर्वोक्तलक्षणवदुद्देश्यतयालङ्कारशब्दस्तद्विशेषोपमादिशब्दो वा निगदितः। अनेन अलङ्कारस्य महती व्यापकता प्रकाशिता। व्यङ्ग्यातिरिक्तः सर्वोऽपि चमत्कारोऽलङ्काराधीन एवेत्यास्तां तावत्।

**सन्दर्भ-संकेतः**

१. काव्यादर्श, २-१
२. काव्यालङ्कारसूत्रवृत्तिः, १-१२
३. संकृत-आलोचना, बलदेव उपध्याय, पृ० १९६
४. काव्यप्रकाशः, ८-६७
५. काव्यप्रकाश-सुबोधिनी, वामन झलकीकरः, पृ० ४६५
६. व्यङ्ग्योपमादिनिरासाय तत्तदलङ्कारलक्षणे वाच्यत्वनिवेशः।
७. साहित्यदर्पणम्, हरिदासी टीका, पं० दुर्गाप्रसाद द्विवेदी, पृ० ४७४
८. तत्रैव।
९. रसगङ्गाधरः, मधुसूदनी व्याख्या।
१०. विश्वमनीषा, ६-३ ( १९८२ ई० ), दरभङ्गा।
११. काव्यप्रकाश-प्रदीपिका, पृ० ९४
१२. अलङ्कारविद्योतनम्, पं० कृष्णमाधव झा, पृ० २ कविशेखरपुष्पाञ्जलिः, १९७४, दरभङ्गा। **[ इति ]**

# ‘अनुभवविरुद्धत्वात्’ इति पण्डितराजः

□ गोपराजू रामा

पण्डितराजजगन्नाथः यस्मिन् कस्मिंश्चिदपि जटिलविवादसमाधाने ‘अनुभवम्’ प्रधानं प्रमाणं मनुते। अनुभवात् विरुद्धं यदि भवति तर्हि तत् शास्त्रविरुद्धमेव, नैव उररीकरणीयम् इति तेषां सिद्धान्तः। *रसगङ्गाधरे* यत्र ‘अनुभवम्’ आधारीकृत्य विषयस्य प्रमाणत्वं स्वीकृतं, ते विषयाः विवेच्यन्ते। तथाहि—

**( १ ) विलक्षणो हि कमनीयः काव्यव्यापारज आस्वादः प्रमाणान्तरजादनुभवात्** ( पृ. ३२ )।

काव्ये तावत् लोकोत्तरस्य काव्यव्यापारस्य महिमा अयं वर्तते यत् अप्रयोज्या अरमणीया अपि शोकादयः पदार्थाः आह्लादमलौकिकं जनयन्ति। तत्रानुभव एव प्रमाणम्।

**( २ ) रसनिष्पत्तेः प्रतिबन्धस्त्वनुभवसिद्धः इति तां प्रत्येव विरोध्यङ्गानां बलवतामभिव्यक्तेः प्रतिबन्धकत्वं न्याय्यम्** ( पृ. ६२ )।

पण्डितराजः अभिप्रैति यत् प्रकृतरसपरिपुष्टिमिच्छता विरोधिनोऽपि रसस्य बाध्यत्वेन निबन्धनं कार्यमेव इति। बाध्यत्वं च प्रबलैर्विरोधिनो रसस्याङ्गैः विद्यमानेष्वपि स्वाङ्गेषु निष्पत्तेः प्रतिबन्धः। अर्थात् स्वाङ्गेषु अभिव्यञ्जनोपकरणेषु विद्यमानेष्वपि, विरोधिरसस्य प्रबलैरङ्गैः तेषां प्राबल्यात् कस्यचित् बाध्यस्य रसस्य अनभिव्यक्तिः बाध्यत्वं नाम।

एवंस्थिते पण्डितराजः कथयति यत् यत्र रसनिष्पत्तेः प्रतिबन्धः अनुभवसिद्धः तत्र तां प्रति विरोध्यङ्गानां बलवतामभिव्यक्तिः जायेत इति कृत्वा तं प्रत्येव प्रतिबन्धकत्वं कल्प्यम् इति।

**( ३ ) तादृशकल्पनायाः निष्फलत्वात्, अनुभवविरुद्धत्वाच्च** ( पृ. १३९ )।

नानार्थबोधकस्थलेषु प्राकरणिकार्थबोधानन्तरमपरार्थोपस्थितिः जायते। तत्र प्रकरणादिज्ञानं तदधीनतात्पर्यज्ञानं वा परार्थोपस्थापने प्रतिबन्धकत्वं भवतु इति शङ्का। तत्र एवं समाधीयते यत् संस्कार-तदुद्बोधकयोः सत्वे अपरार्थोपस्थापक-स्मृतेः प्रतिबन्धो नास्ति।

ततः पुनः शङ्का उदेति यत् अत्रैव स्मृतावयं प्रतिबध्यप्रतिबन्धकभावः न स्मृत्यन्तरे इति। पण्डितराजः कथयति यत् तादृशकल्पनायाः निष्फलत्वात् अनुभवविरुद्धत्वाच्च।

**( ४ ) श्लेषे हि श्लेषभित्तिकमभेदाध्यवसानं द्वयोरर्थयोरिति सकलालङ्कारिकनिबद्धम्, अनुभवसिद्धं च** ( पृ. १६० )।

श्लेषालङ्कारे एकस्मात् पदाद् द्वयोः अर्थयोः बोधो भवति। तयोः द्वयोरर्थयोः श्लेषभित्तिकमभेदाध्यवसानं सकला-लङ्कारिकसंमतम् अनुभवसिद्धं च।

**( ५ ) व्यतिरेकस्य भगवद्विषयकरतिभावाङ्गताया अनुभवसिद्धत्वात्** ( १६३ )।

**निरुपादानसंभारमभित्तावेव तन्वते।**
**जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥**

अत्र व्यतिरेकध्वनिरिति प्राचीनैरुक्तम्। परन्तु अनुभवेन इदं स्पष्टं प्रतीयते यत् व्यतिरेकः अत्र भगवद्विषयकरतिभावस्य अङ्गं वर्तते। अतः गुणीभूतव्यङ्ग्यमेव।

( ६ ) **उत्प्रेक्षाद्यतिरिक्तातिशयोक्त्यपह्नवादिषु इव आहार्यज्ञानोपपत्तौ लक्षणायां बीजाभावात्, अनुभवविरोधाच्च** ( १९३ )।

'कृपया सुधया सिञ्च, हरे ! मां तापमूर्च्छितम्'। अत्र अतिशयोक्तौ विषयिणः उपमानस्य एव यथा विषयीकरणम् ( उपमेयतया स्थापनम् ) तथा अत्रापि 'कुरु' इत्यस्य विषयस्य स्थाने 'सिञ्चेति' विषयिणः प्रयोगः। अतिशयोक्तिसंवलने चायमर्थः—तापमूर्च्छितस्य ममोपरि सुधासेचनसदृशीं 'कृपां' कुरु इति फलितोऽर्थः। तथा च असमासस्थलेऽपि लक्षणास्वीकारे नानुपपत्तिरिति पूर्वपक्षः। उत्प्रेक्षादिकं विहाय अतिशयोक्त्यपह्नुत्यादिषु यथा आहार्यज्ञानेनैवोपपत्तिस्तथात्रापि आहार्यज्ञानेनैवोपपत्तौ लक्षणास्वीकारे हेतोरभावः, अनुभवविरोधश्चेति तत्समाधानम्।

( ७ ) **न चेहापि तथा, अनुभवविरुद्धत्वात्** ( पृ. २०४ )।

शुक्तिरजतभानस्थले तु शुक्तित्वेन भाने पुरोवर्तिनि रजतत्वभानस्य सर्वथैव रुद्धत्वात् रजतत्वभानसमये शुक्तित्वभाननिवारणमावश्यकम्। एवं प्रकारेण 'चन्द्रराजी विराजते' इत्यत्र लक्षणाज्ञानमाहात्म्यात् मुखत्वेनोपस्थितस्यापि मुखादेः शाब्दबोधश्चन्द्रत्वादिना भवति। मुखत्वेऽप्यस्मिन् मुखादौ चन्द्रत्वभानसामग्र्या मुखत्वादेः स्वधर्मस्य भानं न निवार्यते। एवं प्रकारेण एकस्मिन् धर्मिणि चन्द्रत्वादीनां मुखत्वादीनां च साक्षात् भानं भवति। यथा रजतत्वभानसमये शुक्तित्वभाननिवारणमावश्यकं भवति, नचेहापि तथा, अनुभवविरुद्धत्वात्।

( ८ ) **प्रतीयत इति चेत् पुनरपि पृच्छ हृदयमेव स्वकीयम्** ( पृ. २६९ )।

**रजोभिः स्यन्दनोद्धूतैः गजैश्च घनसंनिभैः।**
**भुवस्थलमिव व्योम कुर्वन् व्योमेव भूतलम्॥**

अत्र उपमानान्तरतिरस्कार एव फलम्। अत एवोपमेयेनोपमेत्यन्वर्थाभिधानम् इति उपमेयोपमां साधयन्ति अलंकारसर्वस्वकाराः।

पण्डितराजस्य मते द्वयोरुपमयोरेकधर्मकत्वाभावात् न उपमानान्तरतिरस्कारः। आद्यायाः उपमायाः अनुगामिधर्मत्वात्, द्वितीयायाश्च बिम्बप्रतिबिम्बभावापन्नधर्मप्रयोज्यत्वात्। एवं स्थिते सत्यपि उपमानान्तरनिषेधः प्रतीयत इति, उच्यते 'पृच्छ हृदयमेव स्वकीयम्' इति पण्डितराजः अर्थात् अनुभवविरोधः।

( ९ ) **अन्यत्वादिभिः अनन्यवस्तुप्रतीतेरेव चमत्कारित्वम्, नत्वनन्यत्वादिभिः, तेषामनुभवासंगतेः** ( ४१९ )।

रत्नाकरस्य मते असम्बन्धेन सम्बन्धस्य, कार्यकारणपौर्वापर्यविपर्यये च तेनैवानुपूर्व्यस्य निगरणं भवति चेदतिशयोक्तिः भवति।

पण्डितराजः वक्ति यत् 'अन्यत्वादिभिः अनन्यवस्तुप्रतीतेरेव चमत्कारित्वम् न त्वनन्यत्वादिभिः' इति। एवं च भेदेन अभेदस्य निगरणाभावे अभिन्नं वस्तु भिन्नं न प्रतीयेत, किन्तु तद्रूपमेव प्रतीयेत। ततश्च जायमानश्चमत्कारानुभवो-

ऽसंगतः स्यात्। तस्मादिदं निगरणं स्वतः प्राप्तमेव न नवीनतयाऽलंकारस्थानीयम्। एवमेव सम्बन्धे असम्बन्धनिगरणादिष्वपि बोध्यम्। अतः रत्नाकरोक्तं निगरणम् अलंकारेषु न गणनार्हम् इति भावः।

( १० ) **तस्मादेवंजातीयकेष्वलंकारेषु पूर्ववाक्यार्थघटकनामार्थानुरूपैः नामार्थैः तद्घटकविभक्त्यनुरूपाभिः विभक्तिभिः तदन्वयानुरूपेण चान्वयेन भाव्यमिति सहृदयहृदयं प्रष्टव्यम्** ( पृ. ४५२ )।

**तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति।**
**स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरसं समीक्षते॥**

अत्र श्लोके यदि दृष्टान्तालंकारः इष्यते तर्हि पादपङ्कजे निवेशितात्मा इत्यत्राधारसप्तमी वर्तते। 'स्थितेऽरविन्दे' इत्यत्र सतिसप्तमी। वस्तुप्रतिवस्तुभावस्य बिम्बप्रतिबिम्बभावस्य वा आनुरूप्यं नास्ति। सर्वथा असंष्ठुलता वर्तते। अत्र सहृदयानां अनुभवः अयमस्ति यत् पूर्ववाक्यार्थघटकनामार्थानुरूपैः नामार्थैः तद्घटकविभक्त्यनुरूपाभिः विभक्तिभिः तदन्वयानुरूपेणान्वयोऽपेक्ष्यते इति। अतस्तथाविधस्य आनुरूप्यस्याभावात् न प्रतिवस्तूपमालंकारः, न वा दृष्टान्तालंकारः।

( ११ ) **अक्षरभेदस्त्वाकारभेदत्वात् अविरुद्ध एवेति सहृदयैराकलनीयम्** ( पृ. ४७९ )।

**दृढतरनिबद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य।**
**कृपणस्य कृपाणस्य च केवलमाकारतो भेदः॥**

अत्र उपमानात् उपमेयस्य उत्कर्षरूपो व्यतिरेकः इति **सर्वस्वकारः**। उत्कर्षप्रयोजकधर्मस्यात्रानुपस्थितेः उपमेयस्य उत्कर्षरूपो व्यतिरेको न भवितुमर्हति। यदि श्लेषेण दीर्घाक्षरस्योपस्थितिरस्त्येवेति वक्ष्यते तस्य च उपमानवृत्तित्वेन उपमेयस्य उत्कर्षो न भवितुमर्हति। अत्र श्लेषः व्यतिरेके नानुकूलः। प्रत्युत उपमायामेव अनुकूलः। प्रतिकूलस्य दीर्घाक्षररूपवैधर्म्यस्य साधारणीकरणात् आकृतिभेदस्योपमोपमेययोरपि सत्त्वात्। अनुभवः इदं सूचयति यत् अक्षरभेदस्त्वाकारभेदत्वात् अविरुद्ध एवेति।

( १२ ) **गुणप्रधानभावश्च निराग्रहैः सूक्ष्मदृशा अवधानीयः** ( पृ. ४८७ )।

सहोक्त्यलंकारे तावत् अभेदाध्यवसायरूपातिशयेन सहोक्तेः कवलीकारात् सहोक्तेः निर्विषयत्वं स्यादिति शङ्का।

तत् समाधीयते यत् अभेदाध्यवसानमूलायां हि सहोक्तौ अभेदाध्यवसानेन सहोक्तिः उपस्क्रियते। अतः न गुणेन प्रधानस्य तिरस्कारः। अपि तु प्रधानेन गुणस्य तिरस्कार इति सावकाशैव सहोक्तिः। तत्र गुणप्रधानभावः निराग्रहैः सूक्ष्मदृशा अवधानीयः।

( १३ ) **किन्तु प्रकृतवाक्यार्थघटकाः पदार्थाः तादात्म्येन अप्रकृतघटकपदार्थालीढाः एव वैशिष्ट्यमनुभवन्तो महावाक्यार्थरूपेण परिणमन्तीति सूक्ष्ममीक्षणीयम्** ( पृ. ५०६ )।

अत्र सूक्ष्ममीक्षणीयं किमिति चेत् समासोक्तौ शब्दतः प्रकृतवाक्यार्थघटकानां पदार्थानां प्रत्ययो यद्यपि भवति परं ते ( सूर्यनलिन्यादयः पदार्थाः ) अप्रकृतवाक्यार्थावयव-नायक-नायिकादि-पदार्थाभिन्नतया प्रतीयन्ते। एवं प्रकृतव्यवहारबोधकः प्रकृतवाक्यार्थबोधः पृथक् भवति, अप्रकृतव्यवहारबोधकः अप्रकृतवाक्यार्थबोधः पृथक् भवति। परं तौ अवान्तरवाक्यार्थपदवाच्यौ। प्रकृताप्रकृतवाक्यार्थयोः सम्मिलितबोधस्तु महावाक्यार्थरूपेण भवति।

( १४ ) **अपरञ्च सर्वोऽपि व्यङ्ग्यप्रपञ्चः पर्यायोक्तकुक्षौ निक्षिप्तः। न हि अनुभवसिद्धोऽर्थो बालेनापि अपह्नोतुं शक्यते** ( पृ. ५५५ )। स्पष्टम्। **[इति]**

# महाकविनारायणः तत्प्रणीता राघवविरुदावली च

□ इन्द्रनाथ झा

संस्कृत-साहित्यजगत्यनेके यशःप्राप्ताः कवयः संजाताः। समेषां कृतय एव यशसः कारणमस्ति। राजसंरक्षण-प्राप्ति-परिपाटी भारते प्राचीनकालादेव प्रचलिताऽऽसीत्। राजसभास्थितास्ते कवयः स्वाश्रयदातारं नृपतिं प्रसाद्यार्थिक-साहाय्यं चावाप्य स्वकीयरचनाः प्रकाशितवन्तः। किन्तु ये समाश्रयदातारं प्रसाद्यापि रचनाप्रकाशनं न कारितवन्त-स्तेऽद्यापि साहित्यप्रेमिपाठकमध्येऽपरिचिता एव सन्ति। तथाविधेष्वेवास्ति नरोन (-नरोनय सोल्हनी) कुलोद्भवो महाकविर्नारायणः। यद्यप्ययं कविननिकरचनाप्रणेता किन्तु 'एकश्चन्द्रस्तमो हन्ति' इतिवत् अस्य कवेः एकैव *राघवविरुदावली* नाम्नी कृतिर्यशःकरी विद्यते। मिथिलायाः खण्डवलावंशीयनृपतेष्ठक्कुराख्यस्य नरपतेः पुत्रो राघवसिंहो नाम राजा बभूव। मिथिलातत्त्वविमर्शानुसारेण १७०१-१७३९ ख्रीष्टाब्दावधितस्य राजशासनमासीत्। उत्तमो राजप्रबन्धो राघवसिंहस्यासीत्। केवलं राजपदधार्यपि स लोके स्वप्रतापाद् गुणगौरवाच्च महाराजपदेन प्रथित आसीत्। वस्तुतः सर्वे राजगुणास्तदवलम्बिन आसन्। **'रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते'** इति महाभारतीयशान्तिपर्ववचनं तदर्थं सार्थकमासीत्। **'राजा प्रकृतिरञ्जनाद्'**भवतीति कालिदासीयवचनमनुसरन् राजा राघवसिंहः प्रजाहिततत्परः सन् प्रजानुरञ्जनं कर्तुमहर्निशमुत्सुक आसीत्। यादृशी तस्य प्रजानुरञ्जनशीलता तादृश्येव दानशीलता धर्मपरायणताऽपि तस्य मन्ये चरणावलम्बिनी आसीत्। मिथिलायां 'ब्रह्मोत्तर'शब्दस्तस्यैव नृपतेः कृतार्थो भवेत्। निःशुल्कभूमिरेव ब्रह्मोत्तररूपेण प्रजासु वितरितानेन। तस्य समयेऽनेकानि मन्दिराणि देवतानां निर्मापितानि। तन्निर्मापितमन्दिरेषु भौराग्रामे 'राघवेश्वरशिवमन्दिरं' प्रसिद्धम्। तत्सन्निधावेव पत्न्या राघवप्रियया 'राघवप्रियेश्वरशिवमन्दिरं' निर्मापितम्। अपरया पत्न्या राघवकान्तया ग्रामसमीप एव ककनाग्रामे राघवकान्तेश्वर महादेवस्य मन्दिरनिर्माणं कारितम्। महाराजराघवसिंहस्यासीत् 'मधुरवाणी' नाम्नी एकैव भगिनी या नरोनयकुलोद्भवेन झोपाख्यहरिजीवशर्मणा सह विवाहिता। हाटी प्रगन्नायां पलिंवाड़ग्रामे तन्नाम्ना 'मधुरवाणीश्वर' शिवमन्दिरं निर्मितं विद्यते। कस्यापि मन्दिरस्य कीर्तिशिलालेख-लेखनपरिपाटी विद्यते। तदनुसारेण तस्य मन्दिरस्य कीर्तिशिलालेखस्तेनैव पूर्वोक्तनरोनयसोल्हनीमूलकेन श्रोत्रियवंशोद्भवेन महामहोपाध्यायपण्डित नारायणझा शर्मणा लिखित आसीत्। शिलालेखेन लेखकस्य वैदुष्यमवगन्तुं शक्यते। अष्टश्लोकात्मके शिलालेखे प्रथमं शिवं नमस्कृत्य राज्ञो राघवसिंहस्य महिमपरिचयो नारायणकविना दत्तोऽस्ति। दृश्यताम् पाण्डित्यम्—

**ॐ नमः शिवाय**

**आसीन्नासीरदासीभवदरिनिवह(ः)क्ष्माभृतां कोऽपि धन्यः**
**पुण्य(ः)श्रीशालिखण्डोरयभवरसमाहूतिवंशाग्रगण्यः ।**
**सोमस्तोमौवदातस्फुरदमलयशो-राशिरस्वीकृतान्य-**
**स्त्रीकः श्रीकण्ठभक्तिस्फुटघटितमतिस्तीरभुक्तीश्वरो यः ॥**

शिलालेखस्यान्ते कविना नारायणेन स्वनामोल्लेखोऽपि कृतोऽस्ति, तद्यथा—

**शिवचरणस्फुरदम्बुजभक्तिरास्वादमुदितेन ।**
**नारायणेन कविना पद्यान्येतानि निर्ममिरे॥**

कविः कीर्त्तिशिलालेखस्य नरोनयवंशोद्भव इति म.म. पण्डितपरमेश्वर झा महाभागेन प्रतिपादितमस्ति।

स एव पण्डितवरेण्यो झोपह्वो नारायणो राज्ञो राघवसिंहस्य सभामलङ्कुर्वाण आश्रयदातारमाश्रित्य **'राघवविरुदावली'**ति नाम्नीं कृतिं व्यरचत्। कृतिरियं महाराजाधिराजरमेश्वरसिंहाज्ञया सरिसबग्रामनिवासिना स्व. प. पुण्यनाथझाशर्मणा दरभङ्गाराजमुद्रणालये शाके १८४६ वर्षे (१९२४ ख्रीष्टाब्दे) प्रकाशिता नरहीग्रामस्थपण्डित सहदेवझामहोदयस्य संशोधकत्वे। ग्रन्थस्य नाम्नैव ज्ञायते यदस्मिन् राघवसिंहस्य प्रशंसा लिखिताऽस्ति। यादृग् व्यक्तित्वमासीद् राघवसिंहस्य तादृगेवात्र विशदीकृतमस्ति। ग्रन्थे सर्वप्रथमं भगवत्याः पार्वत्याः स्तुतिर्दृश्यते। तदनन्तरं देवकलिका मतिल्लावृत्ते राघवस्याभ्यर्थना कृताऽस्ति। राज्ञो दानशीलताया वीरतायाः संकटनाशकतायाश्च मनोरमं वर्णनमत्र कृतम्मिलति। दृश्यताम्—

**जय जय याचकवृन्दसुरद्रुम, जय करभापरितर्जितविद्रुम।**
**जय शरणागतविघ्नविनायक, जय परवारणवारणसायक॥**
**जय मिथिलाधरणीपतिनायक, जय जय सर्वसमीहितदायक।**
**जय बहुदुर्गतदुर्गतिमोचन, जय नवमञ्जुलकञ्जविलोचन॥**
**जय निजभृत्यविनिर्धुतशोचन, जय जय सुजनसरोजविरोचन॥**

उपरिलिखितगुणानुरूपमेव तस्य सौन्दर्यमपि कविना वर्णितमस्ति, तद्यथा—

**वीरश्रीराघवेन्द्र त्वयि भवति जगज्जेतुकामेऽभिरामे,**
**ग्रामे ग्रामे रिपूणां प्रसरति परितो हा रवः कामिनीनाम्।**
**नादैस्त्वद्दुन्दुभीनां बत! सपदि धरामण्डले कम्पमाने,**
**के वा के वा न सेवामधिमहि भवतो भूमिदेवा भजन्ते॥**

पण्डित नारायणझामहाभागो राघवविरुदावल्याम् आभीरवृत्तं, वीरविरुदम्, अच्युतचण्डवृत्तं, पल्लवितचण्डवृत्तं, सामान्यचण्डवृत्तं, गुणवतिचण्डवृत्तं, वीरभद्रचण्डवृत्तं, चञ्चलावृत्तं, कन्दलचण्डवृत्तं, पद्मावतीवृत्तं, वेष्टनकचण्डवृत्तं वीराक्षरमालाविरुदमित्यादि विभिन्नवृत्तान्याश्रित्य स्वपाण्डित्यं प्रदर्शितवानस्ति। अत्र वर्णितानि च्छन्दांसि साम्प्रतं छन्दोमञ्जरीग्रन्थे न प्राप्यन्ते। ग्रन्थस्यास्य च्छन्दोविन्यासः संक्षेपेणात्र प्रदर्श्यते, यथाऽच्युतचण्डवृत्तम्—

**प्रचुरसपक्षाक्षयकरलक्षप्रतिबलकक्षप्रदहनदक्ष**
**क्षुभितविपक्षद्विजवरलक्षप्रणिहितरक्षक्षितिधरपक्ष**
**च्छिदिधृतकक्षप्रमुदितपक्षप्रभुसमकक्षस्फुरितवलक्ष**
**स्वयशःस्वच्छक्षितितलभक्षप्रचयविलक्षस्वप्रतिपक्ष।**

इत्यादौ वर्णनसौष्ठवमनुप्रासन्यासञ्चावलोक्य साहित्यप्रेमिणो मुदिता भवेयुः। वीरविरुदाभीरवृत्तयोर्नृपतेः प्रशंसा दृष्टव्या

**चिन्तासुखितमहेश, सन्तापितरिपुदेश।**
**दन्तावलिविनिवेश यन्ता त्वमसि नरेश॥**
**चिन्तामणितुलितेश रन्ता रणगरिमेश।**
**दन्तांशुकपरिवेश हन्ता सुहृदनिवेश॥**

वीरकलिका पल्लवितचण्डवृत्ते—

**शङ्कर खेलाकररणजितपर किङ्करहेलाजितहिमसितधर।**
**मञ्जुलमल्लाधिकबल धृतकलवञ्जुलतल्लातकयुतवनतल॥** इति

राघवसिंहस्य सौन्दर्यातिरेको वीरश्लोकस्रग्धरावृत्ते कविना निबद्धोऽयमवलोकनीयः—

**वीरश्रीतीरभुक्तिक्षितिरमण दिवि स्वर्नटीगीयमाने।**
**त्वद्रूपस्यैकदेशे रतिरपि न रतिं हन्त पत्यौ विधत्ते॥**

वीरबिरुदस्य विन्यासोध्यातव्योऽत्र—

**शासितामित्र वासिताचित्र नोषिताभक्त तोषितासक्त**
**पोषिताशक्त योषितासक्त कामिनीसङ्ग-यामिनीरंग।**
**धारिताधार वीरतातारपीलितानंग शीलिताभंग**
**तारिताविष्ट दारितानिष्ट ।**

वीरकलिका-सामान्यचण्डवृत्ते राघवसिंहम्प्रति कवेः प्रशंसात्मकं सम्बोधनं द्रष्टव्यं—

**गन्धर्वावलिजितबहुदेश बन्धव्याकुलविविधनरेश।**
**चक्रासादितशयसुतवेश वक्राम्भोधरसुरुचिरकेश॥**
**यानास्कन्दितरिपुकृतवर्ण दानान्दोलितशिविवलिकर्ण।**
**भंगासादनविकलविपक्ष वंगाधीशदमनरणदक्ष॥**
**नित्याराधनमुदितमहेश, कृत्याऽम्बरचकितसुरेश।**
**दूरादागतकृतपरितोष शूराहितनृपचयजितकोष॥**
**गर्वानीचमुदितकरिवृन्द शर्वाणीपदकमलमिलिन्द॥**

कविर्नारायणो राघवसिंहस्य चारित्रिकवैशिष्ट्यं जितेन्द्रियत्वमन्यं गुणविशेषञ्च येन प्रकारेण वर्णितवानित्यत्र सम्यग् विचारणीयं—

**जयनिर्जितमन्मथ चारुलसत्कथ**
**सत्पथसकलव्यथितवसो हृतवैरिवसो,**
**नवहीरकजालविराजितभाल**
**विशालविमलतरकुन्तधृते मिथिलाधिपते**
**मलयद्रुमशीतलविजित महीतल,**
**पीतलसत्परिषद्वसते···** इत्यादि।

शूरश्लोकचञ्चलावृत्ते कवेर्वर्णननैपुण्यमद्भुतमस्ति, दृश्यताम्—

**उन्नमत्कशावलोक सम्भवद्रसाविमोक।**
**विस्फुरन्नसाविरोकवलितप्रभञ्जनाः ॥**
**प्रस्फुरन्निगालवारि चारुहीरमालभारि।**
**किङ्किणीविशालतारि सम्पदेकगञ्जनाः॥**

वीरबिरुदकन्दलचण्डवृत्तनिबद्धा कवेर्वर्णनचातुरी—

**सङ्कटमोचन कङ्कटरोचन सञ्चितसज्जन वञ्चितदुर्जन**
**रञ्जितसद्भट गञ्जितदुर्भट निर्णयधारक दुर्णयवारक...**

इत्यादौ द्रष्टव्या।

नानाविधच्छन्दोनिबद्धरचनानिपुणो नारायणो राघवविरुदावल्यां वीरकलिकापद्मावतीच्छन्दोभ्यां राजानं सम्बोधयन् तं प्रशंसति, तद्यथा—

**त्वयि चलति विजेतुं भुवनमसेतुं निन्दन्तः सरितं परितः।**
**परिहृतशिशुदारा मुक्ताहारा निविशन्ते रिपवो विपिने॥**
**विपिनेऽपि सशङ्का विदधति रंकाकृतिवपुषो न सुखाधिगमम्।**
**अर्जितबहुधन वर्जितखलजन तर्जितनवघन ।**
**गर्जितकरिगण, भूषितनिजबल... ॥** इत्यादि।

वीरश्लोकेन महाकविर्नारायणो राघवसिंहस्य वीरताया वर्णनमनेन प्रकारेण कृतवानस्ति—

**यावत्ते भूमहेन्द्र प्रचलनपटहध्वानमाकर्णयन्तः**
**पृथ्वीपालाः कियन्तः क्षितिधरविपिनं शत्रवः संश्रयन्ति।**
**उन्मीलद्दानवारां नगरपरिसरे जायते गर्जितानां**
**तावत्त्वद्वारणानां घनघटितघटाघोरघण्टानिनादः।**

अत्र कवेरनुप्रासालङ्कारविन्यासो ध्यातव्योऽस्ति। गेयच्छन्दसा वीरकलिकया पण्डितनारायणो राज्ञो राघवस्य राजधानी-वर्णनमतिरोचकरूपेण कृतवान्, तद्यथा—

**दरमुग्धकेसरनागकेशरचम्पकावलिवञ्जुला ।**
**परिमन्ददलदरविन्दकुन्दकदम्बकेतकमञ्जुला ॥**
**बहुयूथिकागिरिकर्णिकानवकर्णिकारविराजिता ।**
**नवमालतीबकबन्धुजीवकमल्लिकालिसभाजिता ॥**
**तव पूरियं वरवाजिराजितमन्दुरावलिमण्डनी ।**
**मिथिलाधिराज विराजताममरावतीमदखण्डनी ॥**

महाकवेर्नारायणस्य प्रतिभा वीराक्षरमालाबिरुदे दृश्यते यत्र तेनाकारादिक्रमेण हवर्णपर्यन्तं येनविधिनाश्रयदातारं सम्बोधयता राघवबिरुदावलीकृतिर्विरचिता। वर्णनशैली निश्चितमेव प्रशंसास्पदा, दृश्यताम्—

**अनुगतभृतिकर आहुतिधनपर। इषुरणमण्डन ईतिविखण्डन ॥**
**उदितयशोभर ऊहविबुधवर। ऋषिभाषितमत ऋभररिपुनत ॥**
**× × × ×**

**शरहतपरहय षड्गुणनयवर सकलकलाधर हयगतिकृतरय**
**क्षमनृप जय जय ॥**

राजतन्त्रात्मकव्यवस्थाप्रशंसकेन सभाकविना पण्डितनारायणेन नरपतेस्तस्य राघवसिंहस्य राज्यकामनां कुर्वता तस्यायुःकामनाऽपि विहिता। राजा कदाचिन्निरङ्कुशो न जायतामिति बुद्धया पालकत्वेनापि स तं स्मृतवानस्ति। तद्यथा—

**वीरश्रीयुतराघवेन्द्र मिथिलामेतां सुखं पालयन्,**
**दायादानुजदारबान्धवगणैः सार्द्धं शतं वत्सरान्।**
**यावत्पुष्पवदम्बुधिक्षितिकुलक्ष्माभृद्धरिद्दन्तिन-**
**स्तावज्जीव धरापतीनपि करैः स्वच्छन्दमान्दोलयन् ॥**

ग्रन्थान्ते कविः संक्षेपेण स्ववंशपरिचयं दत्तवानस्ति। तदनुसारेणैव तस्य नरोनवंशोद्भवत्वं ज्ञायते। अत्रैव कविर्बिरुदावलीलेखनस्य प्रयोजनं निगदति। सज्जनानां प्रीत्यर्थमेव तेन राघवभूपतेर्गुणयशः कीर्तिप्रतापान्वितेयं बिरुदावली कृतिर्विरचिता—

**आस्ते सिन्धुवदन्वयो नरवनप्राप्ताभिधानो महान्**
**एतस्मिन् विदिते कविः समभवन्नारायणो नामतः।**
**श्रीमद्राघवभूपतेर्गुणयशःकीर्तिप्रतापान्विता**
**तेनेयं बिरुदावली सुरुचिरा तेने सतां प्रीतये ॥**

एवमेकयैव प्राप्तरचनया कवेः पाण्डित्यं बोधगम्यम्भवति। नरोनवंशे पण्डित नारायणस्याविच्छिन्नसन्ततिपरम्परा साम्प्रतं सर्वसीमा ( नरुआर ) छिटटोललोहनाग्रामे च विद्यमाना। प्रकृतलेखकस्तस्य महानुभावस्य अष्टमः सन्तानपरम्परायां विद्यते। भगवत्कृपयाऽस्मिन्नरोनवंशे लक्ष्म्याः प्रसादस्तु क्षीणस्तिष्ठति परं भगवती भारती प्रसन्नप्रायाऽस्ति। यद्भवतु किन्तु कवेर्नारायणस्य यदि किमपि पाण्डित्यमवलोक्यते तत्सर्वं नूनमेवाश्रयदातुः कृपापरकं वक्तुं शक्यते। यथा राघवसिंहस्य संरक्षणं तदर्थमासीत् तथैव कविनाऽपि स्वलेखन्या तस्य यशोविस्तारो जगति कृतः। राजा राघवसिंहः २५९ वर्षपूर्वं मिथिलेशरूपेण विराजित आसीत्। एतादृशाः अनेके आगता गताश्च। न समेषां राज्ञां नाम जनो जानाति। किन्तु यदि तस्य कीर्तिगाथाऽद्यापि गीयते तत्रावश्यमेव सभास्थकवीनामन्येषां च तदानीन्तननानामुपकृतविदुषां योगदानचर्चा भवेत्। सभापण्डितेन नारायणेन एकामेव विरुदावलीं विलिख्याद्यावधि तस्य नामामरं कृतम्। अन्यथा मिथिलाधिपेषु कश्चिदन्यतमः सामान्य एव स आसीत् इत्येव। मदीयोऽभिप्रायोऽत्रायमेवास्ति यद्राजा केवलं शासकत्वेनैव न विदितो भवति प्रत्युत साहित्यसंस्कृतिसंरक्षणे तस्य योगदानमावश्यकम्। यदि शासकः पूर्वाग्रहग्रस्तः सन् साहित्यसंरक्षणं न दत्वा केवलम्प्रपञ्चे सन्त्रासदाने च आत्मगौरवमनुभवति तर्हि तस्य भविष्यं समाप्तमेवास्ति। यदि शासकः स्वकीर्ति-प्रसिद्धिं वाञ्छति तदा तेन समकालिकाः कवयः प्रसन्ना विधातव्याः, अन्यथा तस्य कीर्तिस्तु समाप्ता भविष्यत्येव

परवर्तिनि काले तस्य नामज्ञाताऽपि कोऽपि न स्थास्यति। सत्यमभिहितं यद् यस्य राज्ञः पार्श्वे सुकविर्नास्ति तस्य यशोविस्तारोऽसम्भवः। अस्याम्पृथिव्यामनेके राजानोऽभवन् येषां नामापि अज्ञातं—

**पृथ्वीपतेः सन्ति न यस्य पार्श्वे कवीश्वरास्तस्य कुतो यशांसि।**
**भूपाः कियन्तो न बभूवुरुर्व्यां जानाति नामापि न कोऽपि तेषाम्॥**

— विक्रमाङ्कदेवचरितम्. १।२६।

महाविदुषो लङ्कापते रावणस्य कीर्तिर्न प्रसारिता। दशरथपुत्रो रामश्च कीर्तिपात्रमभवदिति सर्वं महर्षिवाल्मीकेरेव प्रतापः। अतः कवयो राजभिः कदापि न कोपनीयाः—

**लङ्कापतेः सङ्कुचितं यशो यद् यत्कीर्तिपात्रं रघुराजपुत्रः।**
**स सर्व एवादिकवेः प्रभावो न कोपनीयाः कवयः क्षितीन्द्रैः॥**

— विक्रमांकदेवचरितम्।

एवं वक्तुं शक्यते यन्नूनमेव यथा राघवसिंहो गुणगरिमसमन्वितस्तथैव कविनाऽपि स प्रख्यापितः। तस्य सभाकवेरेव प्रतापो यस्मादद्यापि स भूयोभूयोऽस्माभिः स्मर्यत इति। **[ इति ]**

# कुमारभार्गवीये पार्वत्याः स्वयंवरवर्णनम्

□ काशीनाथ झा

तत्र मिथिलामहीमण्डलान्तर्गतमैथिलश्रोत्रियकुलावतंसः 'सोदरपुरिये-सरिसव'मूलकः षोडशशताब्द्यां विद्यमानः सकलालङ्कारिकशेखरो महामहोपाध्यायभानुदत्तमिश्रो बभूव।

म.म. मिश्रप्रवरैः *रसमञ्जरी, रसतरङ्गिणी, अलङ्कारतिलकम्, कुमारभार्गवीयम्, रसपारिजातः गीतगौरीपतिः, चित्रचन्द्रिका*चेत्याद्यनेकानि पुस्तकानि प्रणीतानि। तत्र *कुमारभार्गवीयं*[१] चम्पूकाव्यस्यान्तर्गतमायाति। कविराजेन विश्वनाथेन स्वकीये *साहित्यदर्पणे* चम्पूकाव्यस्य लक्षणं प्रतिपादितम्[२]। तत्रावलोकनेनास्माभिः ज्ञायते यत् कुमारभार्गवीयं काव्यं चम्पूकाव्यस्यान्तर्गतमेव। ग्रन्थस्य प्रतिपाद्यविषयोऽयं वर्तते यत् कुमारकार्तिकेयस्य जन्म केन प्रकारेणाभूत्? तत्र ग्रन्थकारः म.म. मिश्रप्रवरः मङ्गलादिं कृत्वा पार्वत्याः जन्मवर्णनादेव कथावस्तूनि प्रारभते। कतिपयदिनान्तरं प्रादुर्भूता पार्वती स्वप्ने एव पतिरूपेण शिवं साक्षात् कृतवती। शिवः सौन्दर्यमयीं तां दृष्ट्वाऽपि अनासक्तोऽभूत्। तदनन्तरं सा सौन्दर्यं भर्त्सयन्ती तपः प्रारभते। कठिनतमे तपसि संलग्नां तामालोक्य प्रसन्नः शङ्करः तस्यै वरं ददाति स्म। एवञ्च तया साकं वैवाहिकसम्बन्धमपि शास्त्रीयरीत्या स्थापयति स्म। तत्र कुमारभार्गवीये काव्ये इयान् विशेषो दृश्यते यत् स्वयंवरेणैव पार्वती शिवं प्राप्नोति। म.म. मिश्रप्रवरैः स्वकीये काव्ये (षष्ठोच्छ्वासे) पार्वत्याः स्वयंवरवर्णनं कृतम्[३]। यदा पार्वती स्वयंवरप्राङ्गणे समागतवती तदा सौन्दर्यमयी सा कीदृशी भूषितवती एतत् प्रसङ्गे स्वकीयं पाण्डित्यपूर्णवर्णनं प्रदर्शयति म.म. भानुदत्तः—

*'अथ कनकमञ्जीररञ्जितेन जगदिव जेतुमिष्टदेवतास्मरणं.......वाराणसीव तारकेशाभिरामा, सरसीव स्फुरदलिकमलं कुर्वती, परिसरयात्रेव हस्तयोगेन शुभं निर्दिशन्ती, आन्वीक्षिकीव कुसुमाञ्जलि-प्रमाणभाष्यभूषिता, वैशेषिकशास्त्रस्थितिरिव प्रकटितगुणलीलावती, गायत्रीव पदक्रममनोहरा, मुनिसभेव स्वयंवरस्थानमभिलषन्ती, व्रतभिक्षेव चित्तस्य, प्रत्यञ्चेव पञ्चबाणस्य, भाग्यवल्लिरिव भुवनस्य, पीयूषवर्त्तिरिव लोचनस्य, भूपमनोभिरामन्त्र्यमाणेव, लोचनैराहूयमानेव, सुकृतैरूपचर्यमाणेव स्वयंवरप्राङ्गणं भूषितवती'।*

**स्वयंवरप्राङ्गणमागतायाः कर्णान्तविभ्रान्तविलोचनायाः।**
**मुखस्य निर्वक्तुमशेषशोभां मुखानि धातुर्विमुखीबभूवुः॥**

**ताटङ्कूलङ्घलोचनायाः कपोलपालीमवलोकयन्तः।**
**प्रकाममक्ष्णोर्निमिषापराधं महीभुजो न क्षमयाञ्चकार?॥**

**विलोकनादेव जगाम तृप्तिं मनश्च दृष्टिश्च महीपतीनाम्।**
**वचःसुधां चारुमृगायताक्ष्याः श्रोतुं श्रुतिः केवलमाचकाङ्क्ष॥**

**भिया कुलस्य त्रपया जनस्य व्यावर्तयामास दृशौ कथञ्चित्।**
**मृदुस्मितानां परिषन्नृपाणां मनः परावर्त्तयितुं न सेहे॥**

वपुर्जितं निश्चलमक्षियुग्मं मूढं मनः श्रोणिभृतां निरीक्ष्य।
आदाय बाणान् करपल्लवेन स्मरः प्रहर्त्तुं स्थितिमाततान॥

तनोः प्रकम्पे करपल्लवे च स्वेदाम्बुपूरे च विजृम्भमाणे।
अन्योन्यमाकुञ्चित-नेत्रपालिः सशङ्कमास्यं ददृशुर्नृपालाः॥

कश्चित् करव्याहतकुण्डलेन चलत्किरीटद्युतिचुम्बितेन।
अपाङ्गविक्षेपतरङ्गितेन मुखेन तस्थौ सुभगस्मितेन॥

कश्चित् सुहृत्कायविलम्बिकायस्तिर्यक्परावर्तितहारयष्टिः।
शनैःशनैरङ्गुलिमङ्गुलीभिः संस्फोटयामास महीमहेन्द्रः॥

अपाङ्गपर्याकुलनेत्रपालिः स्मितप्रभाप्लावितदिग्विभागः।
कस्यापि कश्चित्सुहृदः कपोलं जघान सन्तानकतल्लवेन॥

कस्तूरिकाभिर्मधुपान् विधाय निधाय पङ्केरुहकोरकेषु।
कश्चिद्विदूरादपि भूमिपालो व्यालोलयामास मनो मृगाक्ष्याः॥

मुखेन घूर्णन्नवलोत्पलेन गण्डेन दोलायितकुण्डलेन।
अङ्गेन रोमाञ्चवता च कश्चित् पपाठ गाथां वसुधासुधांशुः॥

रत्याः स्मरस्यापि रवेर्नलिन्याः श्रिया हरेर्लेखमनोहरेषु।
विलोक्य तां मञ्जुनिकेतनेषु निवेशयामास दृशौ नरेन्द्रः॥

नतेन कश्चिन्मुखमण्डलेन हारस्य मुक्ता गणयन् करेण।
सम्भावयामास विलोचनाभ्यामपि भ्रमानुत्पललोचनायाः॥

अपाङ्गपर्याकुललोचनस्य स्वेदाम्बुसंसिक्तकपोलभासः।
कस्यापि कोऽपि क्षितिनायकस्य चेलाञ्चलं स्मेरमुखश्चकर्ष[४]॥

ततः परं काचित् पार्वत्याः सखी जया विजया वा पार्वतीं नीत्वा स्वयंवरप्राङ्गणे विभिन्नेभ्यः प्रदेशेभ्यः समागतानां राज्ञां समक्षे नयन्ती तस्यै तेषां सविस्तरं परिचयं ददाति। यथा—

गुरुर्नृपाणां गिरिवद् गरीयान् गौड़ाधिपो गौरि विलोकनीयः।
महीपतेर्यस्य सुधांशुगौरैर्दिशो यशोभिर्धवलीकरोति॥

पतिर्जनानां गजभीमवीर्यः प्रतीयतामुत्कलभूमिपालः।
चक्राकुलायां चलदुत्पलायां चित्रोत्पलायां यदि चित्तमस्ति॥

स्फुरदृगन्तः कुसुमेषुकान्तः कुन्तायुधः कुन्तलभूमिपालः।
विविच्यतां सुन्दरि चन्दनेषु! चीरेषु चेत्सादरमस्ति चेतः॥

अयं जयिन्याः पतिरुज्जयिन्याः पुष्पाभिरामः परिशीलनीयः।
विप्राः कियन्तः कति वा न वप्राः सिप्रातटे यत्र परिस्फुरन्ति॥

कलाविशालः प्रतिपक्षकालः कालञ्जरक्ष्मापतिचक्रवर्त्ती।
प्रतीयतां यस्य मुखे सखेलमावर्त्तते लोचनमङ्गनायाः॥

**द्विषत्प्रमाथे मथुराधिनाथे मधुव्रताक्षि क्षिप कोणमक्ष्णः।**
**आनन्दधाराञ्चयनारविन्दे वृन्दावनं द्रक्ष्यसि कौतुकेन॥**

**अयं जयन्तः कुसुमेषुकान्तः सम्भाव्यतां वैरि-वनी-कृतान्तः।**
**रन्तुं समीहा यदि वा गुहायामुपत्यकायां कनकाचलस्य॥**

**आनन्दनस्यन्दनदीर्घघोषः संक्रन्दनः क्रन्दितवैरिवर्गः।**
**मालां विशालां नयनान्तपातैर्यत्कण्ठदेशे सुदृशः सृजन्ति॥**

**अयं प्रचेताः सुकृतैकचेताः श्वेतांशुविख्यातयशाश्चकास्ति।**
**भुजङ्गपाशो बहुरङ्गशाली व्यालीधिया यस्य भुजं प्रयाति॥**

**गिरा गरिष्ठो गरिमाभिरामो गिरां पतिर्गत्वरकीर्तिवल्लिः।**
**दिक्सुन्दरीणामुदयन्ति हारास्ताराशुचो यस्य यशोविकाराः॥**

**चन्द्रानने चन्दनचारुकान्तिश्चन्द्रोऽयमानन्दितलोकवृन्दः।**
**विजित्वराः क्लेशहरा नराणां मनोहरा यस्य कराः स्फुरन्ति॥**

**पद्माक्षि सोऽयं गुणराशिसद्मा पद्मासनः पद्मसहद्मवीर्यः।**
**वेदद्रुमो यन्मुखमालवालमासाद्य शाखाः प्रकटीकरोति[५]॥**

एवम्प्रकारेण सख्या दत्तपरिचयं तं तं राजानमतीत्य पुरोगच्छन्त्याः पार्वत्याः वर्णनि विभिन्नेभ्यः प्रदेशेभ्यः समागतानां राज्ञां मनोभावं प्रकटयति ग्रन्थकारः—

**तया विमुक्तस्य मनोहरस्य नृपस्य चेष्टा विफलीबभूव।**
**वित्तैर्विहीनस्य गुणोन्नतस्य यूनो मनोराज्यपरम्परेव॥**

**यं यं कुमारी न महीमहेन्द्रमालोकयामास दृगञ्चलेन।**
**कामस्य कोपेन समागतस्य च्छायेव तं तं मलिनीचकार[६]॥**

अत्रास्माकं मनसि एका जिज्ञासा भवति यत् शिवपार्वत्योर्वैवाहिकसम्बन्धे स्वयंवररीत्या वैवाहिकी चर्चा न कुत्रापि न कस्यापि मुखाद् वा न दृष्टा न श्रुता च। तर्हि कथं म.म. मिश्रप्रवरैः आधाररहितो विषयः प्रतिपादितः। तत्र काव्यशास्त्रस्यैकं पद्यमस्माभिः स्मर्यते यत्—

**अपारे काव्यसंसारे कविरेकः प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं परिवर्त्तते[७]॥**

प्रायः इयमेवोक्तिः ग्रन्थकारेणानुसृतेत्युनमीयते। अत एव आचार्य्यमम्मटैः स्वकीये काव्यप्रकाशे विधातुः सृष्टेरपि कविसृष्टेर्महत्त्वं स्वीकृतम्। कवेर्भारती हि सर्वथा स्वतन्त्रा, आनन्दस्वरूपा, विधिनियमैरनियन्त्रिता, नवरसरुचिरा चेति—

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति[८]॥**

अस्तु, अनया रीत्या वैवाहिकसम्बन्धानन्तरं यथासमयं काचित् साहित्यिकी चर्चा ग्रन्थकारैः कृता। तथाहि काचित् सखी पार्वत्याः शिवे मनो लग्नमित्यवगत्य विदूषिकेव किञ्चिदित्यवादीत्—

**अलं विलम्बेन परे नरेन्द्राः पुरो वरोरु स्पृहणीयभासः।**
**मुहुर्लपन्तीमिति कातराक्षी दृष्ट्वा सखीं स्मेरमुखी बभूव॥**

**अमुं विरूपाक्षमुदीक्ष्य किं वा फलं चकोराक्षि विभावयस्व।**
**विज्ञापयन्तीमिति तां प्रतीत्य प्रिया ह्रिया नम्रमुखी बभूव॥**

**उरःप्रदेशाद् बहिरागतानां मनोरथानामिव वर्णपङ्क्तिम्।**
**मालामपाङ्गेन विलोक्य बाला मुखेन लज्जाचतुरेण रेजे॥**

**धारामिव प्रेमनवाम्बुदस्य कलामिवानङ्गयशःसुधांशोः।**
**कण्ठे महेशस्य विहस्य दाम चिक्षेप घर्माम्बुमुचा करेण॥**

**भाले लग्नस्तव मृगदृशः कोऽपि सिन्दूरबिन्दुः**
**कण्ठे तस्याः किमु नयनयोः कज्जलं लग्नमस्ति।**
**इत्थं तासां कुतुकवचसा स्मेरमास्यं दधानो**
**गौरीपाणिग्रहणसमये प्राप देवः प्रसादान्**[९]**॥**

अनेनावलोकनेनेति वक्तुं शक्यते यत् म.म. मिश्रप्रवरैः स्वकीये *कुमारभार्गवीये* काव्ये एकया स्वोद्भावित-नवीनकल्पनया पाण्डित्यपुरस्सरया शिवपार्वत्योः स्वयंवररीत्या वैवाहिकीचर्या कृता वर्णिता चेति।

**सन्दर्भ-संकेतः**

१. कुमारभार्गवीयम्, भानुदत्तकृतम्, प्रकाशकः कामेश्वरसिंह दरभङ्गा संस्कृत-विश्वविद्यालयः, दरभङ्गा।
२. **गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते।**– साहित्यदर्पणे कविराजविश्वनाथः, ६।३३६।
३. 'अथ दारानाकार्य, पुत्रानाहूय, सचिवान् समानीय, बन्धूनावेद्य, विबुधान् समाकार्य, कन्यकायाः स्वयंवराय सादरेण वचसा पप्रच्छ। तैरनुमतश्च तां दुहितरमवलोकयामास। सा च—

**कनकवलयकाञ्चीहीरमञ्जीरयुक्ता मणिकुवलयमालां पाणिना लालयन्ती।**
**दरमुकुलित-नेत्र-प्रान्तमालोकयन्ती चिरमवनत-रक्ताम्भोजवक्त्रावतस्थे॥**

अथ सोमकुलालङ्कृतिरवनिभृत् चराचरविचितेषु देवेषु धन्यजनिषु मुनिषु कुलानुरूपेषु भूपेषु स्वयंवरनिमन्त्रणं प्रेषयामास।'
—कुमारभार्गवीयम्, पृ.सं. ६४।

४. कुमारभार्गवीयम्, पृ.सं. ६८ तः ७३ पर्यन्तम्।
५. कुमारभार्गवीयम्, पृ.सं. ७३ तः ७५ यावत्।
६. कुमारभार्गवीयम्, पृ.सं. ७७।
७. काव्यप्रकाशः, मम्मटकृतः। प्रकाशकः, भण्डारकर ओरियेण्टल रिसर्च इंस्टीट्यूट, पूना, पृ. २।
८. तत्रैव।
९. कुमारभार्गवीयम्, पृ. ७७ तः ७९ यावत्। **[इति]**

# अप्रकाशितस्य विख्यातविजयनाटकस्य परिचयः

□ राम किशोर झा

नाटकप्रणयनपरम्परायां महाकविभास-सौमिल्ल-कालिदास-भवभूति-विशाखदत्त-शूद्रकप्रभृतयो नाटककारास्सन्ति सुप्रथिताः। किन्तु तस्यामेव परम्परायां सप्तदशशताब्द्यां लब्धजन्मनः श्रीमल्लक्ष्मणमाणिक्यदेवस्य *विख्यातविजयम्* नाम नाटकमद्यावधि अप्रकाशितमेव। कालान्तरे ग्रन्थरत्नमिदं काल-कवलितं न भवेदेतदर्थं तत्संरक्षणधिया एतद्विद्यापीठस्य प्राचार्यमहाशयानां तत्सम्पादनस्वीकृतिमासाद्यैष जनोऽस्य सम्पादने प्रवृत्तो जातः।

नाटकमिदं वङ्गाक्षरेषु मातृकारूपे एतद्विद्यापीठीये पाण्डुलिपि-संग्रहालये सुरक्षितं विद्यते। अतः प्रथमं तावदेतन्नाटकं वङ्गाक्षरेभ्यः नागराक्षरेषु मया लिप्यन्तरितम्। तदनु विविधमातृकागारेभ्यः लब्धयोस्तदतिरिक्तयोः मातृकयोस्साहाय्येन समीचीनपाठानां निर्धारणपुरस्सरं तत्सम्पादनकार्यं सुसम्पन्नं कृतम्। अचिरादेवैतन्नाटकरत्नं गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठात् प्रकाशितं भविता।

प्रायोऽवलोक्यते यद् भारतीयसंस्कृतिसंरक्षण इदंपराः ऋषिकल्पा अत्रत्याः ग्रन्थकाराः लोकोपकारेषु व्यापृताः समवर्त्तन्त। अतस्ते आत्मश्लाघाविमुखास्सन्तो ह्रिया स्वरचनासु स्वकीयं परिचयादिकमपि नोल्लिखन्ति। तस्मात्कारणाद् विमर्शका अन्तःसाक्ष्याभावे बाह्यसाक्ष्यैरेव तत्परिचयादिकं कार्यं संसाधयन्ति, कार्येऽस्मिन् च ते महत्काठिन्यमप्यनुभवन्ति। ग्रन्थेषु तत्कर्तॄणां परिचयाभावस्यैका सुदीर्घा परम्परा वर्तते संस्कृतवाङ्मये। एष नाटककारोऽपि तस्यामेव परम्परायामापतति। कविरयं प्रकृतनाटकस्य पुष्पिकासु दिङ्मात्रं स्वस्याभिधानस्योल्लेखमकार्षीत्। किन्त्वेतन्नाटकस्य सम्पादनकर्मणि व्यापृतेन मया कतिपयैरैतिह्यविद्भिर्निर्धारितैर्बाह्यसाक्ष्यैरेव कवेरस्य पुष्कलं परिचयादिकं समासादितम्, तच्च नाटकस्यास्य भूमिकायां सुविशदं विवेचितम्। केवलमत्र सूत्ररूपेणोल्लिख्यते—

अयं हि नाटककारः श्रीलक्ष्मणमाणिक्यदेवः बङ्गालप्रान्तस्य पूर्वदिग्भागे 'नोआखाली' मण्डलान्तर्गतं **'भुलुआ'** जनपदं स्वजन्मनाऽलञ्चकार। अस्य पिता 'श्रीगन्धर्वमाणिक्य' आसीत्। प्रख्यातपाण्डित्यैः श्रीदिनेशचन्द्रभट्टाचार्यमहाशयैः 'द इण्डियन हिस्टोरिकल क्वाटरली' नामधेये जर्नलमध्ये 'द भुलुआ चीफ्स एण्ड देअर लिटरेरी वर्क्स' नामधेये स्वकीये गवेषणापरके निबन्धे कवेरस्य सोपपत्तिकः सुविस्तृतः वंशवृक्षः प्रदर्शितः[१]। तदुल्लेखोऽत्र गौरवाय कल्पत इति एतन्नाटकस्य भूमिकायां मया यथाक्रमस्तद्वंशवृक्षः पल्लवितः। तदीयं 'विख्यातविजयाख्यं' नाटकमिदं विक्रमस्य सप्तदशशताब्द्यामारचितं विद्यते। *रामायणं महाभारतञ्*चेति ग्रन्थद्वयं प्रायशस्समेषां काव्य-नाटकादीनामुपजीव्यभूतमिति नाविदितं मतिमताम्। प्रसङ्गेऽस्मिन् प्रकृतकविना श्रीमता लक्ष्मणमाणिक्यदेवेनापि नाटकस्यास्य प्रस्तावनायां समुल्लिखितम्—

**चतुर्वेदोक्तनिर्यासैर्व्यासेन ब्रह्मरूपिणा।**
**भारतामृतपाथोधिः परिमुक्तावधिः कृतः॥**

तस्य शीकरकल्पेन वाग्वैदग्ध्येन साङ्कुरम्।
कवयोऽन्ये यशोबीजं जनयन्तः प्रतिष्ठिताः॥
पुत्रद्वयमवाप्यैव विश्वरूपा सरस्वती।
आद्यं वल्मीकजन्मानं पाराशर्यमपूर्वजम्[२]॥ इति

यद्यप्यस्माकं महर्षयः लोभ-मोह-मद-मात्सर्यादिभिर्बन्धकारणैः परिप्लुतान्तःकरणानां प्राणिनां क्षितितले आगमनं विलोक्य तन्नियन्त्रणाय अधर्मस्योपरि धर्मस्य विजयाशंसायां परस्परं स्पर्द्धमानानि ग्रन्थरत्नानि प्रणीय पापभारैरवनितलं रक्षितुं समधिकं यत्नमाकार्षुस्तथापि पापापरोधाय तैस्तथाविधे कृतेऽपि प्रयासबाहुल्ये, अथ च तत्तदुपदेशप्रधानग्रन्थरत्नानां क्षितितलेऽस्मिन् विद्यमानत्वेऽपि न कश्चिदत्र रामायते, कृष्णायते, युधिष्ठिरायते, अपि तु सततं रावणायते, कंसायते, दुर्योधनायते, असत्पक्षपातं कृत्वा कर्णायते च। तेन च पृथिव्यामनुदिनं महाभारतं बोभवीति।

पूर्वोक्तयोरुपजीव्यभूतयोः ग्रन्थरत्नयोः महाभारतस्य कर्णपर्वणि कर्णनिधनस्यातिलघुरूपं कथानकमितिवृत्तत्वे-नाधिगृह्य कविनानेन प्रकृतनाटकमिदं प्रणीतम्। अत एव वस्तु-नेतृ-रसेषु नाटचप्रमुखाङ्गेष्वत्र मिश्रं कथावस्तु नाटककृता प्रस्तुतमिति वयमवधारयामः। एतन्नाटचप्रणयनस्य प्रमुखं प्रयोजकमिदं यत्कवेरस्य समकालवर्तिनो राजानः सामान्यजनाश्च वैदेशिकानामाक्रमणजन्यैर्युद्धोन्मादैस्समधिकं खिन्नास्समवर्तन्त। अत एतद्देशोद्भवानामप्रतिमशौर्यसम्पन्नानामैतिह्य-वीरपुरुषाणां प्रबलपराक्रमगर्भितैः वीररसप्रधानैः कथानकैरद्यतनान् भारतीयानुद्बोध्य वैदेशिकशासनेभ्यः भारतं स्वतन्त्रं कारयितुं नाटकमिदं कविनानेन प्रणीतमिति ऐतिह्यविदामभिसन्धिः। नाटकस्यास्य पात्राणां व्यङ्ग्यमुखेन विम्बविधानं कवेरभीष्टम्। अत्र मुगलशासकाः कौरवस्थानीयाः, भारतीयाः पाण्डवस्थानीयाः, कर्णश्चासत्पक्षधरः कौरवसहायकृदिति। एवम्प्रकारेण कर्णसम्मिश्रेषु कौरवकल्पेषु मुगलशासकेषु पाण्डवस्थानीयानां भारतीयानां विजय एव कवेरस्यात्यन्तिकं लक्ष्यमासीदित्यवधेयम्। 'एक एव भवेदङ्गी शृङ्गारो वीर एव वा' इति भरतानुशासनादत्र वीररसस्यैव प्राधान्यम्। अन्ये रसाश्चात्र अङ्गभूताः। तदनुकूलोऽर्जुनोऽत्र धीरोदात्तनायकः प्रतिनायकश्च कर्ण इति नेतृ-रसयोरपि स्फुटं परिचयस्समुपलभ्यते।

नाटकमिदमन्वर्थाभिधानम्। तद्व्युत्पत्तिर्यथा-विख्यातश्चासौ विजयश्चेति विख्यातविजयस्तत्कथानकमधिगृह्य कृतं नाटकं विख्यातविजयमिति, आहोस्विद् विख्यातो विजयो यत्रेति विख्यातविजयस्तदधिकृत्य कृतं नाटकं विख्यातविजयमिति। अर्थाद् विख्यातवीरस्य कर्णस्योपरि विख्यातवीरस्यार्जुनस्य विजयः महाभारतयुद्धे ख्यातिं भजते। तस्मादुभयथापि नाटकस्यास्याभिधानसार्थकत्वं सुसिद्धम्।

नाटकमिदं षट्सु अङ्केषु विभक्तं वर्तते। वीररसप्रधानेऽस्मिन् नाटके आलङ्कारिकाचार्यैर्निर्धारितानां प्रायशस्समेषां नाटचाङ्गानां सफलप्रयोगोऽवाप्यते। प्राधान्येनात्र कर्णनिधनस्येतिहासप्रसिद्धं कथानकं न्यूनाधिकपरिवर्तनेन सह नाटचशैल्यां वर्णितं विद्यते।

नाटकेऽस्मिन् कर्णशल्ययोर्विवादः, नकुल-कर्णयुद्धम्, नकुल-निग्रहः, गाण्डीवनिन्दया युधिष्ठिरं प्रति धनञ्जयस्य क्रोधः, श्रीकृष्णेन तत्क्रोधोपशमनम्, अर्जुनस्य कर्णवधाय संकल्पः, अर्जुनस्य समराङ्गण-प्रस्थानं, कर्णार्जुनयोः द्वैरथयुद्धारम्भः, कर्णनिधनम्, कर्णनिधनादानन्दितानां पाण्डवानामानन्दोत्सवश्च वर्णितोऽस्ति। अन्ते च कतिपयैरा-शीर्वादात्मकैर्भरतवाक्यैर्नाटकमिदं परिपूर्णं भवतीति शम्॥

## सन्दर्भ संकेत

१. The Indian Historical Quaterly, Vol-14, Page. 731-746.
२. विख्यातविजयम् नाटकम्, १/८-१०।

# पण्डितकृष्णमाधवझाशर्मणां वंशे प्रख्याताः ग्रन्थकाराः

□ श्री मनोज नाथ झा

महामहिमोपाध्यायानां पं० कृष्णमाधवझाशर्मणां वंशो मिथिलायाः श्रोत्रियब्राह्मणानां 'करमहाबेहटमूलग्रामकः' चिरन्तनकालाद् अधुनावधि विद्वद्गणगुणगौरवो विद्यते। **म० म० हरिब्रह्मोपाध्यायः** ( १२०० ई०, प्राकृतपैङ्गले चर्चितः ), न्यायतत्त्वचिन्तामणिकारो नव्यन्यायप्रवर्त्तको **गङ्गेशोपाध्यायः** ( १२५० ई० ), नैयायिको **वर्धमानोपाध्यायः** ( गङ्गेशोपाध्यायपुत्रः ), **म० म० राघवः** ( १५५० ई० ), **म० म० हरिहरोपाध्यायः** ( १५७५ ई० ), **म० म० नीलकण्ठः** ( १६०० ई० ), **म० म० इन्द्रपतिः** ( १७५० ई० ), **म० म० वेणीदत्तः** ( १८०० ई० ) इत्यादय एतद्वंशीया महामनीषिणो न केवलं मिथिलाया एव, अपि तु भारतवर्षस्य गौरवम् अभूवन्। अत्र प्रस्तुते निबन्धे एतद्वंशीयानां कतिपयेषां परमप्रसिद्धानां विदुषां संक्षिप्तः परिचयः प्रस्तूयते।

१. **म० म० राघवोपाध्यायः** ( १५५० ई० )—अयं हि हरिहरसुभाषितकारस्य पिता। एतत्कृता ग्रन्था अद्यापि अप्रकाशिता एव सन्ति—( १ ) छन्दःकल्पतरुः, ( २ ) हेमाद्रिभारती ( हेमाद्रिकृतचतुर्वर्गचिन्तामणिव्याख्या ), ( ३ ) काव्यप्रकाशावचूरिः, ( ४ ) वाग्भटालङ्कारावचूरिः।

२. **म० म० हरिहरोपाध्यायः** ( १५७५ ई० )—अयं राघवसुतः प्रख्यातः कविरासीत्। एतत्कृतग्रन्थेषु—( १ ) सूक्तिमुक्तावली ( हरिहरसुभाषितम् ), ( २ ) प्रभावतीपरिणयनाटकम्, ( ३ ) भर्तृहरिनिर्वेदनाटकञ्च सर्वपरिचितान्येव सन्ति। कतिपयेषां मतेन भर्तृहरिनिर्वेदनाटकम् वलियास-माण्डरवंशीयधर्माधिकारिहरिहरोपाध्यायस्य ( १३८० ई० ) वर्तते।

३. **म० म० नीलकण्ठः** ( १६०० ई० )— अयं हरिहरोपाध्यायस्य अनुजः अतिप्रियः कविः ज्योतिर्विद् आसीत्। एतद्विषये हरिहरः *श्रीनीलकण्ठकविकण्ठविभूषणाय* इति कथयति। अनयोर्भ्रात्रोः प्रेम कुश-लवाविव आसीदिति हरिहरसुभाषिते द्रष्टुं शक्यते— 'कुशलवप्रख्यातगोत्रौ सुतौ'। नीलकण्ठश्च स्वकीये जातकपद्धतिग्रन्थान्ते हरिहरानुजत्वेन स्वगौरवं प्रकाशयति—*हरिहरकविपण्डिताधिराजावरज इमां स चकार नीलकण्ठः*। अयं हि नीलकण्ठोपाध्यायो दैवज्ञः ताजिकनीलकण्ठीकारान्नीलकण्ठदैवज्ञाद् भिन्नः परवर्त्ती चासीत्। एतत्कृताः ग्रन्थाः अप्रकाशिताः सन्ति— ( १ ) जातकपद्धतिः, ( २ ) ज्योतिःसौख्यम् ( टोडरानन्दः ), ( ३ ) मध्यमग्रहसिद्धिश्च।

४. **म० म० इन्द्रपतिः** ( १७५० ई० )— अयं ज्यो० नीलकण्ठस्य पौत्रो ज्यो० रुचिपतेः पुत्र आसीत्। अस्य आश्रयदाता मिथिलेशो विष्णुसिंहः ( १७४०-१७४४ ई० ) आसीत्। अयं स्वभागिनेयस्य मैथिलीभाषामहाकवेर्नन्दीपतेः प्रमोदाय अलङ्कारसमुद्गनामकं ग्रन्थं रचयामास, यस्य हिन्दीव्याख्यासहितं प्रकाशनं डॉ० प्रमोदझाशर्मणः सम्पादकत्वे १९९५ ई० वर्षे दरभङ्गातो जातम्। हिन्दीव्याख्याकारोऽस्ति डॉ० शशिनाथ झा विद्यावाचस्पतिः। इन्द्रपतेरपरा रचनास्ति 'मीमांसारसपल्वलम्', ( मीमांसादर्शनं ) सम्पादकः–डॉ० किशोरनाथझा, प्रयागतः प्रकाशितः, १९७७ ई०। एतन्मीमांसकप्रवरस्य द्वे रचने अप्रकाशिते स्तः—( १ ) रसमार्त्तण्डः ( साहित्यम् ), ( २ ) विधिविवेकप्रकाशः ( मीमांसा )।

५. **कविः वेणीदत्तः** (१८०० ई०)— अयं राघवोपाध्यायस्य प्रपौत्रपुत्रोऽस्ति, तथाहि—राघवः→वनाग्निः→जयकृष्णकविः→नैयायिको जगन्नाथः→वेणीदत्तः→श्रीदत्तः→फकीरः→रङ्गनाथः→पं० श्रीकुञ्जनाथझा (परमवृद्धो विद्यमानः)। अस्य द्वौ ग्रन्थौ साहित्यशास्त्रे परमप्रसिद्धौ स्तः—(१) रसकौस्तुभः, (२) अलङ्कारमञ्जरी।

६. **महामहिमोपाध्यायः पं० कृष्णमाधवझा** (१८९८-१९८५ ई०)— एतद्रचिता ग्रन्था एते सन्तिः— (१) **परमलघुमञ्जूषा-तत्त्वप्रकाशिका**— नागेशभट्टकृत-वैयाकरणसिद्धान्तपरमलघुमञ्जूषाया विषयतत्त्वाववोधिनी प्रौढा व्याख्यास्ति। व्याकरणशास्त्रीयपदार्थप्रतिपादनपरायाम् अस्यां व्याख्यायां मूलग्रन्थलापनेन सहैव सर्वत्र मौलिकनिवेशप्रवेशः छात्राणां बुद्धिवैशद्यं जनयति। इयं व्याख्या १९४१ ई० वर्षे हितचिन्तक प्रेस, रामघाट, काशीतः प्रकाशिता, यत्र पं० कृष्णमाधवशर्मणोऽनुजेन वैयाकरणप्रवर **पं० चन्द्रमाधवझा**शर्मणा टिप्पणीस्वरूपा विवृतिः कृता वर्तते। (२) **धर्मशास्त्रेण मलमासविचारः**— अत्र नामानुरूपं धर्मशास्त्रीयनिबन्धग्रन्थानामाधारेण मलमासपरिचयः, तत्प्रसंगविवादनिराकरणं, तत्समयप्राप्तिविचारः, तत्कृत्यविचारश्च प्रामाणिकपरिष्कृतरीत्या प्रस्तुतः। अस्य प्रकाशनं मुम्बईतः १९६२ ई० वर्षे सञ्जातम्। (३) **अलङ्कारविद्योतनम्**— अत्र काव्यशास्त्रीयाणां १२४ अलङ्काराणां लक्षणानुगमो नव्यन्यायसरणिमनुसृत्य सपरिष्कारः कृतो वर्तते। परन्तु साहित्यविषयकेऽस्मिन् ग्रन्थे साहित्यिकानां प्रवेशो दुष्कर एव। ये नव्यन्यायनिष्णातास्त एव अस्य सूक्ष्मेक्षिकां ज्ञातुं शक्नुवन्ति। अस्य प्रकाशनम् १९७४ ई० वर्षे 'कविशेखरपुष्पाञ्जलि' ग्रन्थे (कविशेखरबदरीनाथझा अभिनन्दनग्रन्थे) दरभङ्गायां जातम्। (४) **सिद्धान्तलक्षण-सुबोधिनी**— नव्यन्यायप्रवर्त्तक-गङ्गेशोपाध्यायकृत-न्यायतत्त्वचिन्तामणि-ग्रन्थान्तर्गत-सिद्धान्तलक्षण-ग्रन्थोपरि म०म० रघुनाथशिरोमणेदीधितिरस्ति, तदुपरि जगदीशतर्कालङ्कारस्य विवृतिरस्ति, तदुपरि सर्वतन्त्रस्वतन्त्रमैथिलपण्डितधर्मदत्त(बच्चा)झाशर्मणः अगाधतलस्पर्शिनी गूढार्थतत्त्वालोकनाम्नी नव्यन्यायसूक्ष्मताचरमशिखरगामिनी व्याख्या वर्तते। विरला एव तज्ज्ञातारः, तद्व्याख्याकारस्तु सुतरां परमदुर्लभ एव। एतस्य सिद्धान्तलक्षणगूढार्थतत्त्वालोकस्यातिविस्तृता व्याख्या सुबोधिनी नाम्नी नव्यन्याय-गहन-परिष्कार-मण्डिता पं० कृष्णमाधवझाशर्मणा रचिता, या तज्जीवनदशायामेव १९८३ ई० वर्षे प्रयागस्थ गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठात् प्रकाशिता। ५४६ पृष्ठात्मकस्यास्य ग्रन्थस्य सम्पादनं ग्रन्थकृतः सुयोग्यपुत्रेण न्यायशास्त्रपारदृश्वना डॉ० किशोरनाथझाशर्मणा कृतम्।

७. **डा० दुर्गानाथझा श्रीशः**— कुमुदनाथझाशर्मणस्तनूजन्मा मैथिलीसाहित्यस्य प्रामाणिकमितिहासं विरचय्य प्रकाश्य च महतीं कीर्तिमवाप्नोत्। साहित्यरचनापि गद्यपद्यमयी मैथिल्यामस्य ख्यातिं संवर्धयति।

८. **पण्डित श्रीवल्लभझा**— स्वल्पायुरयं हाटीग्रामवासिनः दुःखहरणझाशर्मणः पुत्रः मैथिल्यां काव्यानि प्राणैषीत् प्रख्यातश्चाभूत्। यत्र तत्रास्य कृतिः प्रकाशितापि संग्रहमपेक्षते।

९. प्रो० मुक्तिनाथझा अंग्रेजीशास्त्राध्यापकोऽपि मैथिल्यां कविकर्मणि निष्णातः बुद्धायनमहाकाव्यस्य प्रणेता राधानयनद्विशत्याः पैराडाइजलौस्ट ग्रन्थस्यानुवादकः सहस्राधिकस्फुटकाव्यानि व्यलेखीत् प्रवृत्तश्च वार्द्धकेऽपीदानीं कविकर्मणि।

१०. **डॉ० किशोरनाथझा**— अयं पं० कृष्णमाधवझाशर्मणः कनीयान् पुत्रो गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठे प्रयागे प्राध्यापको विंशत्यधिक-दुर्लभप्राचीनग्रन्थानां पाठोद्धारपुरस्सरं सम्पादकः, न्याय-वैशेषिक-मीमांसा-व्याकरण-

साहित्य-तन्त्र-धर्मशास्त्रेषु निष्णातः साम्प्रतं भारतस्य प्रौढ़पण्डितरूपेण प्रसिद्धोऽस्ति। एतत्कृतग्रन्थेषु मुख्याः सन्ति—(१) रसपरिचय (मैथिली), (२) लोकवेद (धर्मकर्ममीमांसा, मैथिली), (३) न्यायदृष्ट्यात्म-वादानुचिन्तनम्, (४) न्यायशास्त्रीय ईश्वरवादः, (५) गौतमीयसूत्रप्रकाशः-केशवमिश्रकृतः (सम्पादनम्), (६) महाकालसंहिता (सम्पादनम्), (७) मीमांसारसपल्वलम् (मीमांसा, सम्पादनम्) इत्याद्याः।

११. **डॉ० उदयनाथझा 'अशोकः'**—पं० कृष्णमाधवशर्मणः पौत्रः, पं० गङ्गानाथशर्मणः पुत्रोऽयं पुरी संस्कृत-विद्यापीठेऽध्यापयति। युवा पण्डितोऽयम्–याज्ञवल्क्यशिक्षां पराशरस्मृतिञ्च हिन्दीव्याख्यया भूषितवान्।

**[इति]**

# संस्कृतसाहित्ये पर्यावरणसंरक्षणम्

□ **आरती अग्रवाल**

मानवं परितो यत्किमपि नैसर्गिकमावरणमाच्छादनं स्थावरजङ्गमात्मकं 'भूतग्राम' इति भौतिकं भ्राजते, तत्सर्वं पर्यावरणमिति। पुरा संस्कृतभाषायामनुपलब्धः 'पर्यावरण'मिति शब्दोऽधुनाङ्गलभाषायाः Environment इति शब्दस्यार्थाभिव्यक्तये नूतनो व्याकृतो विज्ञानचित्तैश्च विपश्चिद्भिः प्रयुज्यते। प्रकृतेर्वितानं चेदं बृहत्पर्यावरणम्। पर्यावरणस्य सम्बन्धो न केवलं प्राकृतिकसम्पदां संरक्षणेन, अपि तु लोकजीवनाय बाह्याभ्यन्तरिकेति द्वाभ्यां पक्षाभ्यां सहास्ति। अतः प्राकृतिकसम्पदः संरक्षणं परमावश्यकम् एवेति न काचिद् विचिकित्सा।

विज्ञानमाध्यमेन आवरणं विकृतं विधाय स्वानुरूपनिर्माणस्य प्रयासः प्रदूषणमिति। नानाविधानि प्रदूषणानि सन्ति। यथा पृथ्वी तदैव विकृता भवति यदाऽत्र अप्राकृतिकं कार्यं भवति। वनानि विनष्टानि भवन्ति। अतो वनस्पतीनां संरक्षणमावश्यकम्। जलशोधनाय मत्स्यमकरादिजलीयजन्तूनां संरक्षणमावश्यकमस्ति। परन्तु अद्य परमपवित्रा गङ्गापि प्रदूषिता जाता, का गणनाऽन्यासां नदीनाम्। अव्यवस्थितकोलाहलादिभिर्ध्वनिप्रदूषणं भवति। सम्प्रति तु दूरभाषादिध्वनियन्त्रस्यापि निर्माणं जातं, किन्तु पुरैव कालिदासेनोपस्थापितं 'श्रुतिविषयगुणा या स्थिता व्याप्य विश्व'मिति। 'यया प्राणिनः प्राणवन्तः' सोऽपि वायुः सम्प्रति तु दूषितः सञ्जातः इति स्वच्छवायुरपि दुर्लभोऽधुना।

इत्थं पर्यावरणस्य मानवजीवनस्य च पारस्परिकी अन्तर्निर्भरता वर्तते। आवैदिककालतः अद्यप्रभृति पर्यावरण-सन्तुलनाय प्राकृतिकसंसाधनानां योगदानं वैज्ञानिकाः स्वीकुर्वन्ति। मानवसमुदायः प्राकृतिक-जड़-चेतन-समुदायश्च एकस्य परमचैतन्यस्यैवाङ्गद्वयमिति। पर्यावरणसंरक्षणस्यान्तर्गते नदी-पर्वत-वन्य-जीवजन्तूनामपि संरक्षणं परमा-वश्यकम्। वर्तमानयुगे पर्यावरणसंरक्षणम् एका महती अन्ताराष्ट्रिया समस्या सञ्जाता। यतो हि अद्य मानवानां हृदयतः मानवीयगुणानाम् आचारविचाराणां च शनैः शनैः ह्रास एव परिदृश्यते। अतः 'वसुधैव कुटुम्बकम्' इयं उदात्तभाव-नैव सर्वं जड़चेतनं चराचरञ्च संयोजयति, तदैव वनज्योत्स्ना सहोदरा, सरयूनदी जननी, हिमालयः पिता, मृगशावकः पुत्रः, गौश्च पूज्या भवितुं समर्थाः।

स्वसंस्कृतेरुत्सभूतः संस्कृतवाङ्मये सर्वत्र अन्तःप्रकृतिपरिशोधनपुरस्सरं बाह्यपर्यावरणसंरक्षणं सुप्रतिपादितम्। वैदिकसाहित्ये पर्यावरणसंचेतनायाः सङ्केताः पदे पदे उपलभ्यन्ते। यथा ऋग्वेदे—

**सकृद्द्यौरजायत सकृद्भूमिरजायत।**
**पृश्न्या दुग्धं सकृत् पयस्तदन्यो नानुजायते॥** (६।९८।२२)

संरक्षणाभावे तु भूमिः रेजते 'भूमिर्यमिषु रेजते' इति तत्रैव (८।२०।५)। अथर्ववेदस्य मन्त्रोऽयं पर्यावरण-संरक्षण-सञ्चेतनायाः सार्थकतां प्रकटयति—

**यत्ते भूमे विखनामि क्षिप्रं तदपि रोहतु।**
**मा ते मर्म विमृग्वरि मा ते हृदयमर्पितम्॥**

अपि च 'जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम्' इति रूपेण अथर्ववेदस्य ऋषिः 'वसुधैव कुटुम्बकम्' इति भावस्य चित्रणं करोति।

वैदिकी अध्यात्मदृष्टिः सर्वमात्ममयं पश्यति। परमात्मनः एकांशेन इदं साक्षतम् क्षतं चराचरञ्जगदाविर्भूतमिति बहुधा प्रपञ्चितमस्ति। वेदेषु प्रकृतिर्देवतात्मत्वेन संलक्ष्यते। ऋषीणां कोऽपि व्यापारः प्रकृतिं विसृज्य नैव प्रचलति। मानवसहकारिरूपेण एषाऽत्र विद्यमानास्ति। प्रकृत्या सह मानुषाणामनवरतं सम्भाषणं वेदेषु श्रूयते। जीवने सौख्यमौत्कर्ष्यञ्च प्रकृतेरानुकूल्येन एवञ्च देवप्रसादेनैव अवाप्तुं शक्यते। अत एव वेदेषु अग्नि-सवितृ-उषस्-पृथिवी-वायु-जल-प्रभृतीनां स्तुतिर्विहितास्ति। एभ्यो हव्यञ्चार्पितमस्ति। प्रकृत्याः संरक्षणम् अभिध्यायन् मानवो जङ्गि-दर्भ-औदुम्बर-साक्त्य प्रभृतिमणीन् बिभर्ति।

सुमहतोऽगाधस्य संस्कृतवाङ्मयस्यान्यतमो विभागोऽस्ति आयुर्वेदः। प्राणिजीवने प्राणिजीवनाय च पर्यावरणस्यातिशयितं महत्त्वं, यतो हि युद्धमनाविलं पर्यावरणं विहाय जीवनस्य सत्तैव न भवति। निर्दुष्टे पर्यावरणे एव स्वस्थजीवनस्याविर्भावो विकासश्च सम्भवतीति निरापदि ह्यारोग्यप्रदे तत्रायुर्वेदे पर्यावरणं साधु निरूपितं विमृष्टञ्च। महर्षिणा सुश्रुतेन चरकेण चापि पर्यावरणविध्वंसस्य कारणमधर्मम् पूर्वकृतम् असत्कर्म वा तत्र तत्र निर्दिष्टम्। एतयोः द्वयोः निरुत्पत्तिकारणं प्रज्ञापराध एव। तत्तत्त्वं तु अनुचितमसन्तुलितं विवेकरहितं देशकालस्वभावविरुद्ध-सद्वृत्तविपर्यय-दुराचरितं सर्वमपि अशुभं कर्म प्रज्ञापराधो भवति। विषमविज्ञानवत्या बुद्धेरनुचितकर्मप्रवृत्तिरेव प्रज्ञापराधः। अनेनैव प्रज्ञापराधेन पर्यावरणस्य विध्वंसो मानवजीवनस्य चापि हानिः सञ्जायते। अतः पर्यावरण-संरक्षणाय, अथ च स्वस्थवृत्ताय जीवनाय मानवा प्रज्ञापराधविमुक्ताः भवेयुरिति।

प्राच्यमनीषायामपि क्वचित् साक्षात् क्वचित् प्रतीकमाध्यमेन पर्यावरणचेतनाया उद्बोधः सर्वत्रोपलभ्यते। प्राच्यप्रकृतिवैज्ञानिकैः प्रकृतिः जड़रूपेण न प्रतिपादिता, अपि तु जगदाधाररूपेण अभिमन्त्रिता, चिच्छक्तिरूपेण स्वीकृता, सर्वोच्चिसत्तात्वेन समाराधिता मातृभावेन च उपासिता। परन्तु आधुनिकाः प्रकृतिं जड़रूपां मन्यन्ते। अत एव प्रकृति-सन्दोहनस्य सम्पूर्णं विज्ञानं उपभोक्तादिमूल्यैरनुप्राणितम्। प्राच्यमनीषिभिः प्रकृतिं प्रति एतस्या उपभोग्योपभोक्तृभावापन्नदृष्टेः दुष्परिणामो देवासुरसङ्ग्रामप्रतीकेन प्रतिपादितः। तेषां मते पर्यावरणप्रदूषणं मानवस्य अन्तर्जगति विद्यमानानामासुरीप्रवृत्तीनां प्रतिफलम्। शुद्धे सति अन्तःकरणे बाह्यप्रदूषणं स्वतो निरस्यति। गङ्गावतरणमपि आख्यानच्छलेन एतद्रहस्यं ब्रवीति।

वैदिककालादेवास्माकमृषयः सन्तश्च पर्यावरणसंरक्षणेन प्राणिजीवनं सुखमयं विधातुं स्वजीवनं समर्पितवन्तः, तेषु महाकविकालिदासः प्राथम्यं लभते। सर्वासु कालिदासीयरचनासु प्रथमाङ्कस्य प्रथमाध्यायस्य वा मङ्गलश्लोके पर्यावरणस्य महत्त्वं दृश्यते। तत्र वृक्षस्य हिमालयस्य, ऋतोः पार्वत्याः, परमेश्वरस्य प्रत्यक्षशिवस्वरूपस्य च वर्णनमस्ति। शिवो यदा शिवेतरः भवति, स तस्य पर्यावरणप्रदूषणमिति नाम्ना कथ्यते। स शिवस्य अष्टमूर्तिषु समग्रवसुधायाः एकमौकसम् अपश्यत्।

पर्यावरणसंरक्षणस्य आद्यं साधनं वृक्षाः सन्ति, एतदर्थमेव शास्त्रेषु विषवृक्षमपि संवर्ध्य तच्छेदनमनुचितमुक्तं यथा *कौमुद्यां* 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इति वृक्षं प्रति कालिदासस्यानुरागो दर्शनीयोऽस्ति। *रघुवंशस्य* द्वितीये सर्गे तपोवने नन्दिनीं सेवमानस्य दिलीपस्य सिंहेन सह संवादे सिंहो राजानं कथयति—

**अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन।**
**यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः॥** (रघु० २।३६)

हे राजन्! त्वमग्रे स्थितममुं देवदारुवृक्षमवलोकयसि। असौ देवदारुः शिवेन पुत्रत्वेन स्वीकृतः, अतोऽयं पार्वत्या पुत्रवत् पालितोऽस्ति।

**कण्डूयमानेन कटं कदाचित् वन्यद्विपेनोन्मथिता त्वगस्य।**
**अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः॥** (रघु० २।३७)

एकदा कश्चित् वन्यो हस्ती अस्य देवदारुवृक्षस्य त्वचं समुत्पाटितवान्, अस्य वृक्षस्य एतादृशीं दशां विलोक्य गौरी शोकार्त्ता सती तथैव विलापं कृतवती, यथा सा दैत्यानामस्त्रैः क्षतं स्वपुत्रं कार्तिकेयं दृष्ट्वा पुरा शुशोच। यदा त्वचः उत्पाटनमात्रेण जगन्माता गौरी असह्यपीडाम् अनुभवति, तदा का कथा कृन्तनस्य।

यदा माता सीता गर्भिणी सती तपोवने वाल्मीकेराश्रमं गतवती, तदा तत्र तदवस्थायामपि यथाशक्ति पादपसेचनं पुत्रवत् परिपालनञ्च करोति। एतेन वृक्षं प्रति तत्स्नेहाधिक्यं सत्यापितं भवत्येव—

**पयोधरैराश्रमबालवृक्षान् संवर्धयन्ती स्वबलानुरूपैः।**
**असंशयं प्राक् तनयोपपत्तेः स्तनंधयप्रीतिमवाप्स्यसि त्वम्॥** (रघु० १४।७८)

रचनासु न केवलं विटपवृक्षादीनां सम्बन्धे एवोदारभावो विद्यते, अपि तु पर्यावरणस्याधाराणां पशुपक्षिणां विषयेऽपि सुतवत् स्नेहसमन्वितव्यवहारो वरीवर्ति। 'आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः' इत्यादेशो वन्यप्राणिनां संरक्षणम् प्रति कर्तव्यमेव बोधयति। एवमेव कालिदासस्य राज्ञः रघोः कौत्सं प्रति अयं प्रश्नो यत् तासां नदीनां जलं तु शुद्धमस्ति यासु भवद्भिः प्रतिदिनं स्नानसन्ध्यातर्पणादयः सम्पाद्यन्ते (रघु० ५।७), वर्तमानप्रशासनस्य कृते प्रेरणास्रोतः अस्ति।

न केवलं पर्यावरणशुद्ध्यर्थमपि तु आत्मशुद्ध्यर्थं मानसप्रदूषणनिवारणार्थमपि अग्निहोत्रस्य महत्त्वमङ्गीकृतं कालिदासेन **सोऽहमिज्याविशुद्धात्मा**। (रघु० १।६८)

कालिदासस्य पर्यावरणीयशिक्षा मानवीयदायित्वानां बोधं कारयति। महाकविकालिदासस्य पर्यावरणसंरक्षणसङ्कल्पना आधुनिकपर्यावरणसमस्यायाः समाधाने समीचीना प्रासङ्गिकी अथ च मनोवैज्ञानिकरूपे अधिकतमप्रभाविनी प्रतीयते। कालिदासेन प्रकृतिं, सृष्टेः निसर्गव्यवस्थां, भारतीय संस्कृतिं, तस्याः व्यवस्थायाः भूमिकायां मानवीय

मर्यादानां प्रतिष्ठां च स्वीकृत्य, द्वयोः मध्ये सुन्दरः समन्वयः कृतः। प्रकृत्या सह मानवानां मञ्जुलसम्पर्कं दर्शयित्वा प्रकृतेः अन्तःस्फुटितानां विभिन्नभावानां सम्यक् विवेचनं कृतम्। अन्या चान्ताराष्ट्रियसद्भावनया सह सम्पूर्णजीवनस्य कृते स्वत्वं भावं परिदृश्यते। अस्तु, प्रदूषणकरीणामासुरीप्रवृत्तीनां विनाशो मानवीयप्रवृत्तीनां विकासश्च पर्यावरणसमस्यायाः एकमेव समाधानं भवितुं शक्यते। भारतीयजीवनमूल्येषु आस्था, तदनुसारेणाचरणमेव पर्यावरणसंरक्षणस्य मूलौषधिः अस्ति।

उमास्वातिविरचितस्य *तत्त्वार्थसूत्रस्य* 'परस्परोपग्रहो जीवानाम्' इति सूत्रं संस्कृतसाहित्ये पर्यावरणचेतनायाः प्राणा एव।

एवं कालिदासपर्यन्तं संस्कृतसाहित्ये पर्यावरणसम्बन्धिनी संचेतना सुवर्णिता। प्रकृतेः यज्ञे किमपि परिवर्तनमेव पर्यावरणप्रदूषणस्य कारणमस्ति, यतो हि मानवाः केवलं आदानमेव जानन्ति, न तु प्रदानं, यदा हि प्रकृतेः सन्तुलनाय आदान-प्रदानयोः द्वयोरेव महत्त्वम् परमावश्यकम् इति शम्। **[इति]**

## सात्त्विकभावाः

□ **किशोरोरमण झा**

व्यभिचारिभावानामनन्तरं सात्विकाः निरूप्यन्ते। भरतमतानुसारम् अष्टौ भावाः भवन्ति—

**स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।**
**वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्विका मताः**[१]**॥**

इति *रसतरङ्गिण्यां*[२] *रसमञ्जर्यां*[३] *रसचन्द्रिकायां*[४] च अयमेव श्लोकोऽङ्गीकृतः। *अलङ्काचिन्तामणौ*[५]—

**सत्त्वं हि चेतसो वृत्तिस्तत्र जातास्तु सात्विकाः।**
**स्युस्ते च स्पर्शनालापनितम्बस्फालनादिषु॥**
**रोमहर्षणवैस्वर्यस्वेदस्तम्भालयोऽश्रु च।**
**कम्पो वैवर्ण्यमित्यष्टौ सात्विकाः परिभाषिताः॥**

इति कारिकाद्वयं सात्त्विकभावानधिकृत्य लिखितम्। *प्रतापरुद्रीये* अष्टावेव सात्त्विकभावाः वर्णिताः[६]। *रसतरङ्गिण्यां* भानुदत्तः लिखति—'जृम्भा च नवमः सात्विको भाव इति प्रतिभाति[७]।' *सरस्वतीकण्ठाभरणे* सात्विकभावविषये इयं कारिका दृश्यते—

**रजस्तमोभ्यामस्पृष्टं मनः सत्वमिहोच्यते।**
**निर्वृत्तयेऽस्यैतद्योगात् प्रभवन्तीति सात्विकाः**[८]**॥**

रसचन्द्रिकाकारः लिखति—'जृम्भितस्य नवमभेदत्वमनुपादेयम् महर्षिकृतविभागविरोधात्'[९]।

**[ १ ] स्तम्भः—**

स्तम्भस्य लक्षणं 'शरीरधर्मत्वे सति गतिनिरोधः स्तम्भ' इति *रसतरङ्गिण्यां* दृश्यते[१०]। *प्रतापरुद्रीये*[११] 'स्तम्भः स्यान्निष्क्रियाङ्गत्वं रागभीत्यादिसम्भवम्' इति उक्तम्[१२]। आचार्यविश्वेश्वरस्तु 'हर्षभयरोगविस्मयविषादमदरोषसम्भवः स्तम्भः'[१३] इति लक्षणं कृतवान्। स्तम्भस्याभिनयोऽनेन प्रकारेण कर्तव्यः—

**निश्चेष्टो निष्प्रकम्पश्च स्थितशून्यजडाकृतिः।**
**निःसंज्ञः स्तब्धगात्रं च स्तम्भं त्वभिनयेद् बुधः॥ इति।**

*अलङ्कारचिन्तामणौ*[१४] *साहित्यदर्पणे*[१५] च स्तम्भस्य विवेचनं वर्तते। स्तम्भस्योदाहरणं नैषधमहाकाव्यस्य अस्मिन् श्लोके द्रष्टुं शक्यते—

**स्तम्भस्तथालम्भितमां नलेन भैमीकरस्पर्शमुदः प्रसादः।**
**कन्दर्पलक्ष्यीकरणार्पितस्य स्तम्भस्य दम्भं स चिरं यथार्पयत्**[१६]॥

**[ २ ] स्वेदः—**

स्वेदस्य लक्षणं *रसचन्द्रिकायाम्* 'श्रमादिना दृश्यतामापन्नं गात्रजलं स्वेद इति'[१७]। *प्रतापरुद्रीये* 'वपुर्जलोद्गमः स्वेदो रतिधर्मश्रमादिभिरि'ति लक्षणं कविनोक्तम्[१८]। एवमेव *अलङ्कारचिन्तामणौ*[१९] *साहित्यदर्पणे*[२०] *रसतरङ्गिण्यामपि*[२१] विवेचनं नेत्रपथमवतरति। स्वेदस्याभिनय एवं प्रकारेण कर्तव्यः—

**व्यजनग्रहणैर्वापि स्वेदापनयनेन च।**
**स्वेदस्याभिनयो योज्यस्तथा वाताभिलाषता**[२२]॥

अस्योदाहरणमस्मिन् श्लोके वर्तते—

**प्रारब्धनिधुवनैः स्वेदजलं कोमलाङ्गि किं वहसि।**
**ज्यामपीयितुं नमिता कुसुमस्रग्धनुर्लतेव मधु**[२३]॥ **इति।**

**[ ३ ] रोमाञ्चः—**

रोमाञ्चस्य लक्षणं *रसतरङ्गिण्यां* 'विकारसमुत्थरोमोत्थानं रोमाञ्चः। अस्य विभावाः शीतालिङ्गनहर्षभयक्रोधाः' इति भानुदत्तेनोक्तम्[२४]। *प्रतापरुद्रीये*—**सुखाद्यतिशयाज्जाता रोमाञ्चो रोमविक्रिया** इति कविना भणितम्[२५]। आचार्यविश्वेश्वरस्तु—**स्पर्शभयशीतहर्षक्रोधाद्रोगाच्च रोमाञ्चः** इति विवेचनं कृतवान्[२६]। *साहित्यदर्पणे*[२७] *अलङ्कारचिन्तामणौ*[२८] च रोमाञ्चस्य सम्यक् विवेचनं द्रष्टुं शक्यते। अस्याभिनयोऽनेन प्रकारेण प्रदर्शनीयः—

**मुहुःकण्टकितत्वेन तथाङ्गाकुञ्चनेन च।**
**रोमाञ्चस्त्वभिनेयोऽसौ गात्रसंस्पर्शनेन च**[२९]॥

अस्योदाहरणमस्मिन् श्लोके—

**ये नलस्य तीक्ष्णस्य कंटका ये कदम्बकुसुमस्य केसराः।**
**अद्य तव करस्पर्शसङ्गिनस्ते भवन्ति मम अङ्गनिर्गताः**[३०]॥

**[ ४ ] स्वरभङ्गः—**

स्वरभङ्गस्य लक्षणं—'स्वरभेदो भयहर्षक्रोधजरारोगमदजनित' इति विश्वेश्वरः[३१]। *प्रतापरुद्रीये*[३२]—**मतं गद्गदभाषित्वं वैस्वर्यं प्रमदादिजम्** इति दृश्यते।

*अलङ्कारचिन्तामणौ*[३३] *साहित्यदर्पणे*[३४] *रसतरङ्गिण्यां*[३५] च अस्य लक्षणं द्रष्टुं शक्यते। अस्याभिनयः गद्गदस्वरेण कर्तव्यः[३६]। अस्योदाहरणं स्वकीयेनैव श्लोकेन प्रदत्तम्[३७]।

**[ ५ ] कम्पः—**

आचार्यविश्वेश्वरः कम्पस्य लक्षणमाह—शीतभयहर्षरोगस्पर्शजरासम्भवः कम्प इति[३८]। *प्रतापरुद्रीये*-**रागरोषभयादिभ्यो वेपथुर्गात्रकम्पनम्** इति निगदितम्[३९]। एवमेव अजितसेनेन[४०] विश्वनाथेन[४१] भानुदत्तेनापि[४२] मतं प्रदर्शितम्। अस्याभिनयः **वेपनात्सरणात्कम्पाद्वेपथुं सम्प्रयोजयेत्**[४३]। इति क्रमेण कर्त्तव्यः। अस्योदाहरणं नैषधस्य अनेन श्लोकेन पूरितम्—

**तूलेन तस्यास्तुलना मृदोस्तु कम्प्रास्तु सा मन्मथबाणपातैः।**
**चित्रीयितुं तत्तु नलो यदुच्चैरभूत्स भूभृत्पृथुवेपथुस्ते**[४४]॥

**[ ६ ] वैवर्ण्यम्—**

वैवर्ण्यस्य लक्षणं—**शीतक्रोधभयश्रमरोगक्लमतापजं च वैवर्ण्यम्** इति विश्वेश्वरेण कृतम्[४५]। *साहित्यदर्पणे*—**विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता** इति लक्षणं दृश्यते[४६]। एवमेवा*लङ्कारचिन्तामणौ*[४७] *रसतरङ्गिण्यां*[४८] *प्रतापरुद्रीये*[४९] चापि द्रष्टुं शक्यते। अस्याभिनयः—

**मुखवर्णपरावृत्या नाडीपीडनयोगतः।**
**वैवर्ण्यमभिनेतव्यं प्रयत्नादङ्गसंश्रयम्॥**

इति प्रकारेण कर्त्तव्यः[५०]। अस्योदाहरणं नैषधस्यं श्लोकेन पूरितम्[५१]।

**[ ७ ] अश्रु—**

*रसचन्द्रिकायां*[५२]; *साहित्यदर्पणे*ऽपि **अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम्** इति लक्षणं वर्तते[५३]। एवमेव *अलङ्कारचिन्तामणौ*[५४] *रसतरङ्गिण्यां*[५५] *प्रतापरुद्रीये*[५६] चापि विवेचनं दृश्यते। अस्याभिनयः—

**आनन्दामर्षाभ्यां धूमाज्ज्वलनजृम्भणादन्यत्।**
**शोकानिमेषप्रेक्षणतः शीताद्रोगादुन्नयेदस्रम्॥**

इति क्रमेण कर्तव्यः[५७]। अस्योदाहरणं तु अस्मिन् श्लोके द्रष्टुं शक्यते—

**वाष्पाम्भसा मृगदृशो विमलः कपोलः प्रक्षाल्यते सपदि राजत एव यस्मिन्।**
**गण्डूषपेयमिव कान्त्यमृतं पिपासुरिन्दुर्निवेशितमयूखमृणालदण्डः**[५८]॥

**[ ८ ] प्रलयः—**

प्रलयस्य लक्षणं *प्रतापरुद्रीये*—**प्रलयः सुखदुःखाद्यैर्गाढमिन्द्रियमूर्च्छनम्** इत्युक्तम्[५९]। *रसचन्द्रिकायां* 'चेष्टा-निरोधः प्रलयः' इति लक्षणं दृष्टिगोचरं भवति[६०]।

एवमेव *साहित्यदर्पणे*[६१], *रसतरङ्गिण्यां*[६२], *अलङ्कारचिन्तामणौ*[६३] च विवेचनं दृश्यते। प्रलयस्य चेष्टा च प्रयत्नवदात्मसंयोगजन्या शरीरक्रिया इति[६४]। अस्योदाहरणम्—

**व्यापरविसंवादं सकलावयवानां करोतीह च लज्जा।**
**श्रवणयोः पुनर्गुरुजनपुरोऽपि न निरूप्यते नियोगः[६५]॥**

## सन्दर्भ-संकेत

१. रसचन्द्रिका, पृ. ८२।
२. रसतरङ्गिणी, पृ. ३१८।
३. रसमञ्जरी, पृ. १९८।
४. रसचन्द्रिका, पृ. ८३।
५. अलङ्कारचिन्तामणिः, पृ. २२९।
६. प्रतापरुद्रीयम्, पृ. १४८।
७. रसतरङ्गिणी, पृ. ३३२।
८. सरस्वतीकण्ठाभरणम्, ४-२०।
९. र.च.; पृ. ८३।
१०. र.त., पृ. ३२२।
११. प्र.रु., पृ. १५८।
१२. र.च., पृ. ८३।
१३. र.च., पृ. ८३।
१४. भीतिरागादिना स्तम्भः कायनिष्क्रियता यथा—
अ.चि., पृ. २३०।
१५. स्तम्भश्चेष्टाप्रतीघातो भयहर्षामयादिभिः—
सा.द., पृ. ९४।
१६. र.च., पृ. ८३।
१७. र.च., पृ. ८३।
१८. प्र.रु., पृ. १५९।
१९. रत्यातपादिसंजातः स्वेदस्तनुजलोद्गमः।
स्मरेण कीर्णपुष्पा वा तदङ्गे घर्मविन्दवः॥
—अ.चि., पृ. २३०।
२०. वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः।
—सा.द., पृ. ९४।
२१. वपुषि सलिलोद्गमः स्वेदः। अस्य विभावा मनस्ताप-हर्षलज्जाक्रोधभयश्रमपीडाघातमूर्च्छा।—र.त., पृ. ३२४।
२२. र.च., पृ. ८३।
२३. र.त., पृ. ८३।
२४. र.च., पृ. ३२५।
२५. प्र.रु., पृ. १५८।
२६. र.च., पृ. ८३।
२७. हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया।
—सा.द., पृ. ९४।
२८. रोमाञ्चः पुलकोत्पत्तिः सुखाद्यतिशयाद्यथा।
—अ.चि., पृ. २३०।
२९. र.च., पृ. ८४।
३०. र.च., पृ. ८४।
३१. र.च., पृ. ८४।
३२. प्र.रू., पृ. १६०।
३३. वैवर्ण्यं गद्गदालापः प्रमोदाद्युद्भवो यथा।
—अ.चि., पृ. २३।
३४. मदसंमदपीडाद्यैर्वैवर्ण्यं गद्गदं विदुः।—सा.द., पृ. ९।
३५. गद्गदत्वप्रयोजकीभूतस्वरस्वभाववैजात्यं स्वरभङ्गः। अस्य विभावाः क्रोधभयहर्षमदाः।—र.च., पृ. ३२६।
३६. र.च., पृ. ८४।
३७. निपीतवत्या मधु सन्दधानः प्रसूनधन्वानममन्तभावः।
क्षणेन मन्दाक्ष इवेन्दुमत्याः स्वरोऽपि भङ्गांबिभरीबभूव।
—र. च., पृ. ८४।

३८. र.च., पृ. ८४।
३९. प्र.रू., पृ. १५९।
४०. भीरोषतोषणादिभ्यः कम्पोऽङ्गात्कम्पनं यथा।
–अ.चि., पृ. २३१।
४१. रोषश्रमादिभिः कम्पो गात्रस्य वेपथुः ॥–सा.द., पृ. ९४।
४२. भावत्वे सति शरीरनिष्पन्दो वेपथुः।–र.त., पृ. ३२७।
४३. र.च., पृ. ८४।
४४. र.च., पृ. ८४।
४५. र.च., पृ. ८४।
४६. सा.द., पृ. ९४।
४७. मदरोषविषादादेर्वैवर्ण्यं भिन्नवर्णता।–अ.चि., पृ. २३१।
४८. विकारप्रभवप्रकृतवर्णान्यथाभावो वैवर्ण्यम्। अस्य विभावा मोहभयक्रोधशीततापश्रमाः॥
–र.त., पृ. ३२८।
४९. विषादमदरोषादेर्वर्णान्यत्वं विवर्णता।–प्र.रू., पृ. १५९।
५०. र.च., पृ. ८४।
५१. कुसुमचापजतापसमाकुलं कमलकोमलमैक्ष्यत तन्मुखम्। अहरहर्वहदभ्यधिकाधिकां रविरुचिग्लपितस्य विधोर्विधाम्॥ –र.च., पृ. ८४।
५२. र.च., पृ. ८५।
५३. सा.द., पृ. ९४।
५४. दोषरोषातिदुःखाद्यैरश्रु नेत्रोदकं यथा।
–अ.चि., पृ. २३१।
५५. विकारजनितमक्षिसलिलमश्रु। अस्य विभावा हर्षामर्षधूमभयशोकजृम्भाशीतनिर्निमेषप्रेक्षणानि।
–र.त., पृ. ३२२।
५६. अश्रु नेत्रोद्भवं वारि दुःखरोषप्रहर्षजम्।
५७. र.च., पृ. ८५।
५८. र.च., पृ. ८५।
५९. प्र.रू., पृ. १५८।
६०. र.च., पृ. ८५।
६१. प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः।
–सा.द., पृ. ९४।
६२. शरीरत्वे सति चेष्टानिरोधः प्रलयः।–र.त., पृ. ३३०।
६३. सुखदुःखादिनाक्षाणां मूर्च्छनं प्रलयो दृढम्।
–अ.चि., पृ. २३०।
६४. र.च., पृ. ८५।
६५. र. च., पृ. ८५।

[ इति ]

# न्याय-दर्शन में प्रत्यक्ष प्रमाण-विचार

□ **मुरारि पि० भट्ट**

**दर्शन** अर्थात् तत्त्व का साक्षात्कार करना, त्रिविध ताप से मुक्त होना मानव मन का लक्ष्य है। इसकी प्राप्ति के लिए जगत् नियन्ता का साक्षात्कार ही परम लक्ष्य है। **तमेव विदित्याऽतिमृत्युमेति नान्य पन्थाः विद्यतेऽयनाय**। (शु. य. मा. सं. ३१।९५)। 'दर्शन' शब्द तत्त्वचिन्तन के अर्थ में प्रयुक्त होता है। यह शब्द कब से शुरु हुआ? 'दर्शन' शब्द का सर्वप्रथम प्रयोग कणाद के वैशेषिक सूत्र में हुआ है ऐसा दासगुप्ता का मत है। 'दर्शन' शब्द 'दृश्' धातु से निष्पन्न होता है। इसका मूल अर्थ है साक्षात् अनुभव—दृश्यते अनेन इति दर्शनम्। सृष्टि कर्त्ता कौन? चेतन या अचेतन? आदि प्रश्नों का समाधान दर्शन द्वारा प्राप्त होता है। 'दर्शन'-शब्द की व्युत्पत्ति आगम-ग्रन्थों में है।

**शासनात् शंसनात् वापि शास्त्रमित्यभीधीयते।**
**शासनं द्विविधं प्रोक्तं शास्त्रलक्षणवेदिभिः।**
**शंसनं भूतवस्त्वेकविषयं न क्रियापरम्।**

शास्त्र की व्युत्पत्ति दो धातुओं से है—शास् अर्थात् आज्ञा करना, शंस् यानी वर्णन करना। शासन-शास्त्र क्रियापरक होता है, पर शंसन-शास्त्र ज्ञानपरक होता है। धर्मशास्त्र कर्तव्याकर्तव्य का प्रधानतया विधान करने से पुरुष परतन्त्र है, पर दर्शनशास्त्र वस्तु के स्वरूप के प्रतिपादक होने से वस्तुतंत्र है। 'आत्मानं विद्धि' भारतीय दर्शन का मूलमंत्र है। वैदिक धर्म के स्वरूपानुसंधान के लिए न्याय परम उपादेय है। मनु कहते हैं—

**आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।**
**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥** १२.१०६

वात्स्यायन न्यायविद्या को समस्त विद्याओं का प्रदीप तथा धर्म का आश्रय बताते हैं—

**प्रदीपः सर्वविद्यानामुपायः सर्व कर्मणाम्।**
**आश्रयः सर्वधर्माणां विद्योदेशे प्रकीर्तिताः॥** न्या. भा. १.१.१

**'न्यायेन हि सर्वविद्यानां प्रामाण्यं समर्थ्यते'** (भासर्वज्ञ, न्यायभूषण)।

प्रत्येक भारतीय दर्शन प्रमाण के विषय में अलग-अलग मीमांसा करता है। प्रमाण में भी अनुमान न्याय का प्रमुख विषय है, जिसे 'अन्वीक्षा' कहते हैं। जो अनुमान से प्रवृत्त होता है वह 'आन्वीक्षिकी, न्यायविद्या अर्थात् न्यायशास्त्र है—

**'प्रत्यक्षागमाश्रितम् अनुमानं सान्वीक्षा, प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा-तया प्रवर्तत इत्यान्वीक्षिकी-न्यायविद्या-न्यायशास्त्रम्'** (वा. भा. १.१.१)।

'न्याय'-शब्द नि + आ + √इ धातु से निष्पन्न हुआ। नियमपूर्वक गति करना न्याय है। न्याय-शब्द का एक विशिष्ट पारिभाषिक अर्थ है—प्रतिज्ञा-हेतु-उदाहरण-उपनय तथा निगमन नामक परार्थानुमान के पञ्चावयव। दूसरा नाम है आन्वीक्षिकी अर्थात् अन्वीक्षा के द्वारा प्रवर्तित होने वाली विद्या। प्रमाण की मीमांसा के कारण न्याय दर्शन को 'प्रमाणशास्त्र' भी कहते हैं।

**प्रमा** चार प्रकार की होती है। प्रत्यक्ष-अनुमिति-उपमिति-शब्द। इन्द्रिय और अर्थ के संयोग से उत्पन्न अनुभव प्रत्यक्ष, अनुमान से साध्य अनुभव अनुमिति, सादृश्य ज्ञान द्वारा उत्पन्न अनुभव उपमिति और शब्द की सहायता से उत्पन्न अनुभव शब्द कहलाता है। प्रमा को प्राप्त करने का करण है प्रमाण। प्रमा का विषय प्रमेय है। प्रमाण शब्द 'करण' अर्थ में ल्युट् प्रत्यय से निष्पन्न होता है। प्रमीयते अनेन इति प्रमाणम्। प्रमाण साधन है—प्रमा उसी का फल है।

**प्रत्यक्ष की व्याख्या—**

न्यायसूत्रकार **'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'** इस सूत्र द्वारा प्रमाण के चार प्रकार बताते हैं। प्रत्यक्ष प्रमाण की सहायता बिना कोई भी प्रमाण की सत्ता सिद्ध न हो सकती। इसलिए गौतम ने प्रथम उल्लेख किया है। व्याख्या है कि—**'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्'**। न्यायसूत्रकार तीन विशेषण प्रयुक्त करते हैं—

**अव्यपदेश्य—** अर्थात् शब्द द्वारा जिसका बोध न कराया जा सके। फलतः इन्द्रियार्थसन्निकर्षोत्पन्न वह अर्थज्ञान अशाब्द अव्यपदेश्य है।

**अव्यभिचारी—** अन्य पदार्थ में अन्य का ज्ञान हो जाना व्यभिचारी ज्ञान है। इन्द्रियार्थसन्निकर्ष से उत्पन्न वही ज्ञान प्रत्यक्ष ज्ञान है जो अव्यभिचारी हो।

**व्यवसायात्मक—** जो ज्ञान निश्चय के स्तर तक पहुँच सके वह प्रत्यक्ष है। 'व्यवसाय' पद का अर्थ है निर्धारण।

शंका होती है कि आत्ममनःसन्निकर्ष और मन-इन्द्रियसन्निकर्ष प्रत्यक्ष ज्ञान में कारण है, तो इन्द्रियार्थ सन्निकर्ष का ही उल्लेख क्यों? तो सूत्रकार समाधान करते हैं कि **प्रत्यक्षनिमित्तत्वादिन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम्** (१.१.४)। इन्द्रियार्थ-सन्निकर्ष केवल प्रत्यक्ष ज्ञान का निमित्त है। आत्ममनःसन्निकर्ष प्रत्यक्ष-अनुमिति-उपमिति-शब्द आदि में कारण होता है। इन्द्रियार्थ-सन्निकर्ष केवल प्रत्यक्ष ज्ञान में कारण है, जो ज्ञान सामान्य में कारण है इसका उल्लेख प्रत्यक्ष ज्ञान-विशेष के लक्षण में अनुपयुक्त है, जो केवल प्रत्यक्ष ज्ञान में कारण है अन्यत्र नहीं, इसका निर्देश सूत्र में है।

शंका होती है कि इन्द्रियसन्निकर्ष से जो ज्ञान होता है वही प्रत्यक्ष है; लेकिन वस्तुतः वह समस्त पदार्थ के साथ सन्निकर्ष होता नहीं। उदाहरण, वृक्ष का सारा भाग देखा नहीं जा सकता फिर भी वृक्ष देखा ऐसा बोलते हैं। वस्तुतः जो दिखायी देता है केवल वही वृक्ष नहीं है, बल्कि वह भी है जो दिखायी नहीं पड़ता है, जिसका अनुमान द्वारा ज्ञान होता है। इसीलिए वृक्ष है ऐसा प्रत्यक्ष नहीं, लेकिन अनुमान स्वीकार करना चाहिए। इसी शंका का समाधान करते हुए सूत्रकार कहते हैं— **न प्रत्यक्षेण यावत्तावदप्युपलम्भात्** ( २.१.३१. न्यायदर्शनम् )।

अनुमान का लक्षण है कि वह प्रत्यक्षपूर्वक होता है। प्रत्यक्ष को अस्वीकार करने से अनुमान की प्रवृत्ति न हो सकती। अनुमान को स्वीकार करने का अर्थ यही होता है कि प्रत्यक्ष को स्वीकार किया। कालान्तर में धूमहेतु का प्रत्यक्ष ज्ञान किये बिना अनुमान की प्रवृत्ति न हो सकती। प्रत्यक्ष धूमज्ञान को अनुमेयज्ञान कहा नहीं जा सकता। क्योंकि इन्द्रियार्थ-सन्निकर्ष से उत्पन्न होता है—अनुमेय पदार्थ का इन्द्रिय के साथ सन्निकर्ष होने से अनुमितिज्ञान नहीं होता, यही भेद स्मरणीय है।

**प्रकार—**

न्यायसूत्र में भेद नहीं है लेकिन वाचस्पति मिश्र ने दो भेद बताये हैं—

**( १ ) निर्विकल्पक—** प्रत्यक्ष में विशेषण-विशेष्य संबन्धरहित नाम जातिरहित जो ज्ञान वह निर्विकल्पक है। अनुमान से उसका अस्तित्व सिद्ध होता है। विशेषण-विशेष्य-सम्बन्धानवगाहि ज्ञानम् इत्यर्थः। दूरस्थित वस्तु का स्वरूप रूप आदि का ज्ञान उसी वक्त नहीं होता है ये नाम जात्यादि कल्पना से रहित ज्ञान निर्विकल्पक हैं। घट-घटत्व का ज्ञान अलग है, लेकिन दोनों ज्ञान में विशेष्य-विशेषण भाव नहीं होता है। वह निर्विकल्पक है, यह अतीन्द्रिय है।

**( २ ) सविकल्पक—** यही 'घट' है। अर्थात् 'उद्देश्य' के साथ विधेय संलग्न होता है। यही वस्तु उद्देश्य है और घटत्व जाति से विधेय है। विशेष्य-विशेषण भाव से युक्त है। जिसमें यही वस्तु ( घट ) विशेष्य है और घटत्व विशेषण है। विशेष्य-विशेषण-भाव युक्त ज्ञान ही सविकल्पक प्रत्यक्ष है। प्रत्यक्ष ज्ञान को प्रत्यक्षात्मक ज्ञानवाक्य कहते हैं। मानसशास्त्र 'Sensation' और 'Perseption' की जो बात करते हैं वही निर्विकल्पक सविकल्पक प्रत्यक्ष में भी है।

श्री आथल्ये प्रत्यक्ष के भेद इसी तरह दिखाते हैं—




प्रत्यक्ष का लौकिक अलौकिक भेद है। लौकिक के दो भेद हैं— **बाह्य और आंतर।** बाह्य प्रत्यक्ष पाँच ज्ञानेन्द्रियों के द्वारा साध्य होने से पाँच प्रकार का है। मानस प्रत्यक्ष केवल एक प्रकार का है। इस प्रकार लौकिक प्रत्यक्ष के छह प्रकार हुए। अलौकिक प्रत्यक्ष के तीन भेद हैं—

**( १ ) सामान्य लक्षणा—** धूम को देखते 'धूमत्व' नामक सामान्य धर्म के द्वारा सारे धूमों का प्रत्यक्ष होता है। घटयुक्त भूतल देखकर घट नामक सामान्य धर्म के द्वारा घट वाले भूतलों का प्रत्यक्ष होता है। इस

प्रकार सामान्य धर्म लेकर उसी के सामान्य रूप सन्निकर्ष बन जाने से उस सामान्य धर्म से युक्त सारे अधिकरणों की प्रतीति एक अलौकिक प्रत्यक्ष है—उसको सामान्य लक्षण सन्निकर्ष कहते हैं।

**( २ ) ज्ञान लक्षणा—** पुष्प के रमणीय रूप के साथ पुष्प की सुगन्ध का ज्ञान भी होता है। रूप सौन्दर्य के साथ-साथ जो सुगन्ध का ज्ञान होता है, वह ज्ञान लक्षण अलौकिक प्रत्यक्ष है।

**( ३ ) योगज— न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लोकप्रत्यक्षेण ग्रहणम्।** सामान्य मानव किसी वस्तु को प्रत्यक्ष न कर सके। सूक्ष्म व्यवहित तथा विप्रकृष्ट वस्तुओं का ग्रहण लोक-प्रत्यक्ष के द्वारा सिद्ध नहीं हो सकता। लेकिन अनुभव होता है। अतः इनके लिए प्रणिधान की सहायता अपेक्षित होती है। योगीजन अलौकिक सन्निकर्ष से इस तरह की वस्तु को प्रत्यक्ष देख सकते हैं। इसे योगज सन्निकर्ष कहते हैं।

न्यायदर्शन की दो धाराएँ हैं। प्रथम धारा गौतम के सूत्र है, और दूसरी धारा गंगेश उपाध्याय की **तत्त्वचिन्तामणि** है। प्रथम धारा 'पदार्थमीमांसात्मक' और दूसरे को 'प्रमाणमीमांसात्मक' कहते हैं। दोनों धाराओं में पर्याप्त अन्तर है। प्राचीन न्याय अध्यात्म प्रधान है और नव्यन्याय शुष्क तर्कप्रधान।

प्रत्यक्ष प्रमाण की अन्य व्याख्या गंगेश करते हैं कि वही ज्ञान प्रत्यक्ष है जिसमें अन्य कोई ज्ञान करण रूप अथवा साधन रूप न हो। **ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्।**

प्रत्यक्ष की अन्य आचार्यों ने व्याख्या प्रस्तुत की है—

– साक्षात्कारि प्रमाकरणम्— केशव मिश्र।
– प्रतिविषयाध्यवसायो दृष्टम्— सांख्य।
– आत्मेन्द्रियमनोऽर्थात् प्रवर्तते सन्निकर्ष-
  व्याप्ता तथात्वे च बुद्धि प्रत्यक्षं सा निरुच्यते।। चरक सं० ११.२०।
– अक्षम् अक्षं प्रतीत्य उत्पद्यते यत् ज्ञानं तत् प्रत्यक्षम्।
– प्रतिगतं अक्षं प्रत्यक्षम्।
– साक्षात् प्रतीतिः प्रत्यक्षम्— रामानुज।

**अन्य दर्शनों में प्रत्यक्ष प्रमाण—**

जैन दार्शनिकों के मत में इन्द्रियों की मदद के बिना प्रत्यक्ष हो सकता है। जैन जाति को सादृश्य मानते हैं, इसी तरह जाति के अस्तित्व को मान्य नहीं करते। सांख्य और **भाट्ट**मीमांसक मानते हैं कि निर्विकल्पक और सविकल्पक दोनों प्रत्यक्ष यथार्थ हैं। चार्वाक तथा विशिष्टाद्वैतवादी निर्विकल्पक प्रत्यक्ष को स्वीकार नहीं करते। अन्य प्रमाण से प्राप्त ज्ञान उन्हीं के मत से अस्पष्ट और सन्देहमूलक होते हैं। रामानुज मानते हैं कि निर्विकल्पक प्रत्यक्ष में वस्तु का सविशेष ज्ञान होता है लेकिन सविकल्पक की तरह **सविस्तृत** नहीं है। दोनों में स्वरूपगत भिन्नता नहीं होती, केवल ज्ञान के विस्तार में थोड़ा या ज्यादापन रहता है।

बौद्ध दर्शन सविकल्प प्रत्यक्ष को स्वीकार नहीं करते। क्योंकि वह सारोपित होने से सच्चा ज्ञान नहीं है। प्रथम क्षण में वस्तु का जो प्रत्यक्ष होता है वही सत्य लक्षण होने से प्रत्यक्ष प्रमाण है। बाद में जो ज्ञान होता है उसका विकल्प समाविष्ट होने से प्रत्यक्ष शुद्ध-यथार्थ नहीं है और अशुद्ध होने से बौद्ध दर्शन में अस्वीकार

है। बौद्ध मानते हैं कि सामान्य जैसा कुछ नहीं है फलतः सामान्य में से उत्पन्न सविकल्पक प्रत्यक्ष स्वीकार्य नहीं है। लेकिन न्याय में सामान्य एक भावपदार्थ है इसीलिए सामान्य विषयक सविकल्पक प्रत्यक्ष भी यथार्थ ही है।

**विभिन्न संप्रदायों में स्वीकृत प्रमाणों की संख्या[१]**

| दर्शन | स्वीकृत प्रमाण | प्रमाण संख्या |
|---|---|---|
| (१) चार्वाक | प्रत्यक्ष | १ |
| (२) वैशेषिक-बौद्ध | प्रत्यक्ष-अनुमान | २ |
| (३) सांख्य-योग | प्रत्यक्ष-अनुमान-शब्द | ३ |
| (४) न्याय | प्रत्यक्ष-अनुमान-शब्द-उपमान | ४ |
| (५) मीमांसा-प्रभाकर | प्रत्यक्ष-अनुमान-उपमान शब्द-अर्थापत्ति | ५ |
| (६) मीमांसा-कुमारिल | प्रत्यक्ष-अनुमान-शब्द उपमान-अर्थापत्ति-अनुपलब्धि | ६ |
| (७) वेदान्त-शंकर | प्रत्यक्ष-अनुमान-शब्द-उपमान-अर्थापत्ति-अनुपलब्धि-अनुभूति | ७ |

इस तरह प्रत्यक्ष प्रमाण न्यायदर्शन की पहली पहचान है। प्रत्यक्ष ही अनिवार्यतः प्रथम उल्लेखित न्याय सूत्रकार ने किया है। प्रत्यक्ष ही केवल ऐसा एक प्रमाण है कि सभी दर्शनों ने– चाहे आस्तिक हो या नास्तिक– स्वीकार किया है।

## सन्दर्भ संकेत

१. डॉ. रानाडे— Vedanta-crimination of Indian thought, p. 36-73. **[इति]**

# प्राचीन आचार्य-परम्परा : एक दृष्टि

□ नत्थूलाल गुप्त

**आचार्य-स्वरूप**

महाभारत का कथन[1] है कि आचार्य के उपदेश के बल पर ही शिष्य के हृदय में ज्ञान अंकुरित एवं पल्लवित होता है। अतः ज्ञान के क्षेत्र में विशेषतः परा एवं अपरा विद्या के क्षेत्र में आचार्य की अपरिहार्यता चिरकाल से रही है। आचार्य के इस गुरुत्व को ध्यान में रखकर ही भारतीय परम्परा उसे सम्यक् आदर एवं प्रतिष्ठा प्रदान करती रही है। आचार्य की प्रतिष्ठा का प्रमुख कारण था उसका गरिमामय चरित्र। वे सदाचरण को न केवल विद्यार्थियों में स्थापित करते अपि तु स्वयं भी अपनी विद्या के अनुकूल आचरण करते थे। वे यमनियमशील होकर सतत शास्त्राभ्यास के द्वारा विविध शास्त्रों का रहस्योद्घाटन करते थे—

**स्वयमाचरति यस्माद् आचारं स्थापयत्यपि।**
**आचिनोति च शास्त्रार्थान् यमैः सनियमैर्युतः[2]॥**

उपर्युक्त कथन से यह स्पष्ट है कि आचार्यत्व की प्राप्ति के लिए सदाचरण के साथ-साथ शास्त्रों का गहन आलोडन भी अनिवार्य था। ऐसा करने से ही उनमें शास्त्रोपपत्ति की क्षमता आती थी और वे आचार्यत्व से विभूषित होते थे। शिष्टता आचार्य का एक अनिवार्य लक्षण था। बिना शिष्टता के कोई आचार्य नहीं माना जाता था। 'विद्या विनयेन शोभते' यह उक्ति उसी तथ्य का फलितार्थ है। वास्तविकता यह थी कि शिष्टता के बिना विद्या-प्राप्ति असम्भव मानी जाती थी। शिष्टता का घनिष्ठ सम्बन्ध अध्येता अथवा अध्यापक के आचरण से माना जाता था। दम्भ, दर्प, क्रोध, मोह, अहंकार, मात्सर्य आदि दुर्गुणों से रहित व्यक्ति को ही शिष्ट कहा गया है।[3]

शुक्रनीति के अनुसार मीमांसा, न्याय, वेदान्त-व्याकरण में तत्पर, तर्क का ज्ञाता, बोध कराने में समर्थ और तत्त्व का ज्ञाता शास्त्रवित् होता है—

**मीमांसातर्कवेदान्तशब्दशासनतत्परः।**
**ऊहवान्बोधितुं शक्तस्तत्त्वतः शास्त्रविच्च सः[4]॥**

किन्तु जो व्यक्ति वेद का ज्ञाता और श्रुति, स्मृति, पुराणों के पठन-पाठन में समर्थ हो उसे श्रुतज्ञ कहा गया है[5]। महाकाव्यकाल में हमें शास्त्रवित् और श्रुतज्ञ के बीच कोई व्यावर्तक रेखा नहीं दिखाई पड़ती। एक ही व्यक्ति श्रुतज्ञ और शास्त्रज्ञ दोनों होते थे। वास्तव में ऐसे मनीषी ही आचार्यत्व के अधिकारी होते थे। ऐसे आचार्य की सेवा करके वेद का मर्म समझकर साधक इष्ट-प्राप्ति में सफल होता था[6]।

मनु ने उस ब्राह्मण को, जो शिष्य का यज्ञोपवीत संस्कार करके उसे कल्प ( यज्ञविद्या ) तथा रहस्यों ( उपनिषदों ) के सहित वेदशाखा पढ़ावे, उसे 'आचार्य' और जो जीविकार्थ वेद के एकदेश ( मन्त्र तथा ब्राह्मण भाग ) को

